महदादि । योगोप्योङ्कारादिध्यानधारणादिः । विधिस्त्रिषवणस्नानादिर्गूढचर्यावसानो (१)दुःखान्तो मोक्षः । पशव आत्मानस्तेषां पाशो बन्धनं तद्विमोक्षो दुःखान्तः । एष तेषामभिसन्धिः—चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणत्वमात्रं न तूपादानत्वमपि (२) । तस्मादिहापीश्वरोऽधिष्ठाता जगत्कारणानां निमित्तमेव, न तूपादानमप्येकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधादिति प्राप्तम् ।

एवं प्राप्ते ऽभिधीयते—'पत्युरसामञ्जस्यादि'ति । इदमत्राकूतम्—ईश्वरस्य निमित्तकारणत्वमात्रमागमाद्वोच्येत प्रमाणान्तराद्वा ? प्रमाणान्तरमप्यनुमानमर्थापत्तिर्वा ? न तावदागमात्, तस्य निमित्तोपादानकारणत्वप्रतिपादनपरत्वादित्यसकृदावेदितम् । तस्मादनेनास्मिन्नर्थे प्रमाणान्तरमास्थेयम् । तत्रानुमानं तावन्न सम्भवति(३) । (४)तद्धि दृष्टानुसारेण प्रवर्तते तदनुसारेण चासामञ्जस्यम् । तदाह—"हीनमध्यमे"ति । एतदुक्तं भवति—आगमादीश्वरसिद्धौ न दृष्टमनुवर्तव्यं, नहि स्वर्गापूर्वदेवतादिष्वागमादवगम्यमानेषु किंचिदस्ति दृष्टम्, नह्यागमो दृष्टसाधर्म्यात्प्रवर्तते, तेन श्रुतस्तिद्ध्यर्थमदृष्टानि दृष्टविपरीतस्वभावानि सुबहून्यपि कल्प्यमानानि न(५) लोहगन्धितामावहन्ति प्रमाणवत्त्वात् । यस्तु तत्र कथंचिद् दृष्टानुसारः क्रियते स सुहृद्भावमात्रेणागमानपेक्षितमनुमानं तु दृष्टसाधर्म्येण प्रवर्तमानं दृष्टविपर्यये तूपादपि बिभेतितरामिति । प्राणिकर्मापेक्षत्वाददोष इति चेत् । न । कुतः? कर्मेश्वरयोर्मिथः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयत्वदोषप्रसङ्गात् । अयमर्थः—यदीश्वरः करुणापराधीनो वीतरागस्ततः प्राणिनः कपूये कर्मणि न प्रवर्तयेत्तच्चोत्पन्नमपि नाधितिष्ठेत् तावन्मात्रेण प्राणिनां दुःखानुत्पादात् , नहीश्वराधीना जनाः स्वातन्त्र्येण कपूयं कर्म कर्तुमर्हन्ति, तदनधिष्ठितं वा कपूयं (६)कर्म फलं प्रसोतुमुत्सहते । तस्मात्स्वतन्त्रोऽपीश्वरः कर्मभिः प्रवर्त्यत इति दृष्टविपरीतं कल्पनीयम् । तथ च यमपरो गण्डस्योपरि स्फोट इतरेतराश्रयः प्रसज्येत, कर्मणेश्वरः प्रवर्तनीय ईश्वरेण च कर्मेति । शङ्कते—"अनादित्वादिति चेत्" पूर्वकर्मणेश्वरः सम्प्रतितने कर्मणि प्रवर्त्यते तेनेश्वरेण सम्प्रतितनं कर्म स्वकार्ये प्रवर्त्यत इति । निराकरोति । "न, वर्तमानकालवदि"ति । अथ पूर्वं कर्म कथमीश्वराप्रवर्तितमीश्वरप्रवर्तनलक्षणं कार्यं करोति, (७)तत्रापि प्रवर्तितमीश्वरेण पूर्वतनकर्मप्रवर्तितेनेत्येवमन्धपरम्परा ।

---

(१) गूढचर्या—स्वगुणाप्रख्यापनेन देशेषु वासः ।

(२) अनेन ईश्वरो न द्रव्योपादानं चेतनत्वात्कुलालवदित्यनुमानं सूचितम् ।

(३) तदात्मानं स्वयमकुरुतेत्यादिश्रुत्या बाधादित्यर्थः । नन्वाद्यं कार्यं सकर्तृकं कार्यत्वात्कुम्भवदित्यनुमानमेवेश्वरस्यानुपादानत्वे मानं स्यादिति चेन्न । जीवादृष्टजन्यत्वेन सिद्धसाधनात् । अव्यवहितप्राक्कालवर्तिप्रयत्नजन्यत्वसाधने चाद्यकार्यव्यवहितप्रयत्नजन्यत्वस्य कुम्भेऽभावेन साध्यवैकल्यात् । एवं द्व्यणुकं द्व्यणुकोपादानसाक्षात्कारवज्जन्यं कार्यत्वादित्याद्यनुमानमपि अप्रसिद्धविशेषणविशेष्यत्वाभ्यां द्व्यणुकस्य तदुपादानसाक्षात्कारस्य चाविद्या दृष्टान्ते सन्दिग्धसाध्यत्वेन चाभासमित्यवधेयम् ।

(४) यथा चेतनस्य निमित्तत्वमात्रमनुमीयते तथा रागादिकमप्यनुमेयं व्याप्तेरविशेषात्तथा च बाधाभिमतनिरवद्यत्वविशेषविरुद्धोऽयं हेतुरित्याह तद्धीति ।

(५) कलङ्कगन्धिताम् । (६) कुत्सितम् ।

(७) नन्वीश्वरेण पूर्वं कर्म तावत्प्रवर्तयितुं न शक्यते कुत्सितफलानुदयप्रसङ्गात्, एवं पूर्वकर्मेश्वराप्र-

दोषः, चक्षुष्मता ह्यन्धो नीयते नान्धान्तरेण, तथेहापि द्वावपि (१)प्रवर्त्याविति कः कं प्रवर्तयेदित्यर्थः। अपि च नैयायिकानामीश्वरस्य निर्दोषत्वं स्वसमयविरुद्धमित्याह—"अपि चे"ति। (२)अस्माकं तु नायं समय इति भावः। ननु कारुण्यादपि प्रवर्तमानो जनो दृश्यते न च कारुण्यं दोष इत्यत आह—"स्वार्थप्रयुक्त एव चे"ति। कारुण्ये हि सत्यस्य दुःखं भवति तेन तत्प्रहाणाय प्रवर्तत इति कारुणिका अपि स्वार्थप्रयुक्ता एव प्रवर्तन्त इति। ननु स्वार्थप्रयुक्त एव प्रवर्ततामेवमपि को दोष इत्यत आह "स्वार्थवत्त्वादीश्वरस्ये"ति। अर्थित्वादित्यर्थः। पुरुषस्य चौदासीन्याभ्युपगमान्न वास्तवी प्रवृत्तिरिति ॥३७॥

अपरमपि दृष्टानुसारेण दूषणमाह—

**संबन्धानुपपत्तेश्च ॥ ३८ ॥**

दृष्टो हि सावयवानामसर्वगतानां च संयोगः। अप्राप्तिपूर्विका हि प्राप्तिः संयोगो, न सर्वगतानां संभवत्यप्राप्तेरभावान्निरवयवत्वाच्च। अव्याप्यवृत्तिता हि संयोगस्य स्वभावो, न च निरवयवेष्वव्याप्यवृत्तिता संयोगस्य सम्भवतीत्युक्तम्। तस्मादव्याप्यवृत्तितायाः संयोगस्य व्यापिकाया निवृत्तेस्तद्व्याप्यस्य संयोगस्य विनिवृत्तिरिति भावः। नापि समवायलक्षणः स ह्ययुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः संबन्ध इत्यभ्युपेयते, न च प्रधानपुरुषेश्वराणां मिथोऽस्त्याधाराधेयभाव इत्यर्थः। नापि योग्यतालक्षणः कार्यगम्यसम्बन्ध इत्याह "नान्यत्य" इति। नहि प्रधानस्य महदहंकारादिकारणत्वमद्यापि सिद्धमिति शङ्कते—"ब्रह्मवादिन" इति। निराकरोति। "न" कुतस्तस्य मतेऽनिर्वचनीयतादात्म्यलक्षणसंबन्धोपपत्तेः। "अपिचे"ति। आगमो हि प्रवृत्तिं प्रति न दृष्टान्तमपेक्षते इत्यदृष्टपूर्वे तद्विरुद्धे च प्रवर्तितुं समर्थः, अनुमानं तु दृष्टानुसारि नैवंविधे प्रवर्तितुमर्हतीति शङ्कते-(३) "परस्यापी"ति। परिहरति-"ने"ति। (४) अस्माकं त्वीश्वरागमयोरनादित्वादीश्वरयोनित्वेऽप्यागमस्य न विरोध इति भावः ॥ ३८ ॥

**अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥**

(५)यथादर्शनमनुमानं प्रवर्तते नालौकिकार्थविषयमितीहापि न प्रत्येतव्यम्। सुगममन्यत ॥ ३९ ॥

---

वर्तितं कथमीश्वरप्रवर्तनलक्षणकार्यं करोति? एवं सति प्रवर्तकत्वोपपात्तमनुक्त्वा केवलं ततः पूर्वकर्मैवालम्ब्यते तत्राह तत्रापीति। तत्रापीश्वरप्रवर्तने स्वकार्ये पूर्वं कर्म ततः पूर्वभाविकर्मप्रवर्तितेनेश्वरेण प्रवर्तितमिति वक्तव्यं तथा च सर्वत्रानुपपत्तिसाम्यादन्धपरम्परेत्यर्थः।

(१) कर्मेश्वरौ।

(२) अस्माकन्त्विति। मायामय्यां प्रवृत्तौ सर्वसम्भवात्राक्षेप उचित इति भावः।

(३) एवं श्रुतेरनुमानेश्वरासिद्धिं निरस्य पौरुषेयागमात्तत्सिद्धिर्निरस्यत इत्याह परस्यापीति।

(४) अस्माकन्त्विति। शास्त्रयोनित्वेपीश्वरस्यानादिसिद्धनियतक्रमापेक्षणान्नेश्वराधीनं वेदस्य प्रामाण्यं किन्तु स्वतः, यथा देवदत्तकृतत्वेपि दीपस्य प्रकाशनशक्तिमत एव कृतत्वान्न देवदत्तापेक्षं तस्य प्रकाशकत्वं तद्वदिति भावः।

(५) ननु नीरूपस्याधिष्ठेयत्वानुपपत्तिर्मायायामपि समानेत्यत आह यथादर्शनमिति।

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

"रूपादिहीनमि"ति । अनुद्भूतरूपमित्यर्थः । रूपादिहीनकरणाधिष्ठानं हि पुरुषस्य स्वभोगादावेव दृष्टं नान्यत्र, नहि बाह्यं कुठाराद्यपरिदृष्टं व्यापारयन् कश्चिदुपलभ्यते, तस्माद्रूपादिहीनं करणं व्यापारायत ईश्वरस्य भोगादिप्रसक्तिस्तया चानीश्वरत्वमिति भावः । कल्पान्तरमाह—"अन्यथे"ति । पूर्वमधिष्ठितिरधिष्ठानमिदानीं तु अधिष्ठानं भोगायतनं शरीरमुक्तम् । तथा भोगादिप्रसङ्गेनानीश्वरत्वं पूर्वमापादितम्. संप्रति तु शरीरित्वेन भोगादिप्रसङ्गादनीश्वरत्वमुक्तमिति विशेषः ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

अपि च सर्वत्रानुमानं प्रमाणयतः (१)प्रधानपुरुषेश्वराणामपि संख्याभेदवत्त्वमन्तवत्त्वं च द्रव्यत्वात्। (२)संख्यान्यत्वे सति प्रमेयत्वाद्वानुमातव्यं ततश्चान्तवत्त्वमसर्वज्ञता वा । (३)अस्माकं त्वागमगम्येऽर्थे तद्बाधितविषयतया नानुमानं प्रभवतीति भावः । स्वरूपपरिमाणमपि यस्य यादृशमणुमहत्परममहद्दीर्घं ह्रस्वं चेति । 'अथ मा भूदेष दोष' इत्युत्तरो विकल्पो यस्यान्तोऽस्ति तस्यान्तवत्त्वाग्रहणमसर्वज्ञतामापादयेत्। यस्य त्वन्त एव नास्ति तस्य तदग्रहणं नासर्वज्ञतामावहति नहि शशविषाणाद्यज्ञानादज्ञो भवतीति भावः । परिहरति—"तत" इति । (४)आगमानपेक्षस्यानुमानमेषामन्तवत्त्वमवगमयतीत्युक्तम् ॥ ४१ ॥

## उत्पत्त्यसंभवात् ॥ ४२ ॥

अन्यत्र(५) वेदाविसंवादाद्यत्रांशे(६) विसंवादः स निरस्यते, तमंशमाह "यत्पुनरिदमुच्यते" । "वासुदेवात्संकर्षणो जीव" इति जीवस्य कारणवत्त्वे सत्यनित्यत्वमनित्यत्वे परलोकिनो ऽभावात्परलोकाभावः, ततश्च स्वर्गनरकापवर्गाभावापत्तेर्नास्तिक्यमित्यर्थः । अनुपपन्ना च जीवस्योत्पत्तिरित्याह "प्रतिषेधिष्यते चे"ति ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

यद्यप्यनेकशिल्पपर्यवदातः परशुं कृत्वा तेन पलाशं छिनत्ति, यद्यपि च (७)प्रयत्नेनेन्द्रियार्थात्ममनःसंनिकर्षलक्षणं ज्ञानकरणमुपादायात्मार्थं विजानाति, तथापि संकर्षणो ऽकरणः कथं

(१) प्रधानेति । अत्र पुरुषत्वजात्यभिप्रायेण पुरुषाणामैक्याभित्वं द्रष्टव्यम् , संख्याविशेषवत्त्वे द्रव्यत्वमन्तवत्त्वे च संख्याविशेषवत्त्वं हेतुर्द्रष्टव्यः ।

(२) एवं द्रव्याश्रितैव संख्येति मतेन संख्याविशेषवत्त्वे द्रव्यत्वं हेतूकृत्वा संख्यां विहाय सर्वत्र संख्याङ्गीकारपक्षेऽनुमानप्रकारमाह संख्यान्यत्वे सतीति ।

(३) ननु ब्रह्माप्यन्तवदेकत्वादेकघटवदित्यनुमानं कुतो न स्यादत आह अस्माकं त्विति ।

(४) वादिन इति शेषः ।

(५) नारायण एव परः सर्वात्माऽनेकधा व्यूह्यावस्थित इत्यंशे ।

(६) वासुदेवात्सङ्कर्षण उत्पद्यते इत्यंशे ।

(७) भवतु क्रियाकरणमुत्पाद्यं ज्ञानकरणं तु नैवं स्यादत आह प्रयत्नेनेति । विषयातमात्र प्रयत्नादीनां करणत्वं बोध्यम् ।

प्रद्युम्नाख्यं मनःकरणं कुर्यात् । अकरणस्य वा करणनिर्माणसामर्थ्ये कृतं करणनिर्माणेनाकरणादेव निखिलकार्यसिद्धिरिति भावः ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

वासुदेवा एवैते संकर्षणादयो "निर्दोषा" अविद्यादिदोषरहिताः । "निरधिष्ठानाः" निरुपादाना अत एव "निरवद्या" अनित्यत्वादिदोषरहिताः तस्मादुत्पत्त्यसंभवोऽनुगुणत्वान्न दोष इत्यर्थः। अत्रोच्यते "एवमपी"ति । मा भूदभ्युपगमे न दोषः, प्रकारान्तरेण त्वयमेव दोषः । प्रश्नपूर्वं प्रकारान्तरमाह "कथं यदि तावदि"ति । न तावदेते परस्परं भिन्ना ईश्वराः परस्परव्याहतेच्छा भवितुमर्हन्ति व्याहतकामत्वे च कार्यानुत्पादात् (१) अव्याहतकामत्वे वा प्रत्येकमीश्वरत्वे एकेनैवेशनायाः कृतत्वादानर्थक्यमितरेषाम् । संभूय चेशनायां परिशुद्धो(२) न कश्चिदीश्वरः स्यात् , सिद्धान्तहानिश्च, (३)भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । तस्मात्कल्पान्तरमास्थेयम् । तत्र चोत्पत्त्यसम्भवो दोष इत्याशयवान् कल्पान्तरमुपन्यस्योत्पत्त्यसंभवेनापाकरोति "अथायमभिप्राय" इति । सुगममन्यत् ॥४४

## विप्रतिषेधाच्च ॥ ४५ ॥

गुणिभ्यः खल्वात्मभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरभेदं ब्रूते "आत्मान एवैते भगवन्तो वासुदेवा" इति । आदिग्रहणेन प्रद्युम्नानिरुद्धयोर्मनोहंकारलक्षणतयात्मनो भेदमभिधायात्मान एवैत इति तद्विरुद्धाभेदाभिधानमपरं संगृहीतम् । वेदविप्रतिषेधो व्याख्यातः ॥ ४५ ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां
द्वितीयाध्यायस्य द्वितीयः पादः ॥



(१) तथाचेश्वरत्वव्याघात इति भावः ।

(२) निश्चितः ।

(३) अनेकेश्वरत्वेऽपसिद्धान्तमाह भगवानिति ।

THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

## NO. 116.

( Vedânta Section No. 11. )



THE

# BHÂMATÎ

## A GLOSS ON SHÂNKARA BHÂSHYA

by

## VÂCHASPATI MIS'RA

*Edited with full notes*

By

*Pandit Dhundhirāj S'āstri Nyāyopādhyāya*

Principal, Nityânanda Veda Vidyālaya Benâres.

**( PART-II )**


PUBLISHED & SOLD BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambā Sanskrit Series Office.*

Benares City.

1937

हरिदास संस्कृत ग्रन्थमाला समाख्य-
काशी-संस्कृत-सीरिज़्पुस्तकमालायाः
११६
वेदान्तविभागे (११) एकादशं पुष्पम् ।

ब्रह्मसूत्रशाङ्करभाष्यव्याख्या

# भामती

सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता ।

वाराणसेयनित्यानन्दवेदविद्यालयीय-
प्रधानाध्यापकेन न्यायोपाध्यायेन
पं० ढुण्ढिराजशास्त्रिणा

सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता तेनैव संस्कृता च ।

( द्वितीयो भागः । )

प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्त-
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९९३

अवशिष्टभूमिकायाम्

## भामतीकर्तुश्चारितम् ।

अत्र तावद्वेद-धर्मशास्त्र-पुराण-तन्त्र-व्याकरण-ज्योतिष-छन्दो-न्याय-वैशेषिक-सांख्ययोग-मीमांसा-वेदान्त-चिकित्साशास्त्रादौ वाचस्पतिप्रणीतास्तत्पुत्रपौत्रादिप्रणीता वा अनेके ग्रन्था उपलभ्यन्त इत्यनेके वाचस्पतयोऽभूवन्नित्यत्र नास्ति सन्देहावसरः । तत्र वाचस्पतिमिश्रा अपि अष्टौ तत्रापि दार्शनिकौ द्वौ । तत्राप्याचार्यसन्मिश्रवाचस्पतिर्वा षड्दर्शनटीकाकृदाचार्यवाचस्पतिमिश्रो वा इतरव्यावर्तकविशेषणविशिष्टत्वादेक एवेति शारीरकभाष्यव्याख्याकारत्वात्प्रकृते स एव वर्णनीय इति ।

तत्राचार्यवाचस्पतिमिश्राणां(१) महर्षिकल्पानामाविर्भावे देशकालनिर्णयाभावेऽपि गुणैकपक्षपातिभिर्विद्वद्भिरनेके सिद्धान्ता निरूपिताः । तद्यथा

[ १ ] माधवीयशाङ्करविजये पूर्वजन्मनि श्रीमच्छङ्कराचार्याणां प्रधानशिष्याः पद्मपादाचार्या एव वाचस्पतिमिश्रा आसन् यैः शारीरकभाष्यव्याख्या प्रणीता, यस्याः सुरेश्वराचार्यशापात् पञ्चपादिकाभिधानत्वं प्राप्तम् , ततश्च शङ्कराचार्यानुग्रहात् पद्मपादाचार्या एवान्यजन्मनि वाचस्पतिरूपेणावतीर्य भामतीं प्रणीतवन्त इति निरूपितम् ।

[ २ ] मतान्तरे तु वाचस्पतिमिश्राणां पत्नी भामती कन्या वा तन्नाम्ना कृतोऽयं व्याख्याननिबन्धः ।

[ ३ ] केचित्तु नेपालप्रान्तविशेषे भामानामको ग्रामस्तत्र स्थितेन वाचस्पतिमिश्रेण भामतीग्रन्थो रचित इति वदन्ति ।

[ ४ ] वस्तुतस्तु सांख्यतत्त्वकौमुद्यादौ—

मनांसि कुमुदानीव बोधयन्ती सतां मुदा ।
श्रीवाचस्पतिमिश्राणां कृतिः स्तात् तत्त्वकौमुदी ॥

'सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायाम्' इत्युक्तेः, न्यायवार्तिकतात्पर्यटीकायां च ३ अ० २ आह्निके 'विपञ्चितं चैतदस्माभिर्ब्रह्मतत्त्वसमीक्षान्यायकलिकाभ्याम्'(२) तत्त्वबिन्दौ 'उपपादितं न्यायकलिकायाम्' भामत्यामपि 'विस्तरस्तु ब्रह्मतत्त्वसमीक्षायां' योगभाष्यव्याख्यायां तत्त्ववैशारद्यां च ३२ सूत्रव्याख्याने 'अर्थक्रिया ब्रह्मतत्त्वसमीक्षान्यायकणिकाभ्या-

---

( १ ) तार्किकरक्षाटीकायां शास्त्रसिद्धान्तलेशसङ्ग्रहे च अप्पय्यदीक्षितेनापि आचार्यवाचस्पतिमिश्रा इत्युक्तम् ।

( २ ) न्यायकलिकैव—न्यायकणिकेति न विस्मर्तव्यम् ।

मुपपादिता' इत्याद्युक्तेश्चोक्तनिबन्धानां प्रणेता एक एवेति निर्धार्यते । अत एव षड्दर्शनटीकाकारतया तं व्यवहरन्ति विद्वांसः ।

अयं च वाचस्पतिमिश्रः कस्मिन्देशे आविरभूदिति गवेषणायां मण्डन-मिश्र--मुरारिमिश्र--पार्थसारथिमिश्र--सुचरितमिश्रादयो मिश्रशब्दान्ता मैथिला इति मिश्रशब्दसम्बन्धात् मथिल एवेति अनुमीयते ।

समयनिर्णये तु तत्कृतन्यायसूचीनिबन्धान्ते लिखितात्—

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥

इति पद्यात् ८९८ शाकाब्दे भामतीकाराणां वाचस्पतिमिश्राणां स्थिति-रासीदिति निर्धार्यते । 'वस्वङ्कवसुवत्सर' इत्यत्र वत्सरशब्दस्य शाकाब्द-ग्राहकत्वे किं प्रमाणमिति न शङ्कितव्यम् । भामत्यन्ते

नरेश्वरा यच्चरितानुकारमिच्छन्ति कर्त्तुं न च पारयन्ति ।
तस्मिन्महीये महनीयकीर्तौ श्रीमन्नृगेऽकारि मया निबन्धः ॥

इत्युल्लिखितस्यार्वाचीननृगराज्ञो विषये शार्ङ्गधरपद्धत्यां विशिष्टराज-वंशवर्णनप्रसङ्गेन समुद्धृतात्

आविन्ध्यादाहिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गा-
दुद्ग्रीवेषु प्रहर्षान्नृपतिषु विनमत्कन्धरेषु प्रसन्नः ।
आयुर्वित्तं यथार्थं पुनरपि कृतवान् म्लेच्छविच्छेदनाभि-
र्देवः शाकम्भरीन्द्रो जगति विजयते वीसलः क्षोणिपालः ॥
ब्रूते सम्प्रति चाउहानतिलकः शाकम्भरीभूपतिः
श्रीमान् विग्रहराज एष विजयी सन्तानजानात्मजः ।
अस्माभिः करदं व्यधायि हिमवद्विन्ध्यान्तरालं भुवः
शेषस्वीकरणाय माऽस्तु भवतामुद्योगशून्यं मनः ॥

इतिपद्यद्वयाच्छाकाब्दविषयत्वस्यावधारणात् । शाकम्भरीदेशे चउहा-नक्षत्रियवंशे हम्मीरराजोऽभूत्, तत्सभायां राघवदेवपण्डितपुत्रा गोपाल-दामोदर-देवदासाख्याः पण्डिता राजाश्रिता आसन् । येषु दामोदरात्मज-शार्ङ्गधरेण शार्ङ्गधरपद्धत्यां नृगनृपतिपाषाणयज्ञयूपस्य नामोक्तप्रकारेणो-द्धृतम् । हम्मीरराजश्च १२९५ वैक्रमे वर्षे मृतः, राज्यं च तत्पूर्वं ६० वर्षाणि कृतवानिति मतमैतिहासिकानाम् । एवं च १२३५ वैक्रमवर्षेभ्यः ११०० (१)शाकवर्षेभ्योऽपि पूर्वं वाचस्पतिमिश्राणा स्थितावुक्तसमयस्य नासाम-ञ्जस्यं किमपि ।

(१) दिल्लीनगरोपकण्ठस्थितस्तम्भेऽपि १२०० विक्रमवर्षे १०८५ शाकाब्दे निरुक्तानि पद्यान्यासन् ।

हेमाद्रिवोपदेवाभ्यामायुर्वेदीया शार्ङ्गधरसंहिता व्याख्याता, तत्र वोपदेवसमयश्च ११८२ गतशाकाब्दासन्नसमय एवेति निरुक्तसमये शार्ङ्गधरस्थितिर्न विरुद्धा ।

अपरे तु वाचस्पतिमिश्रैस्साङ्ख्यतत्त्वकौमुद्यामन्ते 'तदुक्तं राजवार्तिके' इत्युक्तत्वात् राजवार्तिकग्रन्थो भोजराजेन कृत इति भोजराजसमयात्पश्चात्कालभावी वाचस्पतिमिश्र इति वदन्ति । तच्चिन्त्यम् । राजमार्तण्डाख्ययोगसूत्रवृत्तौ 'रणरङ्गमल्लनृपते'रित्युक्त्या राजवार्तिकग्रन्थस्य भोजराजकृतत्वे मूलाभावात् ।

एवं प्रसिद्धैः रामानुजाचार्यैः १०१२ शाकाब्दे यादवाचलपर्वते नारायणमूर्तिः स्थापिता, श्रीभाष्ये च खण्डनखण्डखाद्यकारिका तैः समुद्धृता, खण्डनकारात्पूर्वं ९०६ शाकाब्दे उदयनाचार्याणां तात्पर्यपरिशुद्धिकृतां स्थितिर्बभूवातोऽपि ८९८ शाकाब्दे वाचस्पतिमिश्राणां स्थितिरविरुद्धैव । रामानुजाचार्यैः २।१।१४ भामत्यनुवादोऽपि कृत इति द्रष्टव्यम् ।

एवं च न्यायकणिका–ब्रह्मतत्त्वसमीक्षा–तत्त्वबिन्दु–न्यायवार्तिकतात्पर्यटीका–सांख्यतत्त्वकौमुद्यादिनिबन्धकर्ता षड्दर्शनव्याख्याता सर्वतन्त्रस्वतन्त्रः श्रीमान् वाचस्पतिमिश्रस्त्रिलोचनमिश्राणां प्रधानशिष्य इत्यवधेयम्—'अस्माभिस्त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखै'रिति तात्पर्यटीकायां स्वयमुक्तत्वात् । एतेन—

मार्तण्डतिलकस्वामिमहागणपतीन् वयम् ।
विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥

इतिभामतीमङ्गलाचरणस्थपद्यदर्शनान्मार्तण्डतिलकस्वामिशिष्यत्वं कैश्चित्कल्पितं निरस्तम् ।

विश्वनाथकृतकाव्यप्रकाशदर्पण–दीक्षितभीमसेनकृतसुधासागराह्वकाव्यप्रकाशटीकयोरुल्लिखितस्तु वाचस्पतिमिश्रः तत्त्वचिन्तामणिप्रकाश–न्यायतत्त्वालोकाख्यन्यायसूत्रवृत्ति–न्यायसूत्रोद्धारादिकर्ता नवीन एव काश्चिदिति भूतपूर्वकाशीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्ष म०म०विन्ध्येश्वरीप्रसादद्विवेदिमहोदयैर्न्यायवार्तिकभूमिकायां निवेदितन्तत्रैव विशेषतो द्रष्टव्यम् । अनेनापि तत्त्वालोके षड्दर्शनटीकाकर्तुर्वाचस्पतिमिश्रस्य परिचयो दत्त इत्यवधेयम् ।

विवादचिन्तामणि–तीर्थचिन्तामणि–श्राद्धचिन्तामण्यादिधर्मशास्त्रनिबन्धकर्ताऽन्योऽपि वाचस्पतिमिश्रः, सिद्धान्तशिरोमण्यादिज्यौतिषनिबन्धव्याख्यातुर्वाचस्पतिमिश्रादेतद्भिन्नाद्भिन्न एवेति तत्तद्ग्रन्थसमालोचनाद्व्यक्तं भवतीति वदामः ।

तदेवंभूतविद्वत्प्रवरदार्शनिकशिरोमणिवाचस्पतिमिश्रकृता भामती प्राचीनशैल्याऽभ्यासदार्ढ्यार्थं विनैव भाष्येण विद्याविलासयन्त्रालयाध्यक्षश्रेष्ठिकुलावतंसजयकृष्णदासगुप्तमहोदयप्रार्थनया कल्पतरुसाहाय्येन कृतया विषमस्थलटिप्पण्या समलङ्कृत्य प्रकाशिता यदि वेदान्तावगाहनमिच्छतां छात्राणां विदुषां च कमप्युपकारलवमासादयिष्यति तदा स्वीयं परिश्रमं सफलं मंस्ये। अधिकन्तु निवेदितं प्रथमभागे। तदेवं कृतेऽपि परिश्रमे मम दृष्टिदोषेण जाता अशुद्धीः क्षाम्यन्तु दयापरा विद्वांसः सफलयन्तु च मामकीनं परिश्रममिति भूयोभूयः परमेश्वरं प्रार्थये—

नित्यानन्दवेदविद्यालयः
वसन्तोत्सवः १९९३

विदुषामनुचरः—
ढुण्ढिराजशास्त्री।

# द्वितीयाध्याये तृतीयः पादः ।

## अथ वियदधिकरणविषयाः ।

## द्वितीयाध्याये चतुर्थः पादः ।

## तृतीयाध्याये तृतीयः पादः।

विषयः । पृ० पं०

## तृतीयाध्याये चतुर्थः पादः ।

---

## अथ चतुर्थाध्याये प्रथमः पादः ।

---

## चतुर्थाध्याये द्वितीयः पादः ।

---

## चतुर्थाध्याये तृतीयः पादः ।

इति चतुर्थोऽध्यायः ।

## अथ द्वितीयाध्याये तृतीयपादः ।

### सू० न वियदश्रुतेः ॥ १ ॥

पूर्वं प्रमाणान्तरविरोधः श्रुतेर्निराकृतः, सम्प्रति तु श्रुतीनामेव परस्परविरोधो निराक्रियते । तत्र सृष्टिश्रुतीनां परस्परविरोधमाह—"वेदान्तेषु तत्रतत्रे"ति । (१)श्रुतिविप्रतिषेधाच्च परपक्षाणामनपेक्षत्वं ख्यापितं तद्वत्स्वपक्षस्य श्रुतिविप्रतिषेधादिति । "तदर्थनिर्मलत्व"मर्थाभासविनिवृत्त्यार्थतत्त्वप्रतिपादनम् । तस्य फलं स्वपक्षस्य जगतो ब्रह्मकारणत्वस्यानपेक्षत्वाशङ्कानिवृत्तिः । (२)इह हि पूर्वपक्षे श्रुतीनां मिथो विरोधः प्रतिपाद्यते सिद्धान्ते त्वविरोधः । तत्र सिद्धान्त्येकदेशिनो वचनं "न वियदश्रुते"रिति । (३)तस्याभिसन्धिः—यद्यपि तैत्तिरीयके वियदुत्पत्तिश्रुतिरस्ति, तथापि तस्याः प्रमाणान्तरविरोधाद्बहुश्रुतिविरोधाच्च गौणत्वम् । तथा च वियतो नित्यत्वात्तेजःप्रमुख एव सर्गस्तथा च न विरोधः श्रुतीनामिति । तदिदमुक्तम्—"प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्योत्पत्तिरस्त्युत नास्ती"ति । यदि नास्ति न श्रुतिविरोधाशङ्का, अथास्ति ततः श्रुतिविरोध इति तत्परिहाराय प्रयत्नान्तरमास्थेयमित्यर्थः ॥ १ ॥

तत्र पूर्वपक्षसूत्रम्—

### "अस्ति तु" ॥ २ ॥

तैत्तिरीये हि सर्गप्रकरणे केवलस्याकाशस्यैव प्रथमः सर्गः श्रूयते छान्दोग्ये च केवलस्य तेजसः प्रथमः सर्गः । (४)न च श्रुत्यन्तरानुरोधिनासहायस्याधिगतस्यापि ससहायताकल्पनं युक्तम्, सहायत्वावगमविरोधात् । श्रुतसिद्ध्यर्थं खल्वश्रुतं कल्प्यते न तु तद्विघाताय, विहन्यते चासहायत्वं श्रुतं कल्पितेन ससहायत्वेन । न च परस्परानपेक्षाणां व्रीहियववद्विकल्पः, अनुष्ठानं हि विकल्प्यते न वस्तु, नहि स्थाणुपुरुषविकल्पो वस्तुनि प्रतिष्ठां लभते । न च सर्गभेदेन व्यवस्थोपपद्यते साम्प्रतिकसर्गवद्भूतपूर्वस्यापि तथात्वात् । न खल्विह सर्गे क्षीराद्दधि जायते सर्गान्तरे तु दध्नः क्षीरमिति भवति । तस्मात्सर्गश्रुतयः परस्परविरोधिन्यो नास्मिन्नर्थे प्रमाणं भवितुमर्हन्तीति पूर्वः पक्षः ॥ २ ॥

---

(१) प्रासङ्गिकीं पादसङ्गतिं वक्तुं 'विप्रतिषेधाच्चेति' भाष्यम्, तत्र श्रुतिविरोधादित्यर्थः । परपक्षेषु सर्वत्र स्ववचनविरोधस्याभावादित्यभिप्रेत्याह श्रुतीति ।

(२) न वियदिति पूर्वपक्षः, अस्तित्विति तु सिद्धान्त इति भ्रमं वारयन्नाहेह हीति । एवं ह्यविरोधाध्यायसङ्गतिरित्यर्थः ।

(३) नन्वेकदेश्यपि श्रुतौ सत्यां कथं 'अश्रुतेः' इति ब्रूयादत आह तस्येति ।

(४) अश्रुतस्थलेऽपि श्रुतोत्पत्तेरुपसंहारादविरोधमाशंक्याह पूर्वपक्षी न चेत्यादिना । आकाशोत्पत्तिबोधकश्रुत्यनुरोधेन केवलतेजःश्रुतावपि आकाशोत्पत्तिकल्पनं न च युक्तम्, छान्दोग्यश्रुतौ तैत्तिरीयकोक्ताकाशोत्पत्तिपूर्वकतेजःसृष्टिकल्पनाया अन्याय्यत्वादिति वाक्यार्थः । अन्याय्यत्वमेव विवृणोति श्रुतसिद्ध्यर्थमित्यादिना ।

सिद्धान्त्येकदेशी सूत्रेण स्वाभिप्रायमाविष्करोति—

**गौण्यसम्भवात् ॥ ३ ॥**

प्रमाणान्तरविरोधेन बहुश्रुत्यन्तरविरोधेन चाकाशोत्पत्त्यसम्भवात् गौण्येषाऽऽकाशोत्पत्तिश्रुतिरित्यविरोध इत्यर्थः । प्रमाणान्तरविरोधमाह—"न ह्याकाशस्ये"ति । समवाय्यसमवायिनिमित्तकारणेभ्यो हि कार्यस्योत्पत्तिर्नियता तदभावे न भवितुमर्हति धूम इव धूमध्वजाभावे, तस्मात्सदकारणमाकाशं नित्यमिति । अपि च य उत्पद्यन्ते तेषां प्रागुत्पत्तेरनुभवार्थक्रिये नोपलभ्येते उत्पन्नस्य च दृश्येते यथा तेजःप्रभृतीनाम् , न चाकाशस्य तादृशो विशेष उत्पादानुत्पादयोरस्ति, तस्मान्नोत्पद्यत इत्याह—"उत्पत्तिमतां चे"ति । "प्रकाशनं" प्रकाशो घटपटादिगोचरः । "पृथिव्यादिवैधर्म्याच्चे"ति । (१)आदिग्रहणेन द्रव्यत्वे सत्यस्पर्शवत्वादात्मवन्नित्यमाकाशमिति गृहीतम् । "आरण्यानाकाशेष्वि"ति । वेदेष्वेकस्याकाशस्यौपाधिकं बहुत्वम् ॥ ३ ॥

तदेवं प्रमाणान्तरविरोधेन गौणत्वमुक्त्वा श्रुत्यन्तरविरोधेनापि गौणत्वमाह—

**शब्दाच्च ॥ ४ ॥**

सुगमम् ॥ ४ ॥

**स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥**

(२)पदस्यानुषङ्गो न पदार्थस्य, तद्धि क्वचिन्मुख्यं क्वचिदौपचारिकं सम्भवासम्भवाभ्यामित्यविरोधः ॥ ५ ॥

चोद्यद्वयं करोति—"कथमि"ति । प्रथमं चोद्यं परिहरति—"एकमेवेति तावदि"ति (३)"कुलं" गृहम् । "अमत्राणि" पात्राणि घटशरावादीनि । आपेक्षिकमवधारणं न सर्वविषयमित्यर्थः । उपपत्त्यन्तरमाह—"न च नभसापी"ति । अपिरभ्युपगमे । यदि सर्वापेक्षं तथाप्यदोष इत्यर्थः । "न च प्रागुत्पत्तेः" जगत इति शेषः । द्वितीयं चोद्यमपाकरोति—"अत एव च ब्रह्मविज्ञानेने"ति । लक्षणान्यत्वाभावेनाकाशस्य ब्रह्मणोऽनन्यत्वादिति । अपि चाव्यतिरिक्तदेशकालमाकाशं ब्रह्मणा च ब्रह्मकार्यैश्च तदभिन्नस्वभावैरतः क्षीरकुम्भप्रक्षिप्तकातिपयपयोबिन्दुवद्ब्रह्मणि तत्कार्ये च विज्ञाते नभो विदितं भवतीत्याह—"अपि च सर्वं कार्यमुत्पाद्यमान"मिति । एवं सिद्धान्तैकदेशिमते प्राप्त इदमाह—

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥**

ब्रह्मविवर्तात्मतया जगतस्तद्विकारस्य वस्तुतो ब्रह्मणो भेदे ब्रह्मणि ज्ञाते ज्ञानमुपपद्यते, न

---

(१) विभुत्वादिलक्षणादिति भाष्यस्थादिग्रहणेनेत्यर्थः । अत्र घटादिवारणाय विशेष्यदलम् , क्रियादिवारणाय च विशेषणदलं हेतौ प्रवेशितम् ।

(२) एकस्य सम्भूतशब्दस्य सकृत्प्रयोगे गौणमुख्यत्वव्याघातस्य ब्रह्मशब्ददृष्टान्तेन कथं परिहारः तत्राप्यनुपपत्तेस्तुल्यत्वादित्याशंक्योभयत्र न्यायमाह पदस्येति । अयं भावः—अर्थो हि गौणत्वमुख्यत्वविरुद्धधर्माध्यासं न सहते शब्दस्तु येनानुषज्यते तेन योग्यतावशात्सम्बध्यतेऽतो यत्र मुख्यवृत्त्याऽन्वययोग्यता तत्र मुख्योऽन्यत्र गौणः सम्भवतीति ।

(३) वंशवाचित्वनिरासायाह कुलं गृहमिति ।

हि जगत्तत्त्वं ब्रह्मणोऽन्यत् , तस्मादाकाशमपि तद्विवर्ततया तद्विकारः सत्तज्ज्ञानेन ज्ञातं भवति नान्यथा, अविकारत्वे तु ततस्तत्त्वान्तरं न ब्रह्मणि विदिते विदितं भवति । भिन्नयोस्तु लक्षणान्यत्वाभावेऽपि देशकालाभेदेपि नान्यतरज्ञानेनान्यतरज्ञानं भवति । न हि क्षीरस्य(१) पूर्णकुम्भे क्षीरे गृह्यमाणे सत्स्वपि पाथोबिन्दुषु पाथस्तत्त्वप्रतिज्ञातत्वमस्ति विज्ञानं, तस्मान्न ते क्षीरे विदिते विदिता इति प्रतिज्ञादृष्टान्तप्रचयानुपरोधाय वियत उत्पत्तिरकामेनाभ्युपेयेति । तदेवं सिद्धान्तैकदेशिनि स्थापिते पूर्वपक्षी स्वपक्षे विशेषमाह-"सत्यं दर्शित"मत एव ' विरुद्धं तु तदि"ति । सिद्धान्तसारमाह--"नैष दोषस्तेजः सर्गस्य तैत्तिरीयक" इति । (२)श्रुत्योरन्यथोपपद्यमानान्यथानुपपद्यमानयोरन्यथानुपपद्यमाना बलवती तैत्तिरीयकश्रुतिः, छान्दोग्यश्रुतिश्चान्यथोपपद्यमाना दुर्बला । नन्वसहायं तेजः प्रथममवगम्यमानं ससहायत्वेन विरुध्यते इत्युक्तमत आह--"नहीयं श्रुतिस्तेजोजनिप्रधाने"ति । सर्गसंसर्गः श्रौतो भेदस्त्वार्थः । स च श्रुत्यन्तरेण विरोधिना बाध्यते, जघन्यत्वात् । न च तेजःप्रमुखसर्गसंसर्गवदसहायत्वमप्यस्य श्रौतं, किन्तु व्यतिरेकलभ्यं, न च श्रुतेन तदपवादबाधने श्रुतस्य तेजःसर्गस्यानुपपत्तिः । तदिदमुक्तम् तेजोजनिप्रधानेति । स्यादेतत् , यद्येकं वाक्यमनेकार्थं न भवत्येकस्य व्यापारद्वयासम्भवात् , हन्त भोः कथमेकस्य स्रष्टुरनेकव्यापारत्वमविरुद्धमिष्यत आह--"स्रष्टा त्वेकोपी"ति । वृद्धप्रयोगाधीनावधारणं शब्दसामर्थ्यं न चानावृत्तस्य शब्दस्य क्रमाक्रमाभ्यामेकस्यापि कर्तुरनेकव्यापारत्वमित्यर्थः । न चास्मिन्नर्थे एकस्य वाक्यस्य व्यापारोपि तु भिन्नानां वाक्यानामित्याह-"न चास्माभिरि"ति । सुगमम् । चोदयति-"ननु शमविधानार्थमि"ति । यत्परः शब्दः स शब्दार्थो न चैष सृष्टिपरोऽपि तु शमपर इत्यर्थः । परिहरति—"न हि तेजःप्राथम्यानुरोधेने"ति । गुणत्वादार्थत्वाच्च क्रमस्य श्रुतप्रधानपदार्थविरोधात्तत्त्यागो युक्त इत्यर्थः । (३)सिंहावलोकितन्यायेन वियदनुत्पत्तिवादिनं प्रत्याह—"अपि च छान्दोग्य" इति । यत्पुनरन्यथा प्रतिज्ञोपपादनं कृतं तद्दूषयति—"यच्चोक्तमि"ति । दृष्टान्तानुरूपत्वाद्दार्ष्टान्तिकस्य तस्य च प्रकृतिविकाररूपत्वाद्दार्ष्टान्तिकस्यापि तथाभावः । अपि च भ्रान्तिमूलं चैतद्वचनमेकमेवाद्वितीयमिति तोये क्षीरबुद्धिवत् । औपचारिकं वा सिंहो माणवक इतिवत् । तत्र न तावद्भ्रान्तमित्याह—"क्षीरोदकन्यायेने"ति । भ्रान्तेर्विप्रलम्भाभिप्रायस्य च पुरुषधर्मत्वादपौरुषेये तदसम्भव इत्यर्थः । नाप्यौपचारिकमित्याह—"सावधारणा चेयमि"ति । काममुपचारादस्त्वेकत्वमवधारणाऽद्वितीयपदे नोपपद्यते, नहि माणवके सिंहत्वमुपचर्य न सिंहादन्योस्ति मनागपि माणवक इति वदन्ति लौकिकाः । तस्माद्ब्रह्मत्वमैकान्तिकं जगतो विवक्षितं श्रुत्या न त्वौप

---

(१) तृतीयार्थे षष्ठीयम् ।

(२) द्वे किलात्र पूर्वपक्षिणाऽनुपपत्ती प्रदर्शिते- तत्तेजोऽसृजतेत्यत्राकाशस्योपसंहारे सकृदसृजतेतिश्रुतस्य स्रष्टुराकाशतेजोभ्यां सम्बन्धे सत्यावृत्त्या वाक्यभेद इत्येका, द्वयोराकाशतेजसोः प्रथमसृष्टत्वविरोध इत्यपरा, तत्राद्यां परिहरति श्रुत्योरिति । तेजः प्रथमंसृष्टमितिप्रथमशब्दस्य छान्दोग्येऽश्रवणात्तेजोजन्ममात्रेणान्यथोपपत्तिरित्याकाशमेव प्रथमम् , तेजस्तु यथा तैत्तिरीयश्रुति तृतीयमिति न विरोध इत्यर्थः ।

(३) वियदुत्पत्त्यभ्युपगमेन श्रुतिविप्रतिषेधवादिनिराकरणे प्रस्तुते भाष्यकारीयवियदुत्पत्तिहेतुकथनमसङ्गतमित्याशङ्क्याह सिंहावलोकितेति ।

पचारिकम्। अभ्यासे हि भूयस्त्वमर्थस्य भवति नाल्पत्वमपि प्रागेवौपचारिकमित्यर्थः। **"न च स्वकार्यापेक्षये"ति** । निःशेषवचनः स्वरसतः सर्वशब्दो नासति श्रुत्यन्तर-विरोधे एकदेशविषयो युज्यते इत्यर्थः ॥ ६ ॥

आकाशस्योत्पत्तौ प्रमाणान्तरविरोधमुक्तमनुभाष्य तस्य प्रमाणान्तरस्य प्रमाणान्तर-विरोधेनाप्रमाणभूतस्य न गौणत्वापादनसामर्थ्यमत आह—

**यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥**

सोयं प्रयोगः—आकाशदिक्कालमनःपरमाणवो विकारा(१)आत्मान्यत्वे सति विभक्तत्वाद् घटशरावोदञ्चनादिवदिति। **"सर्वं कार्यं निरात्मकमि"ति** । निरुपादानं स्यादित्यर्थः। (२)शून्यवादश्च निराकृतः स्वयमेव श्रुत्योपन्यस्य कथमसतः सज्जायेतेति । उपपादितं च तन्निराकरणमधस्तादिति । आत्मत्वादेवात्मनः प्रत्यगात्मनो निराकरणाशङ्कानुपपत्तिः । (३)एतदुक्तं भवति—सोपादानं चेत्कार्यं तत आत्मैवोपादानमुक्तं तस्यैवोपादानत्वेन श्रुते-रुपादानान्तरकल्पनानुपपत्तेरिति । स्यादेतत्, अस्त्वात्मोपादानमस्य जगतस्तस्य तूपादानान्त-रमश्रूयमाणमप्यन्यद्भविष्यतीत्यत आह—**"नह्यात्मागन्तुकः कस्यचिदुपादानान्तर-स्योपादेयः, कुतः? स्वयं सिद्धत्वात्"**सत्ता वा प्रकाशो वास्यं स्वय सिद्धौ तत्र प्रकाशा-त्मिकायाः सिद्धेस्तावदनागन्तुकत्वमाह—**"नह्यात्मात्मन"** इति । उपपादितमेतद्यथा संशयविपर्यासपारोक्ष्यानास्पदत्वात् कदापि नात्मा पराधीनप्रकाशस्तदधीनप्रकाशास्तु प्रमाणा-दयो ऽत एव श्रुति'स्तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति। **"न चेदृशस्य निराकरणं सम्भवती"ति** । निराकरणमपि हि तदधीनात्मलाभं तद्विरुद्धं नोदेतुमर्हतीत्यर्थः। सत्ताया अनागन्तुकत्वमस्याह—**"तथाहमेवेदानीं जानामी"ति**। प्रमाप्रमाणप्रमेयाणां वर्तमानातीतानागतत्वेऽपि प्रमातुः सदा वर्तमानत्वेनानुभवादप्रच्युतस्व-भावस्य नागन्तुकं सत्त्वम्, त्रैकाल्यावच्छेदेन ह्यागन्तुकत्वं व्याप्तं तत्प्रमातुः सदा वर्तमाना-द्व्यावर्तमानमागन्तुकत्वं स्वव्याप्यमादाय निवर्तत इति। **"अन्यथाभवत्यपि ज्ञातव्य"** इति। (४)प्रकृतिप्रत्ययाभ्यां ज्ञानज्ञेययोरन्यथाभावो दर्शितः। ननु जीवतः प्रमातुर्मा भूद-न्यथाभावो मृतस्य तु भविष्यतीत्यत आह—**"तथा भस्मीभवत्यपी"ति**। यत्खलु सत्स्वभावमनुभवसिद्धं तस्यानिर्वचनीयत्वमन्यतो बाधकादवसातव्यम्, बाधकं च घटादीनां स्वभावाद्विचलनं प्रमाणोपनीतं, यस्य तु न तदस्त्यात्मनो न तस्य तत्कल्पनं युक्तमबाधिता-नुभवसिद्धस्य सत्स्वभावस्यानिर्वचनीयत्वकल्पनाप्रमाणाभावात्, तदिदमुक्तं—**"न स-म्भावयितुं शक्य"मिति** । तदनेन प्रबन्धेन प्रत्यनुमानेनाकाशानुत्पत्त्यनुमानं दूषयित्वा-

(१) नन्वद्वैतवादिमते कथमाकाशादेर्विभक्तत्वमत आह आत्मान्यत्वे सतीति। वस्तुतो विभक्तत्वा-भावेप्यविद्ययाऽऽकाशादेरन्यत्वकल्पनायां सत्यामस्ति विभक्तत्वमित्यर्थः।

(२) भाष्योक्तशून्यवादमसङ्गस्य तन्मतेनेष्टापत्तिमाशंक्याह शून्यवादश्चेति।

(३) आत्मन उपादानत्वं समर्थयन्नाहैतदुक्तमिति। आकाशादेर्भावकार्यत्वात्सोपादानत्वं तदुपादानस्य च श्रुतावात्मत्वं सिद्धमित्यर्थः।

(४) प्रकृतीति। ज्ञा इतिधात्वंशः प्रकृतिः, तव्य इति प्रत्ययः, ज्ञानविशिष्टस्य ज्ञेयस्यान्यथाभावोक्ति-र्विशेषणीभूतज्ञानेपि द्रष्टव्येत्यर्थः।

नैकान्तिकत्वेनापि दूषयति—"यत्तूक्तं समानजातीय"मिति । नाप्यनेकमेवोपादानमुपादेयमारभते, यत्र हि क्षीरं दधिभावेन परिणमते तत्र नावयवानामनेकेषामुपादानत्वमभ्युपगन्तव्यं, किन्तूपात्तमेव (१)क्षीरमेकमुपादेयदधिभावेन परिणमते, यथा निरवयवपरमाणुवादिनां क्षीरपरमाणुर्दधिपरमाणुभावेनेति । शेषमतिरोहितार्थम् ॥ ७ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

यद्यभ्यासे भूयस्त्वमर्थस्य भवति नाल्पत्वं दूरत एवोपचरितत्वं, हन्त भोः पवनस्य नित्यत्वप्रसङ्गः । वायुश्चान्तरिक्षमेतदमृतमिति द्वयोरमृतत्वमुक्त्वा पुनः पवनस्य (२)विशेषेणाह—"सैषाऽनस्तमिता देवता यद्वायु"रिति । तस्मादभ्यासान्नापेक्षिकं वायोरमृतत्वमपि तु औत्पत्तिकमेवेति प्राप्तं, तदिदमुक्तं भाष्यकृता—"अस्तमयप्रतिषेधादमृतत्वश्रवणाच्चे"ति । चेन समुच्चयार्थेनाभ्यासो दर्शितः । एवं प्राप्ते,

उच्यते । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्प्रतिज्ञावाक्यार्थस्य प्राधान्यात्तदुपपादनार्थत्वाच्च(३) वाक्यान्तराणां तेषामपि(४) चाद्वैतक्रमप्रतिपादकानां मातरिश्वोत्पत्तिप्रतिपादकानां बहुलमुपलब्धेर्मुख्यभूयस्त्वाभ्याममूषां श्रुतीनां बलीयस्त्वादेतदनुरोधेनामृतत्वास्तमयप्रतिषेधावापेक्षिकत्वेन नेतव्याविति । भूयसीः श्रुतीरपेक्ष्य द्वे अपि श्रुती शब्दमात्रमुक्ते ॥ ८ ॥

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

ननु न चास्य कश्चिज्जनितेत्यात्मनः सतोऽकारणत्वश्रुतेः कथमुत्पत्त्याशङ्का, न च वचनमदृष्ट्वा पूर्वः पक्ष इति युक्तमधीतवेदस्य ब्रह्मजिज्ञासाधिकारादर्शनानुपपत्तेरत आह—"वियत्पवनयो"रिति । यथा हि वियत्पवनयोरमृतत्वानस्तमयत्वश्रुती श्रुत्यन्तरविरोधादापेक्षिकत्वेन नीते, एवमकारणत्वश्रुतिरात्मनोऽग्निविस्फुलिङ्गदृष्टान्तश्रुतिविरोधात्प्रमाणान्तरविरोधाच्चापेक्षिकत्वेन व्याख्यातव्या, (५)न चात्मनः कारणवत्त्वेऽनवस्था लोहगन्धितामावहत्यनादित्वात्कार्यकारणपरम्पराया इति भावः । "तथा विकारेभ्य" इति प्रमाणान्तरविरोधो दर्शितः । एवं प्राप्ते, उच्यते—सदेकस्वभावस्योत्पत्त्यसम्भवः । कुतः? "अनुपपत्तेः"। सदेकस्वभावं हि ब्रह्म श्रूयते तदसति बाधके नान्यथायितव्यम् । उक्तमेतद्विकाराः सत्त्वेना-

---

(१) सिद्धमेव, नहि दधिभावसमये क्षीरं नश्यति यतस्तदवयवानामारम्भकत्वं कल्प्येतेत्यर्थः । ननु दधि अनेकोपादानं कार्यद्रव्यत्वात्पटवदित्यनुमास्यते तत्राह—यथेति । यथा भवन्मते क्षीरे नष्टे तदारम्भकपरमाणौ दध्यारम्भाय क्षीररसादिव्यतिरेकेणान्ये रसादय उदयन्ते तेषां चैकारभ्यत्वमेवं दध्नोऽपि किं न स्यात्, तस्यापि दुग्धसंस्थानमात्रत्वेन गुणवद्द्रव्यान्तरत्वानभ्युपगमादिति भावः ।

(२) अन्तरिक्षमुक्त्वेत्यर्थः, अन्यथाऽन्तरिक्षसहितवाय्वनुत्पत्तिवादिवाक्यमात्रोदाहृतावन्तरिक्षोत्पत्तेः पूर्वमुदाहृतेर्वायुनित्यत्वोक्तिरप्यौपचारिकी स्यादिति ।

(३) तदुपपादनार्थत्वाच्चेति । बृहदारण्यके खल्वनेन ह्येतत्सर्वं वेदेत्यात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं, वायुश्चान्तरिक्षमित्यादि वाक्यन्त्वात्मकार्यवाय्वादिप्रदर्शनेन तदुपपादकमित्यर्थः ।

(४) प्रधानेनाप्रधानबाधमुक्त्वा गुणभूतावान्तरवाक्यैरपि बहुभिर्वायुनित्यत्ववाक्ययोर्बाधमाह तेषामपीति । अवान्तरवाक्यानां मध्ये इदं सर्वं यदयमात्मेत्याद्यद्वैतप्रतिपादकवाक्यानामित्यर्थः ।

(५) ननु यथात्माऽऽत्मान्तरं प्रति कारणन्तर्हि तस्याप्यन्य इत्यनवस्थेत्याशङ्क्याग्निविस्फुलिङ्गवदनादित्वान्न दोष इत्याह नचेति ।

-नुभूता अपि कतिपयकालकलातिक्रमे विनश्यन्तो दृश्यन्त इत्यनिर्वचनीयात्त्रैकाल्यावच्छेदा-दिति । न चात्मा तादृशस्तस्य श्रुतेरनुभवाद्वा वर्तमानैकस्वभावत्वेन प्रसिद्धेस्तादिदमाह—"सन्मात्रं हि ब्रह्मे"ति । एतदुक्तं भवति—यत्स्वभावाद्विचलति तदनिर्वचनीयं निर्वचनी-योपादानं युक्तं, न तु विपर्ययः, यथा रज्जूपादानः सर्पो न तु सर्पोपादाना रज्जुरिति, य-योस्तु स्वभावादप्रच्युतिस्तयोर्निर्वचनीययोर्नोपादेयोपादानभावो, यथा रज्जुशुक्तिकयोरिति । न च निरधिष्ठानो विभ्रम इत्याह—"नाप्यसत" इति । न च निरधिष्ठानभ्रमपरम्परा-नादितेत्याह—"मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गादि"ति । (१)पारमार्थिको हि कार्यकारणभावोऽनादिर्नानवस्थया दुष्यति । समारोपस्तु विकारस्य न समारोपितोपादान इत्युपपादितं माध्यमिकमतनिषेधाधिकारे तदत्र न प्रस्मर्तव्यम् । तस्मात्सदधिष्ठानविभ्रम-समर्थनाऽनादित्वेनोचितेत्यर्थः । अग्निविस्फुलिङ्गश्रुतिश्चौपाधिकरूपापेक्षया नेतव्या । शेषम-तिरोहितार्थम् । ये तु गुणदिक्कालोत्पत्तिविषयमिदमधिकरणं वर्णयाञ्चक्रुस्तैः(२) सतोनुपप-त्तेरिति क्लेशेन व्याख्येयमविरोधसमर्थनप्रस्तावे चास्य सङ्गतिर्वक्तव्या, अवादिषद्दिक्काला-दीनामुत्पत्तिप्रतिपादकवाक्यस्यानवगमात् । तदास्तां तावत् ॥ ९ ॥

## तेजोऽतस्तथाह्याह ॥ १० ॥

यद्यपि वायोरग्निरित्यपादानपञ्चमी कारकविभक्तिरुपपदविभक्तेर्बलीयसीति नेयमानन्तर्य-परा युक्ता, तथापि बहुश्रुतिविरोधेन दुर्बलाप्युपपदविभक्तिरेवात्रोचिता । ततश्चानन्तर्यदर्शन-परेयं वायोरग्निरिति श्रुतिः । (३)न च साक्षाद्ब्रह्मजत्वसम्भवे तद्वंश्यत्वेन तज्जत्वं परम्पर-याश्रयितुं युक्तम् , वाजपेयस्य पशुयूपवदिति प्राप्तम् ।

एवं प्राप्त उच्यते—युक्तं पशुयागवाजपेययोरङ्गाङ्गिनोर्नानात्वात्तत्र साक्षाद्वाजपेयासम्बन्धे क्लेशेन परम्पराश्रयणम् , इह तु वायोर्ब्रह्मविकारस्यापि ब्रह्मणो वस्तुतोनन्यत्वाद्वायूपादानत्वे साक्षादेव ब्रह्मोपादानत्वोपपत्तेः कारकविभक्तेर्बलीयस्त्वानुरोधेनोभययो(४)पपद्यमानाः श्रुतयः कांस्यभोजिन्यायेन(५) नियम्यन्त इति युक्तमिति राद्धान्तः । "पारम्पर्यजत्वेपी"ति भेदकल्पनाभिप्रायं यतः पारमार्थिकमभेदमाह—"वायुभावापन्नं ब्रह्मे"ति । "यथा तस्याः शृत"मिति तु दृष्टान्तः परम्परामात्रसाम्येन न तु सर्वथा साम्येनेति सर्वमवदातम् १०

(१) अनादित्वान्नावस्थादोषमावहतीत्युक्तत्वाद्भाष्यायोगमाशङ्क्याह पारमार्थिको हीति । भाष्येऽनव-स्थाशब्देन प्रमाणाभाव उच्यते । अग्निविस्फुलिङ्गादेर्हि क्वचित्कार्यकारणभावस्य प्रमितत्वात् प्रागप्येवमिति परम्परा स्यादत्र तु विकारस्य सतो ब्रह्मणः समारोपिते क्वचित्समारोपः स्यात्स च न प्रमित इत्यपरिनिष्ठेत्यर्थः।

(२) भास्करैः, सतो विद्यमानस्य गुणादेर्नित्यत्वासम्भवः, कुतः ? अद्वितीयश्रुत्यनुपपत्तेरित्यध्याहारः क्लेशः, किञ्च तैरश्रुतोत्पत्तिकानामनुत्पत्तिशङ्कानिरासोऽधिकरणार्थ इत्युच्यते, ततश्च श्रुतिविरोधापरिहारात् पादासङ्गतिरित्याहाविरोधेति ।

(३) ननु श्रुतयः परम्परया ब्रह्मजत्वेपि योक्ष्यन्तेऽत आह नचेति । वाजपेयस्य यूप इतिवद् यत्प-रम्परया तज्जत्वं तत्साक्षाद्ब्रह्मजत्वसंभवे सति न युक्तमिति योजना ।

(४) वायुभावापन्नब्रह्मजत्वे केवलब्रह्मजत्वेपीत्यर्थः ।

(५) कांस्यभोजिन्यायेनेति । यथा कस्यचिच्छिष्यस्य कांस्यभोजित्वं नियतमुपाध्यायस्य त्वनियत-पात्रभोजित्वन्तत्र यदि तयोः केनचिन्निमित्तेनैकपात्रे भोजनं प्राप्नुयात् तदाऽप्रधानस्यापि शिष्यस्य धर्मबा-धायोपाध्यायोपि कांस्यभोजित्वेन नियम्यत इति ।

## आपः ॥ ११ ॥

निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥ ११ ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

अन्नशब्दोयं (१)व्युत्पत्त्या च प्रसिद्ध्या च व्रीहियवादौ तद्विकारे चौदने प्रवर्तते । श्रुतिश्च प्रकरणाद्बलीयसी, सा च वाक्यशेषेणोपोद्बलिता यत्र क्व चन वर्षतीत्येतेन, तस्मादभ्यवहार्यं व्रीहियवाद्येवात्राद्भ्यो जायत इति विवक्षितम् । कार्ष्ण्यमपि हि सम्भवति कस्यचिददनीयस्य, नहि पृथिव्यपि कृष्णा, लोहितादिरूपाया अपि दर्शनात् । ततश्च श्रुत्यन्तरेण 'द्भ्यः पृथिवी, पृथिव्या ओषधय' इत्यादिना विरोध इति पूर्वः पक्षः । (२)श्रुत्योर्विरोधे वस्तुनि विकल्पानुपपत्तेरन्यतरानुगुणतयान्यतरा नेतव्या । तत्र किमद्भ्यः पृथिवीति पृथिवीशब्दोऽन्नपरतया नीयतामुतान्नमसृजतेत्यन्नशब्दः पृथिवीपरतयेति विशये(३) महाभूताधिकारानुरोधात् (४)प्रायिककृष्णरूपानुरोधाच्च 'तद्यदपां शर आसीदि'ति च पुनः श्रुत्यनुरोधाच्च वाक्यशेषस्य चान्यथाप्युपपत्तेरन्नशब्दोऽन्नकारणे पृथिव्यामिति राद्धान्तः ॥ १२ ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

सृष्टिक्रमे भूतानामविरोध उक्त इदानीमाकाशादिभूताधिष्ठात्र्यो देवताः किं स्वतन्त्रा एवोत्तरोत्तरभूतसर्गे प्रवर्तन्त उत परमेश्वराधिष्ठिताः परतन्त्रा इति । तत्रा'काशाद्वायुर्वायोरग्निरि'ति स्ववाक्ये निरपेक्षाणां श्रुतेः स्वयं चेतनानां च चेतनान्तरापेक्षायां प्रमाणाभावात् , (५)प्रस्तावस्य च लिङ्गस्य च पारम्पर्येणापि मूलकारणस्य ब्रह्मण उपपत्तेः, स्वतन्त्राणामेवाकाशादीनां वाय्वादिकारणत्वमिति जगतो ब्रह्मयोनित्वव्याघात इति प्राप्तम् ।

एवं प्राप्तेऽभिधीयते—आकाशाद्वायुरित्यादय आकाशादीनां केवलानामुपादानभावमाचक्षते, न पुनः स्वातन्त्र्येणाधिष्ठातृत्वम् । (६)न च चेतनानां स्वकार्ये स्वातन्त्र्यमित्येतदप्यैकान्तिकं, परतन्त्राणामपि तेषां बहुलमुपलब्धेर्भृत्यान्तेवास्यादिवत् । तस्माल्लिङ्गप्रस्तावसामञ्जस्याय स ईश्वर एव तेनतेनाकाशादिभावेनोपादानभावेनावतिष्ठमानः स्वयमधिष्ठाय निमित्तकारणभूतस्तन्तं विकारं वाय्वादिकं सृजतीति युक्तम् , इतरथा लिङ्गप्रस्तावौ क्लेशितौ स्याताामिति । "परमेश्वरावेशवशा"दिति । परमेश्वर एवा(७)न्तर्यामिभावेनाविष्ट ईक्षि-

---

(१) योगवृत्त्याऽवयवार्थेन, प्रसिध्या—रूढ्या ।

(२) न महाभूतप्रकरणमात्रादन्नश्रुतिबाधः किन्तु लिङ्गप्रकरणसहितसाभ्यासश्रुत्येत्याह श्रुत्योरित्यादिना

(३) सन्देहे ।

(४) लिङ्गमाह प्रायिकेति । तदिति । तत्—तत्र सृष्टिकाले, यत्—यः अपां शरः मण्डः ( घनीभाव ) आसीत्स पृथिव्यभवत् इति पुनः श्रुतेरर्थः । ननु वर्षणाद्भूयिष्ठत्वप्राप्तिरूपलिङ्गमन्नश्रुतेरप्यनुग्राहकं स्यादत आह वाक्यशेषस्येति ।

(५) ननु 'सोऽकामयते'ति परमात्मप्रस्तावं कृत्वा 'तद्ब्रह्मात्मानं स्वयमकुरुते'ति कर्तृत्वं श्रूयते, 'यः पृथिव्यां तिष्ठन्यमयती'ति च नियन्तृत्वं लिङ्गमीश्वरस्यास्ति तत्कथं देवतानां स्वातन्त्र्येण कार्यनियन्तृत्वमत आह प्रस्तावस्येति । पारम्पर्येणापि—अभिमानिदेवताद्वारेणापि ।

(६) देवतालक्षणमङ्गीकृत्याप्याह नचेति ।

(७) भाष्ये परमेश्वरावेशो जीवापत्तिरिति भ्रमं निरस्यति अन्तर्यामिभावेनेति ।

ता, तस्मात्सर्वस्य कार्यजातस्य साक्षात्परमेश्वर एवाधिष्ठाता निमित्तकारणं न त्वकाशादिभावमापन्नः, आकाशादिभावमापन्नस्तूपादानमिति सिद्धम् ॥ १३ ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

उत्पत्तौ महाभूतानां क्रमः श्रुतो नाप्ययेऽप्ययमात्रस्य (१)श्रुतत्वात् (२)। तत्र नियमे सम्भवति नानियमो व्यवस्थाराहितो हि सः। न च व्यवस्थायां सत्यामव्यवस्था युज्यते। (३)तत्र क्रमभेदापेक्षायां किं दृष्टोऽप्ययक्रमो घटादीनां महाभूताप्ययक्रमनियामकोऽस्त्वाहो, श्रौत उत्पत्तिक्रम इति विशये श्रौतस्य श्रौतान्तरमभ्यर्हितं समानजातीयतया तस्यैव बुद्धिसान्निध्यात्। न दृष्टं, विरुद्धजातीयत्वात्। तस्माच्छ्रौतेनैवोत्पत्तिक्रमेणाप्ययक्रमो नियम्यत इति प्राप्ते

उच्यते—अप्ययस्य क्रमापेक्षायां खलूत्पत्तिक्रमो नियामको भवेत्, न त्वस्त्यप्ययस्य क्रमापेक्षा, दृष्टानुमानोपनीतेन क्रमभेदेन श्रुत्यनुसारिणोऽप्ययक्रमस्य बाध्यमानत्वात्। (४)तस्मिन् हि सत्युपादानेऽपरमेऽप्युपादेयमस्तीति स्यान्न चैतदस्ति। (५)तस्मात्तद्विरुद्धदृष्टक्रमावरोधादाकाङ्क्षैव नास्ति, क्रमान्तरं प्रत्ययोग्यत्वात् तस्य, तदिदमुक्तं सूत्रकृता 'उपपद्यते च' इति। भाष्यकारोऽप्याह—"न चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यत" इति। तस्मादुत्पत्तिक्रमाद्विपरीतः क्रम इत्येतन्न्यायमूला च स्मृतिरुक्ता ॥ १४ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

तदेवं भावनोपयोगिनौ (६)भूतानामुत्पत्तिप्रलयौ विचार्य बुद्धीन्द्रियमनसां क्रमं विचारयति। अत्र च विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्देनेन्द्रियाणि च बुद्धिं च ब्रूते। (७)तत्तेषां क्रमापेक्षायामात्मानं च भूतानि चान्तरा समाम्नानात्तेनैव पाठेन क्रमो नियम्यते। तस्मात्पूर्वोत्पत्तिक्रमभङ्गप्रसङ्गः। यत आत्मनः करणानि करणेभ्यश्च भूतानीति प्रतीयते, तस्मादात्मन आकाश इति भज्यते। (८)अन्नमयमिति च मयडानन्दमय इतिवद् न विकारार्थ इति प्राप्ते,

---

(१) यद्यप्यत्र श्रुतिविषमितिषेधो न परिहियते तथाप्युत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थो विचार्यत इति प्रासङ्गिकयो पादावान्तरसंङ्गती बोध्ये।

(२) यत्प्रयन्त्यभिसंविशन्तीति श्रुतौ लयमात्रमुक्तं न क्रम इति भावः।

(३) संशयमाह तत्रेति।

(४) लोकदृष्टपदार्थबोधाधीना हि श्रुतिरतः श्रुतिसन्निहितादपि लौकिकः क्रमः सन्निहिततर इति तेन तद्बाधनं युक्तमित्यर्थः। दृष्टक्रमेण श्रौतबाधे हेत्वन्तरमाह तस्मिन्निति।

(५) अनाकाङ्क्षामुपसंहरति तस्मादिति। तस्य कार्यसत्तापादकस्योत्पत्तिक्रमस्य विरुद्धो यो विपरीतक्रमस्तस्यावरोधात्सम्बन्धादित्यक्षरार्थः।

(६) इयं पूर्वाधिकरणानां प्रयोजनोक्तिः। भूतोत्पत्तिलयशीलनं ह्यद्वैतब्रह्मध्यानोपयोगीति बुध्यादुत्पत्तिक्रमविचारोऽपि तत्फलभूत एव। ननु सूत्रे विज्ञानशब्दप्रयोगात्तस्य च बुद्धिवृत्तौ प्रसिद्धेः कथं बुद्धीन्द्रियाणामुत्पत्तिचिन्तेत्यत आह अत्रेति। अध्यवसायवती बुद्धिः संशयादिमन्मन इति तयोर्भेदः।

(७) पूर्वपक्षमाह तत्रेति।

(८) ननु यदि साक्षादात्मकार्याणीन्द्रियाणि, कथं तर्ह्यन्नादिमयत्वम्मनआदीनामाम्नायतेऽत आहान्नमयमिति।

अभिधीयते—विभक्तत्वात्तावन्मनःप्रभृतीनां कारणापेक्षायामन्नमयं मन इत्यादिलिङ्गश्रवणादपेक्षितार्थकथनाय विकारार्थत्वमेव मयटो युक्तमितरथा त्वनपेक्षितमुक्तं भवेत्, (१)न च तदपि घटते, नह्यन्नमयो यज्ञ इतिवदन्नप्राचुर्यं मनसः सम्भवति, एवं चेद्भूतविकारा मनआदयो भूतानां परस्तादुत्पद्यन्त इति युक्तम् । प्रौढवादितयाऽभ्युपेत्याह—"अथ त्वभौतिकानी"ति । अवस्थात्मन एव करणानामुत्पत्तिः, न खल्वेतावता भूतैरात्मनो नोत्पत्तव्यम्, तथा च नोक्तक्रम(२)भङ्गप्रसङ्गः । विशिष्यते भिद्यते भज्यत इति यावत् ॥१५॥

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

(३)देवदत्तादिनामधेयं तावज्जीवात्मनो न शरीरस्य तन्नाम्ने शरीराय श्राद्धादिकरणानुपपत्तेः । (४)तन्मृतो देवदत्तो जातो देवदत्त इति व्यपदेशस्य मुख्यत्वं मन्वानस्य पूर्वः पक्षः (५)मुख्यत्वे शास्त्रोक्तामुष्मिकस्वर्गादिफलसम्बन्धानुपपत्तेः शास्त्रविरोधाद् लौकिकव्यपदेशो भाक्तो व्याख्येयः । भक्तिश्च शरीरस्योत्पादविनाशौ ततस्तत्संयोग इति । जातकर्मादि च गर्भबीजसमुद्भवजीवपापप्रक्षयार्थं, न तु जीवजन्मजपापक्षयार्थम् । अत एव स्मरन्ति—

एवमेनः शमं याति बीजगर्भसमुद्भवमिति ।

तस्मान्न शरीरोत्पत्तिविनाशाभ्यां जीवजन्मविनाशाविति सिद्धम् । एतच्च लौकिकव्यपदेशस्याभ्रान्तिमूलत्वमभ्युपेत्याधिकरणम् । उक्ता त्वध्यासभाष्येऽस्य भ्रान्तिमूलतेति ॥१६॥

मा भूतामस्य शरीरोदयव्ययाभ्यां स्थूलावुत्पत्तिविनाशौ, आकाशादेरिव तु महासर्गादौ तदन्ते चोत्पत्तिविनाशौ जीवस्य भविष्यत इति शङ्कान्तरमपनेतुमिदमारभ्यते—

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥**

विचारमूलसंशयस्य बीजमाह—"श्रुतिविप्रतिपत्तेरिति" । तामेव दर्शयति—"कासुचिद्धि श्रुतिष्वि"ति । पूर्वपक्षं गृह्णाति—"तत्र प्राप्त"मिति । (६)परमात्मनस्तावद्भिन्नधर्मसंसर्गादपहतानपहतपाप्मत्वादिलक्षणाज्जीवानामन्यत्वम् । ते चेन्न विकारास्ततस्तत्त्वान्तरत्वे बहुतराद्वैतश्रुतिविरोधः । ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधश्च । तस्माच्छ्रुतिभिरनुज्ञायते विकारत्वम् । प्रमाणान्तरं चात्रोक्तं "विभक्तत्वादाकाशादिवदि"ति । यथा'ऽग्नेः क्षुद्रा विस्फुलिङ्गा' इति च श्रुतिः साक्षादेव ब्रह्मविकारत्वं जीवानां दर्शयति । यथा सुदीप्तात्

---

(१) प्राचुर्यार्थत्वेऽनपेक्षितं प्राचुर्यमुक्तं भवेदित्यर्थः । तदपि-प्राचुर्यमपि । अन्नकार्यत्वं तु मनसो घटते अन्नोपयोगे मनोविवृद्धेः श्रुत्या दर्शितत्वादित्यवधेयम् ।

(२) भूतानां मध्ये आकाशः प्रथमं जायत इत्युक्तक्रमः ।

(३) देवदत्तादिनाम्नो देहवाचकत्वात्कथं भाष्ये जातो देवदत्त इत्यादिव्यपदेशात् जीवजन्मशङ्काऽत आह देवदत्तादीति ।

(४) तस्मात् ।

(५) श्राद्धादिविधिवैयर्थ्यप्रसङ्गात्स्थिर आत्मा न देहेन सह विनश्यतीति सिद्धान्तमाह मुख्यत्वे इति । भक्तिर्गुणयोगस्तत्संयोग इत्यन्वयः । शरीरोत्पादविनाशौ स्त इति शेषः ।

(६) ननु 'असम्भवस्तु' ( २ अ० ३ पा० ९ सू० ) इत्यत्र ब्रह्मजन्मनिषेधात् कथं तदव्यतिरिक्तजीवोत्पत्तिशङ्काऽत आह परमात्मन इति ।

पावकादिति च ब्रह्मणो जीवानामुत्पत्तिं च तत्राप्ययं च साक्षाद्दर्शयति । नन्वक्षराद्भावानामुत्पत्तिप्रलयाववगम्येते न जीवानामित्यत आह "जीवात्मना" मिति । स्यादेतत्, सृष्टिश्रुतिष्वाकाशाद्युत्पत्तिरिव कस्माज्जीवोत्पत्तिर्नाम्नायते, तस्मादाम्नानयोग्यस्यानाम्नानात्तस्योत्पत्त्यभावं प्रतीम इत्यत आह "न च क चिदश्रवण"मिति । एवं हि(१) कस्यां चिच्छाखायामाम्नातस्य कतिपयाङ्गसहितस्य कर्मणः शाखान्तरीयाङ्गोपसंहारो न भवेत्, तस्माद्बहुतरश्रुतिविरोधादनुप्रवेशश्रुतिर्विकारभावापत्त्या व्याख्येया(२) । तस्मादाकाशवज्जीवात्मान उत्पद्यन्त इति प्राप्ते,

उच्यते—भवेदेव यदि जीवा ब्रह्मणो भिद्येरन् न त्वेतदस्ति 'तत्सृष्ट्वा तदेवानुप्राविशदनेन जीवेने'त्यविभागश्रुतेरौपाधिकत्वाच्च भेदस्य घटकरकाद्याकाशवद्विरुद्धधर्मसंसर्गस्योपपत्तेः । उपाधीनां च मनोमय इत्यादीनां श्रुतेर्भूयसीनां च नित्यत्वाजरत्वादिगोचराणां श्रुतीनां दर्शनादुपाधिप्रविलयेनोपहितस्येति च प्रश्नोत्तराभ्या(३)मनेकधोपपादनाच्छ्रुत्या अविभागस्य च "एको देवः सर्वभूतेषु गूढ" इति श्रुत्यैवोक्तत्वान्नित्या जीवात्मानो न विकारा न चाद्वैतप्रतिज्ञाविरोध इति सिद्धम् । मैत्रेयीब्राह्मणं चाधस्ता(४)द्व्याख्यातमिति नेह व्याख्यातम् १७

## ज्ञोऽत एव ॥ १८ ॥

(५)कर्मणा हि जानात्यर्थो व्याप्तस्तदभावे न भवति धूम इव धूमध्वजाभावे, सुषुप्त्याद्यवस्थासु च ज्ञेयस्याभावात्तद्व्याप्यस्य ज्ञानस्याभावः । तथा च नात्मस्वभावश्चैतन्यं तदनुवृत्तावपि चैतन्यस्य व्यावृत्तेः । तस्मादिन्द्रियादिभावाभावानुविधानाद् ज्ञानभावाभावयोरिन्द्रियादिसन्निकर्षाधेयमागन्तुकमस्य चैतन्यं धर्मो न स्वाभाविकः । अत एवेन्द्रियादीनामर्थवत्त्वमितरथा वैयर्थ्यमिन्द्रियाणां भवेत् । नित्यचैतन्यश्रुतयश्च शक्त्यभिप्रायेण व्याख्येयाः । अस्ति हि ज्ञानोत्पादनशक्तिर्निजा जीवानां,(६) न तु व्योम्न इवेन्द्रियादिसन्निकर्षेऽप्येषां ज्ञानं न भवतीति । तस्माज्जडा एव जीवा इति प्राप्ते,

अभिधीयते—(७)यदागन्तुकज्ञानं जडस्वभावं तत्कदा चित्परोक्षं कदा चित्सन्दिग्धं कदा चिद्विपर्यस्तं, यथा घटादि, न चैवमात्मा । तथाह्यनुमिमानोऽप्यपरोक्षः स्मरन्नप्यानुभविकः संदिहानोऽप्यसन्दिग्धो विपर्यस्यन्नप्यविपरीतः सर्वस्यात्मा, तथा च तत्स्वभावः । न च तत्स्वभावस्य चैतन्यस्याभावस्तस्य नित्यत्वात् । (८)तस्माद्वृत्तयः क्रियारूपाः सकर्मिकाः कर्मा-

(१) क्वचिच्छ्रुतस्यान्यत्रानुपसंहारे ।

(२) जीवस्वरूपाविकारभावमापद्य तेन रूपेण शरीरे प्रवेश इत्येवं व्याख्येयेत्यर्थः ।

(३) 'मा भगवान् मुमुहत्, अविनाशी वा अरे अयमात्मा' इत्यादिरूपाभ्यां प्रश्नोत्तराभ्यामित्यर्थः ।

(४) 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' इति ( १ अ० ४ पा० १९ सू० ) वाक्यान्वयाधिकरणे ।

(५) ज्ञानस्यानित्यत्वे युक्तिमाह तार्किकः पूर्वपक्षी कर्मणेति ।

(६) यदि जीवानां ज्ञानशक्तिः स्वाभाविकी न भवेत्तदेन्द्रियादिसन्निकर्षेऽपि न जानीरन्नाकाशवत्, नचैवमित्याशयेनाह नत्विति ।

(७) व्यतिरेक्यनुमानमात्मनः स्वप्रकाशत्वे प्रमाणमित्याशयेन सिद्धान्त्याह यदेति ।

(८) यदुक्तमसति कर्मणि न चैतन्यमिति, तत्राह तस्मादिति ।

भावे सुषुप्त्यादौ निवर्तन्ते न चैतन्यमात्मस्वभाव इति सिद्धम् । तथा च नित्यचैतन्यवादिन्यः श्रुतयो न कथं चित् क्लेशेन व्याख्यातव्या भवन्ति । गन्धादिविषयवृत्त्युपजने चेन्द्रियाणामर्थवत्तेति सर्वमवदातम् ॥ १८ ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

यद्यप्यविकृतस्यैव परमात्मनो जीवभावस्तथा चानणुपरिमाणत्वं, तथाप्युत्क्रान्तिगत्यागतीनां श्रुतेश्च साक्षादणुपरिमाणश्रवणस्य चाविरोधार्थमिदमधिकरणमित्याक्षेपसमाधानाभ्यामाह—"ननु चे"ति । पूर्वपक्षं गृह्णाति "तत्र प्राप्तं तावदि"ति । विभागसंयोगोत्पादौ हि तूत्क्रान्त्यादीनां फलं, न च सर्वगतस्य तौ स्तः । सर्वत्र नित्यप्राप्तस्य वा सर्वात्मकस्य वा तदसंभवादिति ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रमणं हि मरणे निरूढम् । (१)तच्चाचलतोपि तत्र सतो देहस्वाम्यनिवृत्त्योपपद्यते न तु गत्यागती । तयोश्चलने निरूढयोः कर्तृस्थभावयोर्व्याप्यन्यसम्भवादिति मध्यमं परिमाणं महत्त्वं शरीरस्यैव, तच्चार्हतपरीक्षायां प्रत्युक्तम् । गत्यागती च परममहति न सम्भवतो ऽतः पारिशेष्यादणुत्वसिद्धिः । गत्यागतिभ्यां च प्रादेशिकत्वसिद्धौ मरणमपि देहादपसर्पणमेव जीवस्य न तु तत्र सतः स्वाम्यनिवृत्तिमात्रमिति सिद्धमित्याह—"सत्योश्च गत्यागत्यो"रिति । इतश्च देहादपसर्पणमेव जीवस्य मरणमित्याह—"देहप्रदेशाना"मिति । तस्माद्गत्यागत्यपेक्षोत्क्रान्तिरपि सापादानाणुत्वसाधनमित्यर्थः । (२)न केवलमपादानश्रुतेस्तच्छरीरप्रदेशगन्तव्यत्वश्रुतेरप्येवमेवेत्याह—"स एतास्तेजोमात्रा" इति ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

यत उत्क्रान्त्यादिश्रुतिभिर्जीवानामणुत्वं प्रसाधितं ततो व्यापकात्परमात्मनस्तेषां तद्विकारतया भेदः, तथा च महत्त्वानन्त्यादिश्रुतयः परमात्मविषया न जीवविषया इत्यविरोध इत्यर्थः । यदि जीवा अणवस्ततो योऽयं विज्ञानमयः प्राणेष्विति कथं शारीरो महत्त्वसम्बन्धित्वेन प्रतिनिर्दिश्यते इति चोदयति—"नन्वि"ति । परिहरति—"शास्त्रदृष्ट्या" पारमार्थिकदृष्ट्या, निर्देशो वामदेववत् । यथा हि गर्भस्थ एव वामदेवो जीवः परमार्थदृष्ट्यात्मनो ब्रह्मत्वं प्रतिपेदे एवं विकाराणां प्रकृतेर्वास्तवादभेदात्तत्परिमाणत्वव्यपदेश इत्यर्थः ॥ २१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

स्वशब्दं विभजते—"साक्षादेवे"ति । उन्मानं विभजते—"तथोन्मानमपी"ति । (३)उद्धृत्य मानमुन्मानं, बालाग्रादुद्धृतः शततमो भागस्तस्मादपि शततमादुद्धृतः

---

(१) तचेति । देहस्वामित्वं हि देहाभिमानः, तदेव च जीवनं तन्निवृत्तिश्च मरणमित्यचलतोपि तत्सम्भव इत्यर्थः ।

(२) न केवलमिति । चक्षुष्टो वा मूर्ध्नो वा निष्क्रामतीति शरीरैकदेशानामुत्क्रान्तावुपादानत्वश्रुतेरेव केवलमुत्क्रान्तिरणुत्वसाधनमित्येव न, किन्तु शरीरप्रदेशानां हृदयादीनां गन्तव्यत्वश्रुतेरप्युत्क्रान्तिरणुत्वसाधनमित्यर्थः ।

(३) उद्धृत्येति । अवयविनाऽवयवमुद्धृत्य विभज्य मानमुन्मानमित्यर्थः ।

शततमो भाग इति तदिदमुन्मानम् । (१)आराग्रादुद्धृतं मानमाराग्रमात्रमिति ॥ २२ ॥

सूत्रान्तरमवतारयितुं चोदयति—"नन्वणुत्वे सती"ति । अणुरात्मा न शरीरव्यापीति न सर्वाङ्गीणशैत्योपलब्धिः स्यादित्यर्थः ॥ २२ ॥

## अविरोधश्चन्दनवत् ॥ २३ ॥

त्वक्संयुक्तो हि जीवस्त्वक् च सकलशरीरव्यापिनीति त्वग्व्याप्यात्मसम्बन्धः सकलशैत्योपलब्धौ समर्थ इत्यर्थः ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि ॥ २४ ॥

चन्दनबिन्दोः प्रत्यक्षतोल्पीयस्त्वं बुध्वा युक्ता कल्पना भवति, यस्य तु सन्दिग्धमणुत्वं सर्वाङ्गीणं च कार्यमुपलभ्यते तस्य व्यापित्वमौत्सर्गिकमपहाय नेयं कल्पनावकाशं लभते इति शङ्कार्थः । न च हरिचन्दनबिन्दुदृष्टान्तेनाणुत्वानुमानं जीवस्य, प्रतिदृष्टान्तसम्भवेनानैकान्तिकत्वा(२)दित्याह—"न चात्रानुमानमि"ति । शङ्कामिमामपाकरोति—"अत्रोच्यत" इति । (३)यद्यपि पूर्वोक्ताभिः श्रुतिभिरणुत्वं सिद्धमात्मनस्तथापि वैभवाच्छ्रुत्यन्तरमुपन्यस्तम् ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

ये तु सावयवत्वाच्चन्दनबिन्दोरणुसञ्चारेण देहव्याप्तिरुपपद्यते न त्वात्मनोऽनवयवस्याणुसञ्चारः सम्भवी, तस्माद्वैषम्यमिति मन्यन्ते, तान्प्रतीदमुच्यते—"गुणाद्वा लोकवदि"ति । तद्विभजते—"चैतन्ये"ति । यद्यप्यणुर्जीवस्तथापि तद्गुणश्चैतन्यं सकलदेहव्यापि, यथा प्रदीपस्याल्पत्वेपि तद्गुणः प्रभा सकलगृहोदरव्यापिनीति ॥ २५ ॥

एतदपि शङ्काद्वारेण दूषयित्वा दृष्टान्तान्तरमाह—

## व्यतिरेको गन्धवत् ॥ २६ ॥

## तथा च दर्शयति ॥ २७ ॥

"अक्षीयमाणमपि तदि"ति । (४)क्षयस्यातिसूक्ष्मतयाऽनुपलभ्यमानक्षयमिति । शङ्कते—"स्यादेतदि"ति । विश्लिष्टानामल्पत्वादित्युपलक्षणं द्रव्यान्तरपरमाणूनामनुप्रवेशादित्यपि द्रष्टव्यम् । विश्लेषानुप्रवेशाभ्यां च सन्नपि विश्लेषः सूक्ष्मत्वान्नोपलक्ष्यते इति । निराकरोति—"न, कुतः ? अतीन्द्रियत्वादि"ति । परमाणूनां परमसूक्ष्मत्वात्तद्गतरूपादिवद्गन्धोपि नोपलभ्येतोपलभ्यमानो वा सूक्ष्म उपलभ्येत न स्थूल इत्यर्थः । शेषमतिरोहितार्थम् ॥ २६ ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

---

(१) बालाग्रदृष्टान्तं व्याचष्टे आराग्रादिति । आरामस्य तोत्राग्रप्रोतलोहाग्रस्य मात्रेव मात्रा परिमाणं यस्य सोऽवरो जीवो दृष्ट इति श्रुत्यर्थो बोध्यः ।

(२) चन्दनदृष्टान्तस्यानिर्णायकत्वादित्यर्थः ।

(३) नन्त्क्रान्त्यादिश्रुतिभिरेवात्मनोऽणुत्वैकदेशस्थत्वयोः सिद्धौ किमिति श्रुत्यन्तरमुदाह्रियते तत्राह यद्यपीति ।

(४) सर्वथाऽक्षीयमाणत्वे गुरुत्वादिहानानुपपत्तिरित्याक्षेपे समाधानमाह क्षयस्येति ।

निगदव्याख्यातमस्य भाष्यम् ॥ २८ ॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

"कण्टकतोदनेपी"ति । (१)महदल्पयोः संयोगोऽल्पमवरुणद्धि न महान्तं, न जातु घटकरकादिसंयोगा नभसो नभो व्यश्नुवतेऽपि स्वल्पानेव घटकरकादीनितरथा यत्र नभस्तत्र घटकरकाद्युपलम्भ इति तेऽपि नभःपरिमाणाः प्रसज्येरन्निति । न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते । (२)यद्यप्यन्तःकरणमणु, तथापि तस्य त्वचा सम्बद्धत्वात्त्वचश्च समस्तशरीरव्यापित्वादेकदेशेऽप्यधिष्ठिता त्वगधिष्ठितैवेति शरीरव्यापी जीवः शक्नोति सर्वाङ्गीणं शैत्यमनुभवितुं त्वगिन्द्रियेण गङ्गायाम्, अणुस्तु जीवो यत्रास्ति तस्मिन्नेव शरीरप्रदेशे तदनुभवेन्न सर्वाङ्गीणम्, तस्यासर्वाङ्गीणत्वात् । (३)कण्टकतोदनस्य तु प्रादेशिकतया न सर्वाङ्गीणोपलब्धिरिति वैषम्यम् । "गुणत्वमेव ही"ति । इदमेव हि गुणानां गुणत्वं यद्द्रव्यदेशत्वमत एव (४) हि हेमन्ते विषक्तावयवाप्यद्रव्यगतेऽतिसान्द्रे शीतस्पर्शेऽनुभूयमानेऽप्यनुद्भूतं रूपं नोपलभ्यते यथा, तथा मृगमदादीनां गन्धवाहाविप्रकीर्णसूक्ष्मावयवानामतिसान्द्रे (५) गन्धेऽनुभूयमाने रूपस्पर्शौ नानुभूयेते, तत्कस्य हेतोरनुद्भूतत्वात्तयोर्गन्धस्य चोद्भूतत्वादिति । न च द्रव्यस्य प्रक्षयप्रसङ्गः, द्रव्यान्तरावयवपूरणात् । अत एव कालपरिवासवशादस्य (६) हृतगन्धितोपलभ्यते । अपि च चैतन्यं नाम न गुणो जीवस्य गुणिनः किन्तु स्वभावः, न च स्वभावस्य व्यापित्वे भावस्याव्यापित्वं तत्त्वप्रच्युतेरित्याह "यदि च चैतन्यमि"ति । तदेवं श्रुतिस्मृतीतिहासपुराणसिद्धे जीवस्याविकारितया परमात्मत्वे तथा श्रुत्यादितः परममहत्त्वे च या नामाणुत्वश्रुतयस्तास्तदनुरोधेन बुद्धिगुणसारतया व्याख्येया इत्याह "तद्गुणसारत्वादि"ति । तद्व्याचष्टे "तस्या बुद्धेरि"ति । आत्मना स्वसंबन्धिन्या बुद्धेरुपस्थापितत्वात् तदा परामर्शः, (७)नहि शुद्धबुद्धमुक्तस्वभावस्यात्मनस्तत्त्वं संसारिभिरनुभूयते, अपि तु योऽयं मिथ्याज्ञानद्वेषाद्यनुषक्तः स एव प्रत्यात्ममनुभवगोचरः । (८)न च ब्रह्मस्वभावस्य जीवात्मनः कूटस्थनित्यस्य स्वत इच्छाद्रे

---

(१) ननु यदि त्वक्कण्टकसंयोगस्य यावत्त्वग्व्यापित्वात्तज्जन्यं दुःखं सर्वाङ्गीणं, तर्हि त्वन्मतेपि जीवस्य सकलदेहव्यापित्वात्तज्जीवकण्टकयोगस्यापि यावज्जीवव्यापित्वात्कण्टकजवेदनायाः सकलशरीरव्यापित्वोपलम्भप्रसङ्गः स्यात्तत्राह महदल्पयोरिति । कण्टकावच्छेदकाल्पिते जीवैकदेशे जीवकण्टकसंयोगो वर्तते न सर्वत्रेत्यर्थः ।

(२) ननु यदि महदल्पयोः संयोगोऽल्पानुरोधी तर्हि जीवमनःसंयोगोपि मनोऽनुरुन्धीतेति न तद्द्वारा सर्वाङ्गीणशैत्योपलम्भस्तत्राह यद्यपीति ।

(३) महदल्पयोरित्यादिग्रन्थोक्तं निगमयन्नाह कण्टकतोदनस्येति ।

(४) यतो द्रव्यदेशत्वनियमो यतश्चैकार्थसमवेतगुणेषु कस्यचिदुद्भवः कस्यचिच्च नेति सम्भवति अत एव हीत्यर्थः ।

(५) अतिघने ।　　(६) कालात्ययवशात् ।

(७) ननु तद्गुणसारत्वादिति हेतुरसिद्धः, स्वत एवाणुरात्मेति वदन्तं पूर्वपक्षिणं प्रत्यात्मनि बुद्धिगुणाध्यारोपासिद्धेरहमिति चात्मनो विवेकग्रहणात्तस्मिन्नारोपासिद्धेश्चेति, अत आह नहीति । अहमिति प्रतिभासेप्यनवच्छिन्नानन्दस्वभावस्यात्मतत्त्वस्याननुभवादारोपसम्भव इत्यर्थः ।

(८) ननु किमवच्छिन्नस्वभावत्वेन स्वत एव जीव इच्छादिमान् भवेत् तत्राह नचेति ।

ध्यानुषङ्गसंभव इति । बुद्धिगुणानां तेषां तदभेदाध्यासेन तद्धर्मत्वाध्यास उदशरावाध्यस्तस्यैव चन्द्रमसो बिम्बस्य तोयकम्पे कम्पवत्त्वाध्यास इत्युपपादितमध्यासभाष्ये । तथा च बुद्ध्याद्युपाधिकृतमस्य जीवत्वमिति बुद्धेरन्तःकरणस्याणुतया सोऽप्यणुव्यपदेशभाग्भवति नभ इव करकोपहितं करकपरिमाणम्, तथा चोत्क्रान्त्यादीनामुपपत्तिरिति। निगदव्याख्यातमितरत् । (१)प्रायणेऽसत्त्वमसंसारित्वं वा ततश्च कृतविप्रणाशाकृताभ्यागमप्रसङ्गः ॥ २९ ॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

यावत्संसार्यात्मभावित्वादित्यर्थः । समानः सन्निति बुद्ध्या समानः तद्गुणसारत्वादिति । "अपि च मिथ्याज्ञाने"ति । न केवलं यावत्संसार्यात्मभावित्वमागमत उपपत्तितश्चेत्यर्थः । "आदित्यवर्णमि"ति । प्रकाशरूपमित्यर्थः । "तमस" इति । अविद्याया इत्यर्थः । तमेव विदित्वा साक्षात्कृत्य मृत्युमविद्यामत्येतीति योजना ॥ ३० ॥

अनुशयबीजं पूर्वपक्षी प्रकटयति "ननु सुषुप्तप्रलययो"रिति । "सता" परमात्मना । अनुशयबीजपरिहारः । अत्रोच्यते—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

निगदव्याख्यातमस्य भाष्यम् ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥३२॥

स्यादेतद्, अन्तःकरणेऽपि सति तस्य नित्यसन्निधानात्कस्मान्नित्योपलब्ध्यनुपलब्धी न प्रसज्येते ? अथादृष्टविपाककादाचित्कत्वात्सामर्थ्यप्रतिबन्धाप्रतिबन्धाभ्यामन्तःकरणस्य नायं प्रसङ्गः, तावसत्यैवान्तःकरणे आत्मनो वेन्द्रियाणां वाऽऽस्तां, तत्किमन्तर्गडुनान्तःकरणेनेति चोदयति—"अथ वान्यतरस्यात्मन" इति । अथ वेति सिद्धान्तं निवर्त्तयति—सिद्धान्ती ब्रूते—"न चात्मन" इति । अवधानं खल्वनुबुभूषा शुश्रूषा वा । (२)न चैते आत्मनो धर्मौ, तस्याविक्रियत्वात् । न चेन्द्रियाणामेकैकेन्द्रियव्यतिरेकेऽप्यन्धादीनां दर्शनात् । न च ते आन्तरत्वेनानुभूयमाने बाह्ये सम्भवतः । तस्मादस्ति तदान्तरं किमपि यस्य चैते तदन्तःकरणम् । तदिदमुक्तं-"यस्यावधाने"ति । अत्रैवार्थे श्रुतिं दर्शयति-"तथा चेति ॥ ३२ ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

ननु तद्गुणसारत्वादित्यनेनैव जीवस्य कर्तृत्वं भोक्तृत्वं च लब्धमेवेति तद्व्युत्पादनमनर्थकमित्यत आह-'तद्गुणसारत्वाधिकारेणे"ति । तस्यैवेष प्रपञ्चो ये (३)पश्यन्त्यात्मा भोक्तैव न कर्तेति तन्निराकरणार्थः । (४)'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादि'त्याह स्म भग-

(१) भाष्ये बुद्धिवियोगे सत्यात्मनोऽसत्त्वमुक्तं तत्प्रायणगोचरमित्याह प्रायण इति । बुद्धिवियोगे चेन्मरणमात्मनस्तदाऽसत्त्वमथ वियोगेनावस्थितिस्तर्ह्यसंसारित्वमेवं सति को दोषस्तत्राह ततश्चेति ।

(२) अनुबुभूषाशुश्रूषे साश्रये गुणत्वाद्रूपवदयस्तयोराश्रयस्तन्मन इत्युक्ते सिद्धान्तिनाऽर्थान्तरत्वमाशङ्क्याह नचैते इति । (३) साङ्ख्याः ।

(४) सिद्धान्तमाह शास्त्रेति ।

वान् जैमिनिः । प्रयोक्तर्यनुष्ठातरि कर्त्तरीति यावत् । शास्त्रफलं स्वर्गादि, कुतः ? प्रयोक्तृफलसाधनतालक्षणत्वात् शास्त्रस्य विधेः, कर्त्रपेक्षितोपायता हि विधिः, बुद्धिश्चेत् कर्त्री भोक्तात्मा, ततो यस्यापेक्षितोपायो भोक्तुर्न तस्य कर्तृत्वं यस्य कर्तृत्वं न च तस्यापेक्षितोपाय इति किं केन सङ्गतमिति शास्त्रस्यानर्थकत्वमविद्यमानाभिधेयत्वं तथा चाप्रयोजनत्वं स्यात् । (१)यथा च तद्गुणसारतयास्यावस्तुसदपि भोक्तृत्वं साव्यवहारिकमेवं कर्तृत्वमपि साव्यवहारिकं न तु भाविकम् । अविद्यावद्विषयत्वं च शास्त्रस्योपपादितमध्यासभाष्य इति सर्वमवदातम् ॥ ३३ ॥

## विहारोपदेशात् ॥ ३४ ॥

विहारः संचारः क्रिया, तत्र स्वातन्त्र्यं नाकर्तुः सम्भवति, तस्मादपि कर्त्ता जीवः ।३४।

## उपादानात् ॥ ३५ ॥

तदेतेषां प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या विज्ञानं ग्रहणशक्तिमादायोपादायेत्युपादाने स्वातन्त्र्यं नाकर्तुः सम्भवति ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥३६॥

(२)अभ्युच्चयमात्रमेतन्न सम्यगुपपत्तिः । विज्ञानं कर्तृ यज्ञं तनुते सर्वत्र हि बुद्धिः करणरूपा करणत्वेनैव व्यपदिश्यते न कर्तृत्वेन इह तु कर्तृत्वेन तस्या व्यपदेशे विपर्ययः स्यात्तस्मादात्मैव विज्ञानमिति व्यपदिष्टः । तेन कर्तेति ॥ ३६ ॥

सूत्रान्तरमवतारयितुं चोदयति–"अत्राह–यदीति" । प्रज्ञावान् स्वतन्त्र इष्टमेवात्मनः सम्पादयेन्नानिष्टमनिष्टसम्पत्तिरप्यस्योपलभ्यते, तस्मान्न स्वतन्त्रस्तथा च न कर्त्ता तल्लक्षणत्वात्तस्येत्यर्थः । अस्योत्तरम्—

## उपलब्धिवदनियमः ॥ ३७ ॥

करणादीनि कारकान्तराणि कर्त्ता प्रयुङ्क्ते न स्वयं कारकान्तरैः प्रयुज्यते इत्येतावन्मात्रमस्य स्वातन्त्र्यं न तु कार्यक्रियायां न कारकान्तराण्यपेक्षत इति । ईदृशं हि स्वातन्त्र्यं नेश्वरस्याप्यत्रभवतोऽस्तीत्युरसन्नसंकथः कर्त्ता स्यात् । तथा चायमदृष्टपरिपाकवशादिष्टमभिप्रेप्सुस्तत्साधनविभ्रमणानिष्टोपायं व्यापारयन्ननिष्टं प्राप्नुयादित्यनियमः कर्तृत्वं चेति न विरोधः । **विषयकल्पनमात्रप्रयोजनत्वादिति ।** नित्यचैतन्यस्वभावस्य खल्वात्मन इन्द्रियादीनि करणानि स्वविषयमुपनयन्ति, तेन विषयावच्छिन्नमेव चैतन्यं वृत्तिरिति विज्ञानमिति चाख्यायते तत्र चास्यास्ति स्वातन्त्र्यमित्यर्थः ॥ ३७ ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

पूर्वं कारकविभक्तिविपर्यय उक्तः संप्रति कारकशक्तिविपर्यय इत्यपुनरुक्तम् । अ(३)वि-

---

(१) भोक्तुरात्मन एव कर्तृत्वमित्युक्त्वा क्रियाश्रयस्यानित्यत्वं परिहरति यथाचेति । चित्स्वभावश्चेद्भोक्तृत्वं मुक्तावपि स्यात् क्रियावेशात्मकं चेत्कर्तृत्वमपि तद्वन्न विरुद्धमिति भावः ।

(२) अङ्गीकारमात्रम् , विज्ञानशब्देन कोशरूपबुद्धेरभिधानादात्मनः कर्तृत्वासाधकत्वादित्यर्थः ।

(३) ननु कर्त्र्या बुद्धेर्न कारणशक्तिः कल्प्यते, सा तु कर्त्र्येव किन्त्वन्यदास्ति तस्याः साधारणं कारणमतः कथं शक्तिविपर्ययस्तत्राह अविपर्ययायेति । तर्हि सैव मन्मते आत्मेति संज्ञामात्रे विवादो नार्थ इति भावः ।

-पर्यायाय तु करणान्तरकल्पनायां नाम्नि विसंवाद इति ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥

समाधिरिति संयममुपलक्षयति । (१)धारणाध्यानसमाधयो हि संयमपदवेदनीयाः । यथाहुः—'त्रयमेकत्र संयम' ( पा०२ सू०४ ) इति । अत्र श्रोतव्यो मन्तव्य इति धारणो-पदेशः । निदिध्यासितव्य इति ध्यानोपदेशः । द्रष्टव्य इति समाधिरुपदेशः(२) । यथाहुः 'त-देव ध्यानमर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरि'ति । सोयमिह कर्त्रात्मा समाधावुपदि-श्यमान आत्मनः कर्तृत्वमवैतीति सूत्रार्थः ॥ ३९ ॥

## यथा च तक्षोभयथा ॥ ४० ॥

अवान्तरसङ्गतिमाह "एवं ताव"दिति । विमृशति "तत्पुनरि"ति । पूर्वपक्षं गृह्णाति-"तत्रे"ति । शास्त्रार्थवत्त्वादयो हि हेतव आत्मनः कर्तृत्वमापादयन्ति । न च स्वाभाविके कर्तृत्वे संभवति असत्यपवादे तदौपाधिकं युक्तम्, अतिप्रसङ्गात् । (३)न च मुक्त्यभावप्रस-ङ्गोस्यापवादकः, यथा ज्ञानस्वभावो ज्ञेयाभावेपि नाज्ञो भवत्येवं कर्तृस्वभावोपि क्रियावेशाभा-वेपि नाऽकर्ता । तस्मात् स्वाभाविकमेवास्य कर्तृत्वमिति प्राप्ते, ऽभिधीयते—(४)नित्यशुद्धबु-द्धमुक्तस्वभावं हि ब्रह्म भूयोभूयः श्रूयते तदस्य बुद्धत्वमसत्यपि बोद्धव्ये युक्तं वह्नेरिवासत्यपि दाह्ये दग्धृत्वं, तच्छीलस्य तस्यावगमात् । कर्तृत्वं त्वस्य क्रियावेशादवगन्तव्यम् । न च नित्योदासीनस्य कूटस्थस्य नित्यस्यासङ्गस्य तस्य संभवति, (५)तस्य च कदाचिदपि असंसर्गे कथं तच्छक्तियोगो निर्विषयायाः शक्तेरसंभवा( । तथा च यदि तत्सिद्धयर्थं(६) तद्विषयः क्रियावेशोऽभ्युपेयते तथासति तत्स्वभावस्य स्वभावोच्छेदाभावाद् भावनाशप्रसङ्गो(७) न च मुक्तस्यास्ति क्रियायोग इति । क्रियाया दुःखत्वात् न विगलितसकलदुःखपरमानन्दावस्था मोक्षः स्यादित्याशयवानाह "न स्वाभाविकं कर्तृत्वमात्मन"इति । अभिप्रायमबुध्वा चोदयति "ननु स्थितायामपी"ति । परिहरति- "न निमित्तानामपी"ति । शक्त-शक्याश्रया शक्तिः स्वसत्तयाऽवश्यं शक्यमाक्षिपति. तथा च तया ऽऽक्षिप्तं शक्यं सदैव स्यादिति भावः । चोदयति—"ननु मोक्षसाधनविधाना"दिति । परिहरति—"न साधनायत्तत्वे"ति । अस्माकं तु न मोक्षः साध्योऽपि तु ब्रह्मस्वरूपं तच्च नित्यमिति । उक्तमभिप्राय(८)माविष्करोति-"अपि च नित्यशुद्धे"ति । चोदयति-पर एव तर्हि

---

( १ ) 'देशबन्धश्चित्तस्य धारणा' 'तत्र प्रत्ययैकतानता ध्यानम्' 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव -( भवतीति ) समाधिः' ( पा० २ सू० १-२-३ ) इति पातञ्जलयोगसूत्रेभ्यस्तेषां स्वरूपं द्रष्टव्यम् ।

( २ ) वाक्ययुक्तिभ्यां ब्रह्मणि चित्तनिवेशात्मकत्वाच्छ्रवणमननयोर्धारणात्वं दर्शनस्य साक्षात्कारस्य वृ-त्तिरूपस्य ब्रह्मण्यावेशात्स्वरूपशून्यमिव भवतीति श्रवणादीनां समाधित्वमुक्तं भाष्यकारेणात्रेति भावः ।

( ३ ) नन्वात्मनो निरुपाधिककर्तृत्वे मुक्तावपि कर्मकर्तृत्वं स्यात्, अन्यथा कथं स्वाभाविकं कर्तृत्वम-थाच कथं मुक्तिरित्याशङ्क्याह न च मुक्त्यभावेति ।

( ४ ) क्रियाभ्युपगमे मुक्तिव्याघात इति प्रतिबन्दीं निरस्यन्नाह नित्येति ।

( ५ ) ननु क्रियावेशाभावेपि तद्विषयशक्तिमत्त्वं स्यात्तदेव च कर्तृत्वमित्याशङ्क्याह तस्येति ।

( ६ ) क्रियायोगविषयशक्तिसिद्ध्यर्थम् । ( ७ ) आत्मनित्यत्वहानिरित्यर्थः ।

( ८ ) ज्ञानं ब्रह्मस्वभावो न कर्तृत्वमित्यभिप्रायमित्यर्थः ।

संसारी"ति । अयमर्थः–परश्चेत्संसारी तस्याविद्याप्रविलये मुक्तौ सर्वे मुच्येरन्नविशेषात्, ततश्च सर्वसंसारोच्छेदप्रसङ्गः, परस्मादन्यश्चेत्स बुद्ध्यादिसंघात एवेति तस्यैव तर्हि मुक्तिसंसारौ नात्मन इति । परिहरति–"नाविद्याप्रत्युपस्थापितत्वा"दिति । न परमात्मनो मुक्तिसंसारौ तस्य नित्यमुक्तत्वान्नापि बुद्ध्यादिसङ्घातस्य तस्याचेतनत्वादपि त्वविद्योपस्थापितानां बुद्ध्यादिसङ्घातानां भेदात्तत्तद्बुद्ध्यादिसङ्घातभेदोपधान आत्मैकोपि भिन्न इव विशुद्धोऽप्यविशुद्ध इव ततश्चैकबुद्ध्यादिसंघातापगमे तत्र मुक्त इवेतरत्र बद्ध इव यथा मणिकृपाणाद्युपधानभेदादेकमेव मुखं नानेव दीर्घमिव वृत्तमिव श्याममिवावदातमिवान्यतमोपधानविगमे तत्र मुक्तमिवान्यत्रोपहितमिवेति नैकमुक्तौ सर्वमुक्तिप्रसङ्गस्तस्मान्न परमात्मनो मोक्षसंसारौ नापि बुद्ध्यादिसंघातस्य किन्तु बुद्ध्याद्युपहितस्यात्मस्वभावस्य जीवभावमापन्नस्येति परमार्थः । अत्रैवान्वयव्यतिरेकौ श्रुतिभिरादर्शयति—"तथा चे"ति । इतश्चौपाधिकं यदुपाध्यभिभवोद्भवाभ्यामस्याभिभवोद्भवौ दर्शयति श्रुतिरित्याह—"तथा स्वप्नजागरितयो"रिति । अत्रैवार्थे सूत्रं व्याचष्टे—"तदेतदाहे"ति । सम्प्रसादः—सुषुप्तिः । स्यादेतत्, तक्ष्णः पाण्यादयः सन्ति तैरयं वास्यादीन् व्यापारयन् भवतु दुःखी, परमात्मा त्वनवयवः केन मनःप्रभृतीनि व्यापारयेदिति वैषम्यं तक्ष्णो दृष्टान्तेनेत्यत आह—"तक्षदृष्टान्तश्चे"ति । यथा स्वशरीरेणोदासीनस्तक्षा सुखी वास्यादीनि तु करणानि व्यापारयन् दुःखी, तथा स्वात्मनात्मोदासीनः सुखी मनःप्रभृतीनि तु करणादीनि व्यापारयन् दुःखीत्येतावताऽस्य साम्यं न तु सर्वथा । (१)यथाऽऽत्मा च जीवोऽवयवान्तरानपेक्षः स्वशरीरं व्यापारयत्येवं मनःप्रभृतीनि तु करणान्तराणि व्यापारयतीति प्रमाणासिद्धे नियोगपर्यनुयोगानुपपत्तिः । पूर्वपक्षहेतूननुभाष्य दूषयति—"यत्तूक्त"मिति । यत्परं हि शास्त्रं स एव शास्त्रार्थः । कर्त्रपेक्षितोपायभावनापरं तद् न कर्तृत्वरूपपरम्, तेन यथा लोकसिद्धं कर्तारमपेक्ष्य स्वविषये प्रवर्तमानं न पुंसः स्वाभाविकं कर्तृत्वमवगमयितुमुत्सहते, (२)तस्मात्तत्त्वमसीत्याद्युपदेशविरोधादविद्याकृतं तदवतिष्ठते । चोदयति—"ननु सन्ध्ये स्थान"इति । औपाधिकं हि कर्तृत्वं नोपाध्यपगमे सम्भवतीति स्वाभाविकमेव युज्यत इत्यर्थः । अपि च यत्रापि करणमस्ति तत्रापि केवलस्यात्मनः कर्तृत्वश्रवणात्स्वाभाविकमेव युक्तमित्याह—"तथोपादानेपी"ति । तदेतत्परिहरति—"न तावत्सन्ध्य"इति । उपाध्यपगमोऽसिद्धोन्तःकरणस्योपाधेः सन्ध्येप्यवस्थानादित्यर्थः । अपि च स्वप्ने यादृशं ज्ञानं तादृशो विहारोपीत्याह—"विहारोपि च तत्रे"ति । "तथोपादानेऽपी"ति । यद्यपि कर्तृविभक्तिः केवले कर्तरि श्रूयते तथापि कर्मकरणोपधानकृतमस्य कर्तृत्वं न शुद्धस्य, नहि परशुसहायच्छेत्ता केवलश्छेत्ता भवति । (३)ननु यदि न केवलस्य कर्तृत्वमपि तु करणादिसहितस्यैव, तथा सति करणादिष्वपि कर्तृविभक्तिः स्यान्न चैतदस्तीत्याह—"भवति च लोक" इति । करणादिष्वपि

---

( १ ) तक्षणि विवक्षितविवेचनेन साम्यमुक्त्वा सर्वथा समं दृष्टान्तमाह यथेति । यः प्रेरयति स पाण्यादिभिरेव प्रेरयतीति नियोगेन नियमेन पर्यनुयोगो नियोगपर्यनुयोगस्तस्यानुपपत्तिरित्यर्थः ।

( २ ) नन्वतत्परादपि देवताविग्रहादिवत्कर्ता प्रतीयतामित्यत आह तस्मादिति ।

( ३ ) ननु यदन्याधीनस्यापि स्वातन्त्र्यवाचिनी कर्तृत्वप्रतीतिस्तर्ह्यतिप्रसङ्गः स्यादत आह ननु यदीति ।

कर्तृविभक्तिः कदाचिदस्त्येव विवक्षावशादित्यर्थः । अपि चेयमुपादानश्रुतिः करणव्यापारोपरममात्रपरा न स्वातन्त्र्यपरा, कर्तृविभक्तिस्तु भाक्ती कूलं पिपतिषतीतिवदबुद्धिपूर्वकस्य करणव्यापारोपरमस्य दृष्टत्वादित्याह—**"अपि चास्मिन्नुपादान"** इति । यस्त्वयं व्यपदेश इति यत्तदुक्तमस्माभिरभ्युच्चयमात्रमेतदिति तदितः समुत्थितम् । **"सर्वकारकाणामेवे"**ति । विक्लिद्यन्ति तण्डुला ज्वलन्ति काष्ठानि बिभर्ति स्थालीति हि स्वव्यापारे सर्वेषां कर्तृत्वम् । तत्किं बुद्ध्यादीनां कर्तृत्वमेव न करणत्वमित्यत आह—**"उपलब्ध्यपेक्षं त्वेषां करणत्वम्"** । नन्वेवंसति तस्यामेवात्मनः स्वाभाविकं कर्तृत्वमस्तित्यत आह—**"न च तस्यामुपलब्धावप्यस्य स्वाभाविकं कर्तृत्वमस्ति, कस्मात् ? नित्योपलब्धिस्वरूपत्वादा"**त्मनो नहि नित्ये स्वभावे चास्ति भावस्य व्यापार इत्यर्थः । तदेवं नास्योपलब्धौ स्वाभाविकं कर्तृत्वमस्तीत्युक्तम् , नापि बुद्ध्यादेरुपलब्धिकर्तृत्वमात्मन्यध्यस्तं यथा तद्गतमध्यवसायादिकर्तृत्वमित्याह—**"अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति"** । कुतः ? **"अहंकारस्याप्युपलभ्यमानत्वात्"** । नहि शरीरादि यस्यां क्रियायां गम्यं तस्यामेव गन्तृ भवति । एतदुक्तं भवति—यदि बुद्धिरुपलब्ध्री भवेत् ततस्तस्या उपलब्धृत्वमात्मन्यध्यस्येत । न चैतदस्ति, तस्या जडत्वेनोपलभ्यमानतयोपलब्धिकर्तृत्वानुपपत्तेः । यदा चोपलब्धौ बुद्धेरकर्तृत्वं तदा यदुक्तं बुद्धेरुपलब्धृत्वे कारणान्तरं कल्पनीयं तथा च नाममात्रे विसंवाद इति तन्न भवतीत्याह—**"न चैवंसति करणान्तरकल्पना"** बुद्धेरुपलब्धृत्वाभावात् । (१)तत्किमिदानीमकरणं बुद्धिरुपलब्धावात्मा चानुपलब्धेत्यत आह—**"बुद्धेः करणत्वाभ्युपगमात्"** । अयमभिसंधिः—चैतन्यमुपलब्धिरात्मस्वभावो नित्य इति न तत्रात्मनः कर्तृत्वम् , नापि बुद्धेः करणत्वं, किन्तु चैतन्यमेव विषयावच्छिन्नं वृत्तिरिति चोपलब्धिरिति चाख्यायते(२) । तस्य तु तत्तद्विषयावच्छेदे वृत्तौ बुद्ध्यादीनां करणत्वमात्मनश्च तदुपधानेनाहंकारपूर्वकं कर्तृत्वं युज्यत इति ॥ ४० ॥

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

यदेतज्जीवानामौपाधिकं कर्तृत्वं तत्प्रवर्तनालक्षणेषु रागादिषु सत्सु नेश्वरमपरं प्रवर्तकं कल्पयितुमर्हति, अतिप्रसङ्गात्(३) । न चेश्वरो द्वेषपक्षपातरहितो जीवान्साध्वसाधुनि कर्मणि प्रवर्तयितुमर्हति येन धर्माधर्मापेक्षया जगद्वैचित्र्यमुपपद्येत । (४)स हि स्वतन्त्रः कारुणिको धर्म एव जन्तून् प्रवर्तयेन्नाधर्मे, ततश्च तत्प्रेरिता जन्तवः सर्वे धार्मिका एवेति सुखिन एव स्युर्न दुःखिनः । स्वतन्त्रास्तु रागादिप्रयुक्ताः प्रवर्तमाना धर्माधर्मप्रचयवन्तो वैचित्र्यमनुभवन्तीति युक्तम् । एवं च विधिनिषेधयोरर्थवत्त्वमितरथा तु सर्वथा जीवा अस्वतन्त्रा इतीश्वरेणैव प्रवर्त्स्यन्त इति कृतं विधिनिषेधाभ्यां, न हि बलवदनिलसलिलौघनुद्यमानं प्रत्युपदेशो-

---

( १ ) ननूपलब्धेर्नित्यत्वात्तस्या यदि न कर्त्री बुद्धिस्तदा करणमपि न भवेत्तथा च तस्या उपलब्धिकरणत्वमीश्वरोऽर्बोध्येतत्यभिप्रायेणाशङ्कते तत्किमिदानीमिति ।

( २ ) एवं च चैतन्यव्यञ्जकवृत्तौ बुद्धेः करणत्वं तदुपहितस्य चात्मनः कर्तृत्वन्तथा च न प्रसिद्धिविरोध इति भावः । ( ३ ) रागादिमत्त्वमसङ्गात् । ननु कर्मापेक्षत्वाददोषस्तत्राह नचेति ।

( ४ ) ननु नेश्वरस्य धर्मादितन्त्रस्य प्रवर्तकत्वं किन्तु करुणाधीनस्य, तत्राह स हीति ।

ऽर्थवान्(१)। तस्मा'देष ह्येव साधु कर्म कारयती'त्यादयः श्रुतयः समस्तविधिनिषेधश्रुतिविरोधाल्लोकविरोधाच्चैश्वर्यप्रशंसापरतया नेया इति प्राप्ते, ऽभिधीयते—'एष ह्येव साधु कर्म कारयती''त्यादयस्तावच्छ्रुतयः सर्वव्यापारेषु जन्तूनामीश्वरतन्त्रतामाहुः। तदसति प्रतिबन्धके न प्रशंसापरतया व्याख्यातुमुचितम्। न च श्रुतिविरुद्धस्य कल्पनीयता, येन प्रवर्तकेषु रागादिषु सत्सु तत्कल्पना विरुध्येत। न चेश्वरतन्त्रत्वे धर्म एव जन्तूनां प्रवृत्तेः सुखित्वमेव न वैचित्र्यमिति युक्तम्। यद्यप्ययमीश्वरो वीतरागस्तथापि पूर्वपूर्वजन्तुकर्मापेक्षया जन्तून् धर्माधर्मयोः प्रवर्तयन् न द्वेषपक्षपाताभ्यां विषमो नापि निर्घृणः। न च कर्मप्रचयस्यादिरस्त्यनादित्वात्संसारस्य। न चेश्वरतन्त्रस्य कृतं विधिनिषेधाभ्यामिति साम्प्रतम्। नहीश्वरः प्रबलतरपवन इव जन्तून् प्रवर्तयत्यपि तु तच्चैतन्यमनुरुध्यमानो रागाद्युपहारमुखेनैवं चेष्टानिष्टप्राप्तिपरिहारार्थिनो विधिनिषेधावर्थवन्तौ भवतः। तदनेनाभिसन्धिनोक्तं **"परायत्तेऽपि हि कर्तृत्वे करोत्येव जीव" इति**। तस्माद्विधिनिषेधशास्त्राविरोधाल्लोकस्य स्थूलदर्शित्वात् 'एष ह्येव साधु कर्म कारयती'त्यादिश्रुतेः

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव(२) वा॥

इति स्मृतेश्चेश्वरतन्त्राणामेव जन्तूनां कर्तृत्वं, न तु स्वतन्त्राणामिति सिद्धम्। ईश्वर एव विधिनिषेधयोः (३)स्थाने नियुज्येत यद्विधिनिषेधयोः फलं तदीश्वरेण तत्प्रतिपादितधर्माधर्मनिरपेक्षेण कृतमिति विधिनिषेधयोरानर्थक्यम्। न केवलमानर्थक्यं विपरीतं चापद्यत इत्याह—**"तथा विहितकारिण'**मिति। पूर्वोक्तश्च दोषः कृतनाशाकृताभ्यागमः प्रसज्येत। अतिरोहितार्थमन्यत्॥ ४१-४२॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके॥ ४३॥

## मन्त्रवर्णाच्च॥ ४४॥

## अपि च स्मर्यते॥ ४५॥

## प्रकाशादिवन्नैवं परः॥ ४६॥

अवान्तरसङ्गतिमाह—**जीवेश्वरयो''**रिति। (४)उपकार्योपकारकभावः प्रयोज्यप्रयोजकभावः। अत्रापाततो विनिगमनाहेतोरभावादनियमोऽनिश्चय इत्युक्तम्, निश्चयहेत्वाभासदर्शनेन(५) भेदपक्षमालम्ब्याह—**"अथवे"**ति। ईशितव्येशितृभावश्चान्वेष्यान्वेष्टृभावश्च

(१) अत्यन्तपराधीने न विधिः प्रवर्तक इति भावः।

(२) नरकगर्तम्।

(३) विधिप्रतिषेधयोरीश्वर एव नियोज्य इति भ्रमं निवर्तयति स्थाने इति।

(४) जीवेश्वरयोरुपकार्योपकारकभावाभ्युपगमादिति भाष्ये उत्पाद्योत्पादकत्वमुक्तमिति भ्रमं व्युदस्यति उपकार्येति।

(५) निश्चयेति। अभेदश्रुतीषु सतीषु भेदो निर्णेतुं न शक्यत इत्याभासत्वमत एका कोटिः प्रदर्शितेत्यर्थः।

नियम्यनियन्तृभावश्च न जीवपरमात्मनोरभेदेऽवकल्प्यते । (१)न च 'ब्रह्मदाशा ब्रह्मकितवा" इत्याद्याश्च श्रुतयो दाशा ब्रह्मकितवा ब्रह्मेत्यादिप्रतिपादनपरा जीवानां ब्रह्मणो भेदेऽवकल्पन्ते । (२)न चैताभिर्भेदाभेदप्रतिपादनपराभिः श्रुतिभिः साक्षादंशत्वप्रतिपादकाच्च मन्त्रवर्णात् 'पादोऽस्य विश्वा भूतानी'त्यादेः' स्मृतेश्च 'ममैवांश' इत्यादेर्जीवानामीश्वरांशत्वसिद्धिः, (३)निरतिशयोपाधिसम्पदा च विभूतियोगेनेश्वरः स्वांशानामपि निकृष्टोपाधीनामीष्ट इति युज्यते, न हि तावदनवयवेश्वरस्य जीवा भवितुमर्हन्त्यंशाः। अपि च जीवानां ब्रह्मांशत्वे तद्गता वेदना ब्रह्मणो भवेत् , पादादिगता इव वेदना देवदत्तस्य । ततश्च ब्रह्मभूयङ्गतस्य समस्तजीवगतवेदनानुभवप्रसङ्ग इति वरं संसार एव मुक्तेस्तत्र हि स्वगतवेदनामात्रानुभवात् न भूरि दुःखमनुभवति । मुक्तस्तु सर्वजीववेदनाभागिति प्रयत्नेन मुक्तिरनर्थबहुलतया परिहर्तव्या स्यादिति । तथा भेदाभेदयोः परस्परविरोधिनोरेकत्रासम्भवाच्चांशत्वं जीवानाम् । न च ब्रह्मैव सत् ,असन्तस्तु जीवा इति युक्तम् , सुखदुःखमुक्तिसंसारव्यवस्थाभावप्रसङ्गादनुज्ञापरिहाराभावप्रसङ्गाच्च । (४)तस्माज्जीवा एव परमार्थसन्तो न ब्रह्मैकमद्वयम् । अद्वैतश्रुतयस्तु जातिदेशकालाभेदनिमित्तोपचारादिति प्राप्ते,

अभिधीयते—अनधिगतार्थावबोधनानि प्रमाणानि, विशेषतः शब्दः । (५)तत्र भेदो लोकसिद्धत्वान्न शब्देन प्रतिपाद्यः । अभेदस्त्वनधिगतत्वादधिगतभेदानुवादेन प्रतिपादनमर्हति । (६)येन च वाक्यमुपक्रम्यते मध्ये च परामृश्यते अन्ते चोपसंह्रियते तत्रैव तस्य तात्पर्यमुपनिषदश्चाद्वैतोपक्रमतत्परामर्शतदुपसंहारा अद्वैतपरा एव युज्यन्ते । न च यत्परास्तदौपचारिकं युक्तमभ्यासे हि भूयस्त्वमर्थस्य भवति नाल्पत्वमपि प्रागेवोपचरितत्वमित्युक्तम्। तस्मादद्वैते मायिके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वचनीयाविद्योपधानभेदादेकस्येव बिम्बस्य दर्पणाद्युपाधिभेदात्प्रतिबिम्बभेदाः । एवं चानुज्ञापरिहारौ लौकिकवैदिकौ सुखदुःखमुक्तिसंसारव्यवस्था चोपपद्यते । न च मोक्षस्यानर्थबहुलता, यतः प्रतिबिम्बानामिव श्यामतावदाततादिर्जीवानामेव नानावेदनाभिसम्बन्धो ब्रह्मणस्तु बिम्बस्येव न तदभिसम्बन्धः । (७)यथा च दर्पणापनये तत्प्रतिबिम्बं बिम्बभावेऽवतिष्ठते न कृपाणे प्रतिबिम्बितमप्येवमविद्योपधानविगमे जीवे ब्रह्मभाव इति सिद्धं जीवो ब्रह्मांश इव तत्तन्त्रतया न त्वंश इति तात्पर्यार्थः ॥४३–४६॥

## स्मरन्ति च ॥ ४७ ॥

(८)सप्तदशसंख्यापरिमितो राशिर्गणः सप्तदशकः । तद्यथा बुद्धिकर्मेन्द्रियाणि बाह्यानि

---

(१) विरोधोद्घाटनायापरां कोटिमाह नचेति ।

(२) न चैताभिरिति, युज्यत इत्यनेनान्वयः। अनेनोभयश्रुतीनामविरोधाशंका परास्ता वेदितव्या ।

(३) ननु जीवानामीश्वरांशत्वेऽपि नेश्वरस्य जीवनियन्तृत्वं चेतनत्वेन जीवैरविशेषादित्याशंक्याह निरतिशयेति ।

(४) अविरोधबाधाह तस्मादिति । (५) यदुक्तमीशित्रीशितव्यभावश्चेत्यादि तत्राह तत्रेति ।

(६) प्रमेयत्वापूर्वत्वलक्षणतात्पर्यलिङ्गादद्वैतश्रुतिर्बलीयसीत्युक्त्वोपक्रमाद्येकरूप्यादपीत्याह येन चेति ।

(७) ब्रह्मभावं गतस्य समस्तजीवगतवेदनाप्रसङ्ग इति यदुक्तं पूर्वपक्षिणा, तत्राह यथा चेति ।

(८) 'सप्तदशकेनापी'ति भाष्योदाहृतस्मृतौ सप्तदशपदं व्याचष्टे सप्तदशेति ।

दश, बुद्धिमनसी वृत्तिभेदमात्रेण(१) भिन्ने अप्येकीकृत्यैकमन्तःकरणं, शरीरं, पञ्च विषया इति सप्तदशको राशिः ॥ ४७ ॥

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥४८॥**

**असन्ततेश्चाव्यतिकरः ॥ ४९ ॥**

अनुज्ञा विधिरभिमतो न तु प्रवृत्तप्रवर्तना, अपौरुषेये प्रवर्तयितुरभिप्रायानुरोधासम्भवात्, क्रत्वर्थायामग्नीषोमीयहिंसायां प्रवृत्तप्रवर्तनानुपपत्तेश्च, पुरुषार्थेऽपि नियमांशे (२)ऽप्रवृत्तेः। "कः पुनर्देहसम्बन्धः" इति । न हि कूटस्थनित्यस्यात्मनोऽपरिणामिनोऽस्ति देहेन संयोगः समवायो वा ऽन्यो वा कश्चित्सम्बन्धः सकलधर्मातिगत्वादित्यभिसन्धिः । उत्तरं "देहादिरयं सङ्घातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः" । अयमर्थः—सत्यं नास्ति कश्चिदात्मनो देहादिभिः पारमार्थिकः सम्बन्धः, किन्तु बुद्ध्यादिजनितात्मविषया विपरीता वृत्तिरहमेव देहादिसंघातइत्येवंरूपा । (३)अस्यां देहादिसंघात आत्मतादात्म्येन भासते, सोऽयं सांवृतस्तादात्म्यलक्षणः सम्बन्धो न पारमार्थिक इत्यर्थः । गूढाभिसन्धिश्चोदयति—"सम्यग्दर्शिनस्तर्ही"ति । उत्तरं "न तस्ये"ति । यदि सूक्ष्मस्थूलदेहादिसंघातोऽविद्योपदर्शित एकमेवाद्वितीयं ब्रह्मास्मीति सम्यग्दर्शनमभिमतमद्धा तद्वन्तं प्रति विधिनिषेधयोरानर्थक्यमेव । एतदेव विशदयति—"हेयोपादेययो"रिति । चोदको निगूढाभिसन्धिमाविष्करोति—"शरीरव्यतिरेकदर्शिन एव" आमुष्मिकफलेषु कर्मसु दर्शपूर्णमासादिषु नियोज्यत्वमिति चेत्परिहरति—"न, तत्संहतत्वाभिमानात्" । एतद्विभजते—"सत्य"मिति । यो ह्यात्मनः (४)षाट्कौशिकाद्देहादुपपत्त्या व्यतिरेकं वेद, न तु समस्तबुद्ध्यादिव्यतिरेकं, तस्यामुष्मिकफलेऽधिकारः । समस्तबुद्ध्यादिसङ्घातिव्यतिरेकवेदिनस्तु कर्तृभोक्तृत्वाभिमानरहितस्य नाधिकारः कर्मणि । तथा च न यथेष्टचेष्टाऽभिमानविकलस्य तस्या अप्यभावादिति ॥ ४८–४९ ॥

**आभास एव च ॥ ५० ॥**

**अदृष्टानियमात् ॥ ५१ ॥**

**अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥**

**प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥**

येषां तु सांख्यानां वैशेषिकाणां वा सुखदुःखव्यवस्थां पारमार्थिकीमिच्छतां बहव आत्मानः सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति । तत्र प्रश्नपूर्वकं सांख्यान्प्रति व्यतिकमं तावदाह—"कथ"मिति । (५)यादृशस्तादृशो गुणसम्बन्धः सर्वान्पुरुषान्प्रत्यविशिष्ट इति

---

(१) संशयनिश्चयरूपवृत्तिभेदमात्रेणेत्यर्थः । (२) गोदोहनादिसाधनविशेषनियमांशेऽपीत्यर्थः ।

(३) ननु विपरीतप्रत्ययस्य कथं देहात्मसम्बन्धत्वं तस्यात्ममात्रनिष्ठत्वादत आहास्यामिति । भ्रान्तविषयमिथ्यातादात्म्यं सम्बन्ध इति वक्तुं भाष्ये विपरीतप्रत्ययोत्पत्तिरुक्तेत्यर्थः ।

(४) अस्थिस्नायुमज्जात्वङ्मांसशोणितानि षट्कोशास्तैकृतात् षाट्कौशिकात् स्थूलशरीरादित्यर्थः ।

(५) निर्विशेषस्य न सुखादिसम्बन्धोऽपीत्याह यादृश इति ।

तत्कृते सुखदुःखे सर्वान्प्रत्यविशिष्टे । (१)न च कर्मनिबन्धना व्यवस्था, कर्मणः प्राकृतत्वेन प्रकृतेश्च साधारणत्वेनाव्यवस्थातादवस्थ्यात् । चोदयति-"स्यादेतदि"ति । अयमर्थः— न प्रधानं स्वविभूतिख्यापनाय प्रवर्तते किन्तु पुरुषार्थम्, यं च पुरुषं प्रत्यनेन भोगापवर्गौ पुरुषार्थौ साधितौ तं प्रति समाप्ताधिकारतया निवर्तते, पुरुषान्तरं तु प्रत्यसमाप्ताधिकारं प्रवर्तते । एवं च मुक्तसंसारिव्यवस्थोपपत्तेः सुखदुःखव्यवस्थापि भविष्यतीति । निराकरोति-"नहीं"ति । सर्वेषां पुरुषाणां विभुत्वात्प्रधानस्य च साधारण्यादमुं पुरुषं प्रत्यनेनार्थः साधित इत्येतदेव नास्ति । तस्मात्प्रयोजनवशेन विना हेतुं व्यवस्थाऽऽस्थेया, सा चायुक्ता, हेत्वभावादित्यर्थः । भवतु सांख्यानामव्यवस्था प्रधानसमवायाददृष्टस्य, प्रधानस्य च साधारण्यात् । काणादादीनां त्वात्मसमवाय्यदृष्टं प्रत्यात्मसाधारणं तत्कृतश्च मनसा सहात्मनः स्वस्वामिभावलक्षणः सम्बन्धोऽनादिरदृष्टभेदानामनादित्वात् , तथा चात्ममनःसंयोगस्य साधारण्येऽपि स्वस्वामिभावस्यासाधारण्यादभिसन्ध्यादिव्यवस्थोपपद्यत एव । न च संयोगोऽपि साधारणः, न हि तस्य मनस आत्मान्तरैर्यः संयोगः स एव स्वामिनाप्यात्मसंयोगस्य प्रतिसंयोगिभेदेन भेदात् । (२)तस्मादात्मैकत्वस्यागमसिद्धत्वाद्व्यवस्थायाश्चैकत्वेऽपि उपपत्तेर्नानेकात्मकल्पना गौरवादागमविरोधाच्चान्त्यविशेषवत्त्वेन च भेदकल्पनायामन्योन्याश्रयापत्तेः— भेदे हि तत्कल्पना ततश्च भेद इति । एतदेव काणादमतदूषणम् , भाष्यकृता तु प्रौढवादितया काणादान्प्रत्यप्यदृष्टानियमादित्यादीनि सूत्राणि योजितानि, सांख्यमतदूषणपराण्येवेति तु रोचयन्ते केचित्तदास्तां तावत् ॥ ५०–५३ ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे
भामत्यां द्वितीयाध्यायस्य तृतीयः पादः ॥

## तथा प्राणाः ॥ १ ॥

(३)यद्यपि ब्रह्मवेदने सर्ववेदनप्रतिज्ञातदुपपादनश्रुतिविरोधाद्बहुतराद्वैतश्रुतिविरोधाच्च प्राणानां सर्गादौ सद्भावश्रुतिर्वियदमृतत्वादिश्रुतय इवान्यथा कथञ्चिन्नेतुमुचिता, तथाप्यन्यथानयनप्रकार(४)मविद्वानन्यथानुपपद्यमानैकापि श्रुतिर्बह्वीरन्यथयेदिति मन्वानः पूर्वपक्षयति । अत्र चाभ्युच्चयतया वियदधिकरणपूर्वपक्षहेतून् स्मारयति—"तत्र तावदि"ति । (५)शब्दैकप्रमाणसमधिगम्या हि महाभूतोत्पत्तिस्तस्या यत्र शब्दो निवर्तते तत्र तत्प्रमाणाभा-

(१) आत्ममनःसंयोगस्याप्यसाधारण्यमाह नचेति ।

(२) यद्यदृष्टाद्यनियमेन न वैशेषिकमतं दूषणीयं कथं तर्हि दूषणीयमत आह तस्मादिति ।

(३) वियदधिकरणेन गतार्थत्वमाशंक्य परिहरन्नाह यद्यपीत्यादिना, सर्ववेदनप्रतिज्ञारूपा श्रुतिस्तस्य सर्ववेदनस्योपपादनश्रुतिश्च यथोक्ता ताभ्यां विरोधादित्यर्थः ।

(४) अवान्तरप्रलयाभिप्रायम् ।

(५) ननु भाष्यकारीयमनाम्नानात्प्राणानामनुत्पत्तिनिर्धारणं कथं सङ्गच्छते पुराणनगरस्थानीयेषु व्यभिचारेण प्रमाणाभावमात्रस्य प्रमेयाभावव्याप्त्यभावात् इत्याशंक्याह शब्देकेति । यत्र–प्राणलक्षणमहाभूते । तदभावः–प्राणोत्पत्त्यभावः ।

वेन तदभावः प्रतीयते, यथा चैत्यवन्दनतत्कर्मधर्मताया इत्यर्थः । अत्रापाततः श्रुतिविप्रतिपत्त्यनध्यवसायेन पूर्वपक्षयित्वा ऽथ वेत्यभिहितं पूर्वपक्षमवतारयति । अभिप्रायोऽस्य दर्शितः 'पानव्यापच्च तद्वदि'त्यत्रा(१)श्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षसूत्रार्थसादृश्यं सदा परामृष्टम् । राद्धान्तस्तु स्यादेतदेवं यदि सर्गादौ प्राणसद्भावश्रुतिरनन्यथासिद्धा भवेत्, अन्यथैव त्वेषा सिद्ध्यति । अवान्तरप्रलये ध्वनिसाधनानां सृष्टिर्वक्ष्यत इति तदर्थोऽसावुपक्रमः । तत्राधिकारिपुरुषः प्रजापतिरप्रनष्ट एव त्रैलोक्यमात्रं प्रलीनमतस्तदीयान्प्राणानपेक्ष्य सा श्रुतिरुपपन्नार्था । तस्माद्भूयसीनां श्रुतीनामनुग्रहाय सर्वविज्ञानप्रतिज्ञोपपत्त्यर्थस्य चोत्तरस्य संदर्भस्य गौणत्वे तु प्रतिज्ञातार्थानुगुण्याभावेनानपेक्षितार्थत्वप्रसङ्गात् प्राणा अपि नभोवद्ब्रह्मणो विकारा इति । न च चैत्यवन्दनादिवत्सर्वथा प्राणानामुत्पत्त्यश्रुतिः, क्वचित् खल्वेषामुत्पत्त्यश्रवणमुत्पत्तिश्रुतिस्तु तत्रतत्र दर्शिता । तस्माद्वैषम्यं चैत्यवन्दनपोषधा(२)दिभिरिति । केचित्त्वियदधिकरणव्याख्यानेन गौण्यसम्भवा दिति सूत्रं व्याचक्षते—गौणी प्राणानामुत्पत्तिश्रुतिरसम्भवादुत्पत्तेरिति तदयुक्तम्, विकल्पासहत्वात् । तथाहि--प्राणानां जीववद्वाविकृतब्रह्मात्मतयानुपपत्तिः स्यात्, ब्रह्मणस्तत्त्वान्तरतया वा ? न तावज्जीववदेषामविकृतब्रह्मात्मता जडत्वात् । तस्मात्तत्त्वान्तरतयैषामनुत्पत्तिरास्थेया(३) । तथा च ब्रह्मवेदनेन सर्ववेदनप्रतिज्ञाव्याहतिः समस्तवेदान्तव्याकोपश्चेत्येतदाह "वियदधिकरणे ही"ति ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

निगदव्याख्यातमस्य भाष्यम् ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

वाच इति वाक्प्राणमनसामुपलक्षणम् । अयमर्थः—यत्रापि तेजःप्रभृतीनां सृष्टौ प्राणसृष्टिर्नोक्तेति ब्रूषे, तत्राप्युक्तेति ब्रूमहे । तथाहि–यस्मिन् प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्रा-

---

(१) अश्वेति । पूर्वमीमांसायां 'दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् (अ० ३ पा० ४ सू० ३४) इत्यत्र दाननिमित्तेष्टिः कथिता, सा किं लौकिकेऽश्वदाने वैदिके वेति सन्देहे दोषनिघातार्थत्वादिष्टेः दोषस्य च न केसरिणो ददातीति प्रतिषिद्धलौकिकाश्वदान एव सम्भवात्पौण्डरीकेऽश्वसहस्रं दक्षिणेत्यादिविशेषविधिविहिते तु वैदिकेऽश्वदाने सामान्यनिषेधानवकाशेन दोषाप्राप्ते लौकिकेऽश्वदान एवेष्टिरिति पूर्वपक्षे 'अर्थवादोऽनुपपातात्तस्मायज्ञे प्रतीयते ( अ० ३ पा० ४ सू० ३९ ) इति सिद्धान्तसूत्रम् । न तावद्यथाश्रुतिजलोदररूपवरुणग्रहदोषो लौकिकेऽश्वदाने सति भवतीति प्रत्यक्षतः प्रमीयते तत्रानेन दाने दोषः तन्निर्घातार्था चेष्टिरिति वदतो वाक्यभेदात् तस्मात्प्राप्तस्यानुवादोऽयम्, ततो यज्ञसंबंधिनि दाने इष्टिरिति । अतःपरं, च तस्याः कर्तृचिन्ता कृता तत्परसूत्रेषु, तत्र यजमानकर्तृकत्वमुक्तेष्टेः स्थापितम् । एवं च तथाश्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षवल्लौकिके धातुसाम्यार्थं पीतसोमस्य वमने याग इन्द्रियेण वीर्येण व्यर्ध्यते यः सोमं वमतीति दोषात् वमननिमित्तेन्द्रियशोषस्य दर्शनाच्च वरुणग्रहवदप्राप्तिरित्यधिकाशङ्का, वैदिके तु सोमपाने शेषभक्षितपत्तेर्जातत्वाद्वमने न दोष इति। लोके धातुसाम्यार्थत्वाद्वमनस्य तजन्येन्द्रियशोषस्य धातुसाम्यकरत्वाच्च दोषता, वेदे तु 'मा मे वाङ्नाभिमिति गा' इति सम्यग्जरणार्थमन्त्रलिङ्गाद्वमने कर्मवैगुण्याद्दोष इति भावः ।

(२) उपवासवाची पोषधशब्द इति कल्पतरौ ।

(३) आस्थेयेति । अविद्यादिवदनाद्यध्यासासिद्धये साक्षिणोऽव्यवधानात्सुषुप्तेऽप्युपलम्भप्रसङ्गादित्यर्थः ।

णमनसामाम्नायतेऽन्नमयं हीत्यादिना, तद्यदि मुख्यार्थं ततस्त(१)त्सामान्यात्सर्वेषामेव प्राणानां सृष्टिरुक्ता, अथ गौणं तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायामुपक्रमोपसंहारपर्यालोचनया श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चार्थमेव प्राणादीनामापोमयत्वाद्यभिधानमित्युक्तेव तत्रापि प्राणसृष्टिरिति सिद्धम् ॥ ४ ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

अवान्तरसङ्गतिमाह—"उत्पत्तिविषय" इति। संशयकारणमाह "श्रुतिविप्रषेधादि"ति । "विशयः" संशयः । क्वचित्सप्त प्राणाः तद्यथा—चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति, क्वचिदष्टौ प्राणा ग्रहत्वेन–बन्धनेन गुणेन सङ्कीर्त्यन्ते, तद्यथा–प्राणरसनवाक्चक्षुःश्रोत्रमनोहस्तत्वगिति, त एते ग्रहाः। एषां तु विषया (२)अतिग्रहास्त्वष्टावेव "प्राणो वै ग्रहः सोपानेनातिग्रहेण गृहीतो ऽपानेन हि गन्धान् जिघ्रती"त्यादिना सन्दर्भेणोक्ताः । क्वचिन्नव, तद्यथा–सप्त वै शीर्षण्या प्राणाः द्वाववाञ्चाविति द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका वागिति सप्त, पायूपस्थौ बुद्धिमनसी वा द्वाववाञ्चाविति नव । क्वचिद्दश—नव वै पुरुषे प्राणास्त उक्ता नाभिर्दशमीति । क्वचिदेकादश, दशेमे पुरुषे प्राणाः । तद्यथा,–बुद्धीन्द्रियाणि घ्राणादीनि पञ्च कर्मेन्द्रियाण्यपि हस्तादीनि पञ्चात्मैकादश, आप्नोति व्याप्नो(३)त्यधिष्ठानेनेत्यात्मा मनः स एकादश इति । क्वचिद्द्वादश । 'सर्वेषां स्पर्शानां त्वगेकायनमि'त्यत्र । तद्यथा–त्वङ्नासिकारसनचक्षुःश्रोत्रमनोहृदयहस्तपादोपस्थपायूवागिति । क्वचिदेत एव प्राणा अहङ्काराधिकास्त्रयोदश । एवं विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः । अत्र प्रश्नपूर्वं पूर्वपक्षं गृह्णाति किं तावत्प्राप्तं ? "सप्तैवे"ति । सप्तैव प्राणाः । कुतः ? "गतेः" । अवगतेः । "श्रुतिभ्यः" 'सप्त प्राणाः प्रभवन्ती'त्यादिभ्यः । न केवलं श्रुतितोऽवगतेर्विशेषणादप्येवमेवेत्याह—"विशेषितत्वाच्च" । "सप्त वै शीर्षण्याः प्राणा" इति । (४)ये सप्त शीर्षण्याः श्रोत्रादयस्ते प्राणा इत्युक्ते इतरेषामशीर्षण्यानां हस्तादीनामप्राणत्वं गम्यते । यथा दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीति गम्यते । एतदुक्तं भवति—यद्यपि श्रुतिविप्रतिषेधो यद्यपि च पूर्वसंख्यासु न परासां संख्यानां निवेशस्तथाऽप्यवच्छेदकत्वेन महीनां संख्यानामसम्भवादेकस्यां कल्प्यमानायां सप्तत्वमेव युक्तं प्राथम्याल्लाघवाच्च, वृत्तिभेदमात्रविवक्षयात्वष्टत्वादयो गमयितव्या इति प्राप्तम् ॥ ५ ॥

एवं प्राप्ते, उच्यते—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति न सप्तैव, किन्तु हस्तादयोऽपि प्राणाः । प्रमाणान्तरादेकाद-

---

(१) तत्सामान्यादिति । अन्नादीनां ह्रासवृद्धी मनआदीनां ह्रासवृद्ध्योर्दर्शनादन्नमयादित्वमिन्द्रियान्तराणां तुल्यमित्यर्थः ।

(२) रागोत्पादनेनेन्द्रियाकर्षकत्वाद्विषयाणामतिग्रहत्वं बोध्यम् ।

(३) अधिष्ठानेनेति । इन्द्रियाणीति शेषः । त्वगेकायनं–त्वगिन्द्रियमेकमाश्रय इत्यर्थः ग्राहकत्वात् ।

(४) ननु शीर्षण्याः प्राणाः सप्तेत्युक्तेऽशीर्षण्या अन्ये सन्तीति गम्यते अत आह ये सप्तेति । नात्र सप्तत्वविधिः किन्तु प्राणत्वविधिः, तथा च प्राणान्तरव्यावृत्तिः फलमित्यर्थः ।

शये प्राणानां स्थियते ऽतोऽस्मिन् सति सार्वविभक्तिकस्तसिः । नैवम् , लाघवात्प्राथम्याच्च सप्तत्वमित्यक्षरार्थः । एतदुक्तं भवति । (१)यद्यपि श्रुतयः स्वतःप्रमाणतयाऽनपेक्षास्त-थापि परस्परविरोधान्नार्थतत्त्वपरिच्छेदायालम् । न च सिद्धे वस्तुनि अनुष्ठान इव विकल्पः सम्भवति । तस्मात्प्रमाणान्तरोपनीतार्थवशेन व्यवस्थाप्यन्ते । यथा स्रुवेणावद्यतीति मांस-पुरोडाशावदानासंभवात् सम्भवाच्च द्रवावदानस्य स्रुवावदाने द्रवाणीति व्यवस्थाप्यते(२), एवमिहापि रूपादिबुद्धिपञ्चककार्यव्यवस्थातश्चक्षुरादिबुद्धीन्द्रियकरणपञ्चकव्यवस्था । नह्य-न्धादयः सत्स्वपीतरेषु घ्राणादिषु गन्धाद्युपलब्ध्यनुमितसद्भावेषु रूपादीनुपलभन्ते । तथा वचनादिलक्षणकार्यपञ्चकव्यवस्थातो वाक्पाण्यादिलक्षणकर्मेन्द्रियपञ्चकव्यवस्था । नहि जातु मूकादयः सत्स्वपि विहरणाद्यवगतसद्भावेषु पादादिषु बुद्धीन्द्रियेषु वा वचनादिमन्तो भवन्ति । एवं कर्मबुद्धीन्द्रियासम्भविन्या संकल्पादिक्रियाव्यवस्थयान्तःकरणव्यवस्थानुमानम् । एक-मपि चान्तःकरणमनेकक्रियाकारि भविष्यति, यथा प्रदीप एको रूपप्रकाशवर्तिविकारस्नेहशो-षणहेतुः । तस्मान्नान्तःकरणभेदः । एकमेव त्वन्तःकरणं मनना(३)न्मन इति चाभिमानाद-हंकार इति चाध्यवसायाद्बुद्धिरिति चाख्यायते । वृत्तिभेदाच्चाभिन्नमपि भिन्नमिवोपचर्यते त्रयमिति, तत्त्वेन त्वेकमेव भेदे प्रमाणाभावात् । तदेवमेकादशानां कार्याणां व्यवस्थानादेका-दश प्राणा इति श्रुतिराञ्जसी । तदनुगुणतया त्वितराः श्रुतयो नेतव्याः । तत्रावयुत्यनुवादे-न(४) सप्ताष्टनवदशसंख्याश्रुतयो यथैकं वृणीते द्वौ वृणीते इति त्रीन् वृणीत इत्येतदानुगुण्यात् । द्वादशत्रयोदशसंख्याश्रुती तु कथंचिद्वृत्तिभेदेन भेदं विवक्षित्वोपासनादिपरतया नेतव्ये । तस्मादेकादशैव प्राणा नेतर इति सिद्धम् । अपि च शीर्षण्यानां प्राणानां यत्सप्तत्वाभिधानं तदपि चतुर्ष्वेव व्यवस्थापनीयम् , प्रमाणान्तरविरोधात् । न खलु द्वे चक्षुषी, रूपोपलब्धि-लक्षणस्य कार्यस्याभेदात् । पिहितैकचक्षुषस्तु न तादृशी रूपोपलब्धिर्भवति यादृशी समग्र-चक्षुषः, तस्मादेकमेव चक्षुरधिष्ठानभेदेन तु भिन्नमिवोपचर्यते । काणस्याप्येकगोलकगतेन चक्षु-रवयवेनोपलम्भः । एतेन घ्राणश्रोत्रे अपि व्याख्याते ।

---

(१) इह रूपोपलब्ध्यादिकार्यवशादनुमानानुगृहीतैकादशत्वश्रुत्यैकादशेन्द्रियाणीति सिद्धान्त्यते, तद-युक्तम् , श्रुतेः परतः प्रामाण्यप्रसङ्गादित्याशङ्क्याह यद्यपीति । श्रुतीनां परस्पराविरोधावबोधकत्वभ्रमे तद्-व्युदासेन तात्पर्यनिर्णयायानुमानानुसरणमित्यर्थः ।

(२) व्यवस्थाप्यत इति । 'स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यतीति जैमिनीये श्रूयते । अत्रा-वदानं द्रव्याणामाज्यादीनां संहतानां मांसादीनां च भवति, तत्राविशेषश्रवणादनियमे प्राप्ते, सिद्धान्तः— अशक्यार्थविध्यसंभवाद्विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति शक्तश्च स्रुवो द्रव्यस्यावदाने स्वधितिर्मां-सस्य हस्तः पुरोडाशस्य, तस्मादर्थसामर्थ्यात्कल्पनाव्यवस्था, सामर्थ्यस्य योग्यतात्मकस्य बोधकैकदे-शत्वादिति ।

(३) संशयादिरूपविचारकरणात् ।

(४) अवयुत्यनुवादेनेति । न तावत्सप्त वै शीर्षण्याः प्राणा इति श्रुतेरज्ञातार्थबोधकत्वम् 'सप्तभिर्धूपय-ति सप्त वै शीर्षण्याः प्राणाः, शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान्दधाती'त्युखाधूपनस्तुतिपरत्वात् । ततः प्राणान्तरव्यावृत्तिपरत्वयोजना न युक्ता । यद्यपि दशेमे पुरुषे प्राणा आत्मैकादश इत्यनुवाद एव तथापि सदनुवाद इति विशेषः ।

(१)इयमपरा सूत्रद्वययोजना—"सप्तैव प्राणा" चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वच उत्क्रान्तिमन्तः स्युः। सप्तानामेव गतिश्रुतेर्विशेषितत्वादिति व्याख्यातुं शङ्कते "ननु सर्वशब्दोऽप्यत्रे"ति। अस्योत्तरं "विशेषितत्वादि"ति। चक्षुरादयस्त्वक्पर्यन्ता उत्क्रान्तौ विशेषिताः। तस्मात्सर्वशब्दस्य प्रकृतापेक्षत्वात् सप्तैव प्राणा उत्क्रामन्ति न पाण्यादय इति प्राप्तम्। चोदयति "नन्वत्र विज्ञानमष्टम"मिति। न विजानातीत्याहुरित्यनेनानुत्क्रान्तम्। परिहरति–"नैष दोष" इति। सिद्धान्तमाह–"हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणा" उत्क्रान्तिभाजोऽवगम्यन्ते ग्रहत्वश्रुतेर्हस्तादीनाम्। एवं खल्वेषां ग्रहत्वाम्नानमुपपद्येत। यद्यामुक्तेरात्मानं बध्नीयुरितरथा षाट्कौशिकशरीरवदेषां ग्रहत्वं नाम्नायेत। अत एव च स्मृतिरेषां मुक्त्यवधितामाह—"पुर्यष्टकेने"ति। तथाथर्वणश्रुतिरप्येषामेकादशानामुत्क्रान्तिमभिवदति। तस्माच्छ्रुत्यन्तरेभ्यः स्मृतेश्च सर्वशब्दार्थासंकोचाच्च सर्वेषामुत्क्रमणे स्थितेऽस्मिन्नेवं यदुक्तं सप्तैवेति, किन्तु प्रदर्शनार्थं सप्तत्वसंख्येति सिद्धम् ॥ ६ ॥

## अणवश्च ॥ ७ ॥

(२)अत्र सांख्यानामाहंकारिकत्वादिन्द्रियाणामहंकारस्य च जगन्मण्डलव्यापित्वात्सर्वगताः प्राणाः, वृत्तिस्तेषां शरीरदेशतया प्रादेशिकी तन्निबन्धना च गत्यागतिश्रुतिरिति मन्यन्ते, तान्प्रत्याह–"अणवश्च"। प्राणा, अनुद्भूतरूपस्पर्शता चाणुत्वं दुरधिगमत्वान्न तु परमाणुत्वं देहव्यापिकार्यानुत्पत्तिप्रसङ्गात्तापदनस्य(३) शिशिरह्रदनिमज्जनस्य सर्वाङ्गीणशीतस्पर्शोपलब्धिरस्तीत्युक्तम्। एतदुक्तं भवति—यदि सर्वगतानीन्द्रियाणि भवेयुस्ततो व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्गः। (४)सर्वगतत्वेऽपि देहावच्छिन्नानामेव करणत्वं तेन न व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्ग इति चेद्, (५) हन्त प्राप्ताप्राप्तविवेकेन शरीरावच्छिन्नानामेव तेषां करणत्वमिन्द्रियत्वमिति न व्यापिनामिन्द्रियभावः। तथा च नाममात्रे विसंवादो नार्थेऽस्माभिस्तदिन्द्रियमुच्यते भवद्भिस्तु वृत्तिरिति सिद्धमणवः प्राणा इति ॥ ७ ॥

## श्रेष्ठश्च ॥ ८ ॥

न केवलमितरे प्राणा ब्रह्मविकाराः श्रेष्ठश्च प्राणो ब्रह्मविकारः। (६)नासदासीदित्यधि-

---

(१) गतेरित्यस्यावगत्यर्थत्वेन, श्रुत्यन्तरगताधिकप्राणावगतेश्च वृत्तिभेदाविषयकत्वकल्पनेन च पूर्वव्याख्याने क्लिष्टत्वम्, ये सप्त त एव प्राणा इति योजनायां परिसंख्यापत्तिश्चेत्यभिप्रायेण व्याख्यानान्तरमाहेयमपरेति। तथाचात्र व्याख्याने नावधारणं सप्तैवेति किन्तु सन्त्वन्ये प्राणा उत्क्रान्तिस्तु सप्तानामेवेत्यवधारणम्। सप्तैव प्राणा इति भाष्ये चोत्क्रामन्तीत्यस्याध्याहार्यम्। प्रयोजनं चोत्क्रमतामेव प्राणानां सर्वदेहानुयायितया बन्धकत्वादध्यात्माधिदैविकोपासनेषु सप्तानामुपास्तिः पूर्वपक्षे, सिद्धान्ते चैकादशानामिति।

(२) एकादशप्राणानामुत्क्रान्तिर्न मुख्या तेषां व्यापित्वादिति सङ्गतिप्रदर्शनपूर्वकं सांख्यानां पूर्वपक्षमाहात्रेति। वृत्तिः—अभिव्यक्तिः।

(३) परितप्तस्य। (४) सांख्यः शङ्कते सर्वगतत्वेपीति।

(५) समाधत्ते हन्तेति। अहङ्कारस्य व्यापित्वमसिद्धम्, आध्यात्मिकाहङ्कारस्याहम्प्रत्ययेन परिच्छेदप्रतिभासनाद, आधिदैविकाहङ्कारस्य व्यापकत्वे तु न प्रमाणम्, इन्द्रियाणां तत्प्रकृतिकत्वे तु वन्ध्यासुतवमम् व्यापित्वं तेषां न सम्भवतीति भावः।

(६) आसीदित्यस्य महाप्रलयविषयत्वेनाधिकाशङ्कामाह नासदासीदिति।

कृत्य प्रवृत्ते ब्रह्मसूक्ते नासदासीये सर्गात्प्रागानीदिति प्राणव्यापारश्रवणादसति च व्यापारवति व्यापारानुपपत्तेः प्राणसद्भावाज्ज्येष्ठत्वश्रुतेश्च न ब्रह्मविकारः प्राण इति मन्वानस्य बहुश्रुतिविरोधेऽपि च श्रुत्योरेतयोर्गतिमपश्यतः पूर्वपक्षः ।

राद्धान्तस्तु—बहुश्रुतिविरोधादेवानीदिति न प्राणव्यापारप्रतिपादिनी किन्तु सृष्टिकारणमानीत् जीवतिस्म, आसीदिति यावत् , तेन तत्सद्भावप्रतिपादनपरा । ज्येष्ठत्वं च श्रोत्राद्यपेक्षमिति गमयितव्यम् । तस्माद्बहुश्रुत्यनुरोधान्मुख्यस्यापि प्राणस्य ब्रह्मविकारत्वमिति सिद्ध ॥ ८ ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

(१)संप्रति मुख्यप्राणस्वरूपं निरूप्यते । अत्र हि 'यः प्राणः स वायुरि'ति श्रुतेर्वायुरेव प्राण इति प्रतिभाति । (२)अथ वा 'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषे'ति वायोर्भेदेन प्राणस्य श्रवणादेतद्विरोधाद्वरं(३) तन्त्रान्तरीयमेव प्राणस्य स्वरूपमस्तु श्रुती च विरुद्धार्थे कथंचिन्नेष्येते इति सामान्यकरणवृत्तिरेव प्राणोऽस्तु । (४)न चात्रापि करणेभ्यः पृथक् प्राणस्यानुक्रमणश्रुतिविरोधो वृत्तिवृत्तिमतोर्भेदादिति पूर्वः पक्षः ।

सिद्धान्तस्तु—न सामान्येन्द्रियवृत्तिः प्राणः । स हि मिलितानां वेन्द्रियाणां वृत्तिर्भवेत् प्रत्येकं वा ? न तावन्मिलितानाम् , एकद्वित्रिचतुरिन्द्रियाभावे तदभावप्रसङ्गात्, नो खलु चूर्णहरिद्रासंयोगजन्माऽरुणगुणस्तयोरन्यतराभावे भवितुमर्हति, न च बहुविष्टि(५)साध्यं शिबिकोद्वहनं द्वित्रिविष्टिसाध्यं भवति । न च त्वगेकसाध्यं, तथासति सामान्यवृत्तित्वानुपपत्तेः । अपि च यत्सम्भूय कारकाणि निष्पादयन्ति तत्प्रधानव्यापारानुगुणावान्तरव्यापारेणैव यथा वयसां प्रातिस्विको व्यापारः पञ्जरचालनानुगुणः । न चेन्द्रियाणां प्राणे प्रधानव्यापारे जनयितव्येऽस्ति तादृशः कश्चिदवान्तरव्यापारस्तदनुगुणः । ये च रूपादिप्रत्यया न ते तदनुगुणा,(६)स्तस्मान्नेन्द्रियाणां सामान्यवृत्तिः प्राणस्तथा च वृत्तिवृत्तिमतोः कथंचिद्भेदविवक्षया न पृथगुपदेशो गमयितव्यः । तस्मान्न क्रिया नापि वायुमात्रं प्राणः, किन्तु वायुभेद(७) एवाध्यात्ममापन्नः पञ्चव्यूहः प्राण इति ॥ ९ ॥

स्यादेतत् , यथा चक्षुरादीनां जीवं प्रति गुणभूतत्वाज्जीवस्य च श्रेष्ठत्वाज्जीवः स्वतन्त्र एवं प्राणोऽपि प्राधान्यात् श्रेष्ठत्वाच्च स्वतन्त्रः प्राप्नोति, न च द्वयोः स्वतन्त्रयोरेकस्मिञ्छरीरे एकवाक्यत्वमुपपद्यत इत्यपर्यायं विरुद्धानेकदिक्क्रियतया देह उन्मथ्येतेति प्राप्ते उच्यते—

---

(१) सङ्गतिमाह सम्प्रतीति । उत्पत्तिचिन्तान्ते उत्पद्यमानस्वरूपं निरूप्यत इत्यर्थः ।

(२) भाष्ये श्रुतिबलेन वायुरेव प्राण इत्येकं पूर्वपक्षमुक्त्वा साङ्ख्योक्तकरणव्यापारः प्राण इति पूर्वपक्षान्तरमुक्तन्तदसम्भवि दृढश्रौतपक्षं त्यक्त्वा स्मार्तपक्षोपन्यासवैयर्थ्यादतआहाथवेति ।

(३) एतद्विरोधात्—भेदाभेदश्रवणयोर्विरोधात् । कथञ्चित्-वायुप्राणयोः स्वरूपाभेदमाश्रित्याभेदश्रुतिः, वृत्तितद्भेदाभिप्राया च भेदश्रुतिरिति प्रकारेण ।

(४) नन्वेतस्माज्जायते इत्यादिना करणभिन्नः प्राणः स्वतन्त्रवदुपादिष्टः तत्कथं करणव्यापारः स्यादतोऽत्रापि समः श्रुतिविरोध इत्यत आह नचेति ।

(५) वाहकः ।

(६) तदुपरमेपि सुषुप्तौ प्राणदर्शनादित्यर्थः ।

(७) वायुपरिणामकार्यविशेष इत्यर्थः ।

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥**

यद्यपि चक्षुराद्यपेक्षया श्रेष्ठत्वं प्राधान्यं च प्राणस्य तथापि संहतत्वादचे(१)तनत्वाद्भौतिकत्वाच्चक्षुरादिभिः सह शिष्टत्वाच्च पुरुषार्थत्वात्पुरुषं प्रति पारतन्त्र्यं शयनासनादिवद्भवेत्। तथा च यथा मन्त्रीतरेषु नैयोगिकेषु प्रधानमपि राजानमपेक्ष्यास्वतन्त्र एवं प्राणोऽपि चक्षुरादिषु प्रधानमपि जीवेऽस्वतन्त्र इति ॥ १० ॥

स्यादेतत्, चक्षुरादिभिः सह शासनेन करणं चेत् प्राण एवंसति चक्षुरादिविषयरूपादिवदस्यापि विषयान्तरं वक्तव्यम्, न च तच्छक्यं वक्तुम्, एकादशकरणगणनव्याकोपश्चेति दोषं परिहरति--

**अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥**

न प्राणः परिच्छेदधारणा(२)दिकरणमस्माभिरभ्युपेयते येनास्य विषयान्तरमन्विष्येत, एकादशत्वं च करणानां व्याकुप्येतापि तु प्राणान्तरासम्भवि देहेन्द्रियविधारणकारणं प्राणः। तच्च श्रुतिप्रबन्धेन दर्शितं न केवलं शरीरेन्द्रियधारणमस्य कार्यम् ॥ ११ ॥

अपि च--

**पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ १२ ॥**

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्। यथा मरुमरीचिकादिषु सलिलादिबुद्धयः। अतद्रूपप्रतिष्ठता च संशयेऽप्यस्ति तस्यैकाप्रतिष्ठानात्, अतः सोऽपि संगृहीतः। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। (३)यद्यपि मिथ्याज्ञानेऽप्यस्ति वस्तुशून्यता तथापि न तस्य व्यवहारहेतुतास्ति--अस्य तु पण्डितरूपविचारासहस्यापि शब्दज्ञानमाहात्म्याद् व्यवहारहेतुभावोऽस्त्येव, यथा पुरुषस्य चैतन्यमिति, नह्यत्र षष्ठ्यर्थः सम्बन्धोऽस्ति तस्य भेदाधिष्ठानत्वात् चैतन्यस्य पुरुषादत्यन्ताभेदात्। (४)यद्यपि चात्राभावप्रत्ययालम्बना वृत्तिर्नेष्यते तथापि विक्षेपसंस्कारलक्षणा मनोवृत्तिरिहास्त्येवेति सर्वमवदातम् ॥ १२ ॥

**अणुश्च ॥ १३ ॥**

"समस्त्रिभिर्लोकैरि"ति विभुत्वश्रवणाद्विभुः प्राणः, "समः प्लुषिणेऽ"त्यादयस्तु श्रुतयो विभोरप्यवच्छेदादुपपत्स्यन्ते। यथा विभुन आकाशस्य कुट(५)करकाद्यवच्छेदात्कुटादिसाम्यमिति प्राप्त आह--"अणुश्च"। उत्क्रान्तिगत्यागतिश्रुतिभ्य आध्यात्मिकस्य प्राणस्यावच्छिन्नता न विभुत्वम्। दुरधिगमतामात्रेण च शरीरव्यापिनोऽप्यणुत्वमुपचर्यते न त्वणुत्वमित्यु-

---

( १ ) वेदान्तिमतेनायं हेतुः, पूर्वस्तु सत्त्वादिगुणसंहतिरूपः साङ्ख्यानां बोध्यः।

( २ ) धारणं—मेधा।

( ३ ) उक्तयोगसूत्रेऽनुपातित्वान्तविशेषणेन विकल्पस्य विपर्ययाद्भेद उक्तस्तं विशदयन्नाह यद्यपीति। अधिष्ठानत्वे प्रमिते व्यवहारहेतुत्वं विशेष इत्यर्थः।

( ४ ) ननु अभावप्रत्ययालम्बना वृत्तिर्निद्रेति निद्रावृत्तिः प्रदर्शिता पातञ्जले सिद्धान्ते तु सुषुप्तौ मनोलय इष्टः तत्कथं तन्मान्तरस्थपञ्चवृत्तितेत्यत आह यद्यपीति।

( ५ ) कुटो घट इति कल्पतरौ।

क्रमधरतात् । यत्त्वस्य विभुत्वाम्नानं,(१) तदाधिदैविकेन सूत्रात्मना समष्टिव्यष्टिरूपेण, न-त्वाध्यात्मिकेन रूपेण, तदाश्रयाश्च "समः प्लुषिणेत्ये"वमाद्याः श्रुतयो देहसाम्यमेव प्राण-स्याहुः स्वरूपतो न तु करकाकाशवत्परोपाधिकतया कथञ्चिन्नेतव्या इति ॥ १३ ॥

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

प्राणवताशब्दात् ॥ १५ ॥

तस्य च नित्यत्वात् ॥ १६ ॥

यद्धि यत्कार्यं कुर्वद्दृष्टं तत्स्वमहिम्नैव करोतीत्येष तावदुत्सर्गः, पराधिष्ठानं तु तस्य बलवत्प्रमाणान्तरवशात् । स्यादेतत्, (२)वास्यादीनां तक्षाद्यधिष्ठितानामचेतनानां कार्यकरि-त्वदर्शनादचेतनत्वेनेन्द्रियाणामप्यधिष्ठातृदेवताकल्पनेति चेत् ।(३)न, जीवस्यैवाधिष्ठातुश्चेतनस्य विद्यमानत्वात् ।(४)'न चाग्निर्वाग्भूत्वा मुखं प्राविश'दित्यादिश्रुतिभ्यो देवतानामप्यधिष्ठातृत्व-मभ्युपगन्तुं युक्तम् । अनेकाधिष्ठानाभ्युपगमे हि तेषामेकाभिप्रायनियमनिमित्ताभावान्न किंचि-त्कार्यमुत्पद्येत विरोधात् ।(५)अपि च य इन्द्रियाणामधिष्ठाता स एव भोक्तेति देवतानां भोक्तृत्वेन स्वामित्वं शरीर इति न जीवः स्वामी स्याद् भोक्ता च । तस्मादग्न्याद्युपचारो वागादिषु प्रकाशकत्वादिना केनचिन्निमित्तेन गमयितव्यो न तु स्वरूपेणाग्न्यादिदेवतानां मुखाद्यनुप्रवेश इति प्राप्तम् ।

एवं प्राप्ते उच्यते—(६)नानाविधासु तावच्छ्रुतिषु स्मृतिषु च तत्रतत्र वागादिष्वग्न्या-दिदेवताधिष्ठानमवगम्यते । न च तदसत्यामनुपपत्तौ क्लेशेन व्याख्यातुमुचितम् । न च स्व-रूपोपयोगभेदज्ञानविरहिणो जीवस्येन्द्रियाधिष्ठातृत्वसम्भवः, सम्भवति तु देवतानामिन्द्रिया-द्यार्षेण ज्ञानेन साक्षात्कृतवतीनां तत्स्वरूपभेदतदुपयोगभेदविज्ञानम् । तस्मात्तास्ता एव देव-तास्तत्तत्करणाधिष्ठात्र्य इति युक्तं न तु जीवः । भवतु वा जीवोऽप्यधिष्ठाता तथाप्यदोषः । अनेकेषामधिष्ठातॄणामेकः परमेश्वरोऽस्ति नियन्तान्तर्यामी तद्वशाद् विप्रतिपित्सवोऽपि न विप्रतिपत्तुमर्हन्ति । तथा चैकवाक्यतया न तत्कार्योत्पत्तिप्रत्यूहः । (७)न चैतावता देव-तानामत्र शरीरे भोक्तृत्वम् , न हि यन्ता रथमधितिष्ठन्नपि तत्साध्यविजयादेर्भोक्ताऽपि तु स्वाम्येव । एवं देवता अधिष्ठात्र्योऽपि न भोक्त्र्यस्तासां तावन्मात्रस्य श्रुतत्वात् । भोक्ता तु जीव एव । न च नरादिशरीरोचितं दुःखबहुलमुपभोगं सुखमय्यो देवता अर्हन्ति । तस्मा-

---

(१) सम एभिस्त्रिभिरित्युक्तश्रुत्येत्यर्थः । समष्ट्या सामान्यरूपेण व्यष्ट्या विशेषरूपेण, नत्विति । वि-शेषमात्रप्राणरूपेण न विभुत्वाम्नानमिति भावः । तदाश्रयाः—आध्यात्मिकप्राणान्वयाः । प्लुषिर्मशकशरी-रात्सूक्ष्मशरीरो पुत्तिकाख्यो जन्तुविशेषः ।

(२) अत्र करणानि चेतनाधिष्ठितानि अचेतनत्वे सति प्रवर्तमानत्वाद्वास्यादिवदिति पूर्वपक्षानुमाना-कारो द्रष्टव्यः। (३) तत्र सिद्धसाधनाभिप्रायेणोत्तरयति नेति ।

(४) अनुमानाबाध्यत्वमेवागमबाध्यत्वमुत्सर्गस्य दर्शयन्नाह नचेति ।

(५) जीवदेवतानामधिष्ठातृत्वसाम्यमभ्युपगम्य विरोधः प्रदर्शित अधुना विरोधाभावमेवाहापि चेति ।

(६) आगमस्तावदुत्सर्गस्यापवादकः, न च स औपचारिकः साभ्यासत्वात् इत्याह नानेति ।

(७) करणाधिष्ठातृत्वाद्देवतानां भोग इति पूर्वपक्षयुक्तं निरस्यन्नाह नचैतावतेति । यो यदधिष्ठाता स तत्साध्यफलभोक्तेति न व्याप्तिः यन्तरि अनेकान्तादित्यर्थः ।

स्प्राणानामधिष्ठात्र्यो देवता इति सिद्धम् । शेषमतिरोहितार्थम् ॥ १४ ॥ १५ ॥ १६ ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

## भेदश्रुतेः ॥ १८ ॥

## वैलक्षण्याच्च ॥ १९ ॥

(१)मा भूत्प्राणो वृत्तिरिन्द्रियाण्येवास्य ज्येष्ठस्य श्रेष्ठस्य च प्राणस्य वृत्तयो भविष्यन्ति । तद्भावाभावानुविधायिभावाभावत्वमिन्द्रियाणां श्रुत्यनुभवाविद्धं, तथा च प्राण(२)शब्दस्यैकस्यान्याय्यमनेकार्थत्वं न भविष्यति, वृत्तीनां वृत्तिमतस्तत्त्वान्तरत्वाभावात् । तत्त्वान्तरत्वे त्विन्द्रियाणां प्राणशब्दस्यानेकार्थत्वं प्रसज्येत, इन्द्रियेषु लाक्षणिकत्वं वा । न च मुख्यसम्भवे लक्षणा युक्ता, जघन्यत्वात् । न च भेदेन व्यपदेशो भेदसाधन'मेतस्माज्जायते प्राण' इत्यादिः मनसोऽपीन्द्रियेभ्योऽस्ति भेदेन व्यपदेश इत्यनिन्द्रियत्वप्रसङ्गः । (३)स्मृतिवशात्तु तस्येन्द्रियत्वे इन्द्रियाणामपि प्राणाद्भेदेन व्यपदिष्टानामप्यस्ति प्राणस्वभावत्वे 'हन्ता'स्यैव रूपमसामे'ति श्रुतिः(४) । तस्मादुपपत्तेः श्रुतेश्च प्राणस्यैव वृत्तय एकादशेन्द्रियाणि न तत्त्वान्तराणीति प्राप्तम् ।

एवं प्राप्त उच्यते—मुख्यात्प्राणात्तत्त्वान्तराणीन्द्रियाणि तत्रतत्र भेदेन व्यपदेशात्, मृत्युप्राप्ताप्राप्तत्वलक्षणविरुद्धधर्मसंसर्गश्रुतेः ।(५)अर्थक्रियाभेदाच्च देहधारणं हि प्राणस्य क्रियाऽर्थालोचनमनने चेन्द्रियाणां, न च तद्भावाभावानुविधानं तद्धात्ततामावहति, देहेन व्यभिचारात्, प्राणादयो हि देहान्वयव्यतिरेकानुविधायिनो न च देहात्मानः । या ऽपि च प्राणरूपतामिन्द्रियाणामभिदधाति श्रुतिः, तत्रापि पौर्वापर्यालोचनायां भेद एव प्रतीयत इत्युक्तं भाष्यकृता । तस्माद्बहुश्रुतिविरोधात्पूर्वापरविरोधाच्च प्राणरूपताभिधानमिन्द्रियाणां प्राणायत्ततया भाक्तं गमयितव्यम् । मनसस्त्विन्द्रियत्वे स्मृतेरवगते क्वचिदिन्द्रियेभ्यो भेदेनोपादानं गोबलीवर्दन्यायेन । अथ वेन्द्रियाणां वर्तमानमात्रविषयत्वान्मनसस्तु त्रैकाल्यगोचरत्वाद्भेदेनाभिधानम् । न च प्राणे व्यपदेशभेदबाहुल्यं तथा नेतुं युक्तम् । प्राणरूपताश्रुतेश्च गतिर्दर्शिता तथा ज्येष्ठे प्राणशब्दस्य मुख्यत्वादिन्द्रियेषु ततस्तत्त्वान्तरेषु लाक्षणिकः प्राणशब्द इति युक्तम् । न च मुख्यत्वानुरोधेनावगतभेदयोरैक्यं युक्तं मा भूद्गङ्गादीनां तीरादिभिरैक्यमिति ।

(६)अन्ये तु भेदशब्दाध्याहारभिया भेदश्रुतेश्चेति पौनरुक्त्यभिया च तच्छब्दस्य चानन्तरोक्तपरामर्शकत्वादन्यथा वर्णयाञ्चक्रुः । किमेकादशैव वागादय इन्द्रियाण्याहो प्राणोपीति

---

( १ ) इन्द्रियतत्त्वे तदधिष्ठातृचिन्ता, तान्येव तु न मुख्यप्राणव्यतिरेकेण सन्तीत्यभिप्रायेणाक्षिपति माभूदिति । ( २ ) तस्मादेत एतेनाख्यायन्ते इतीत्यस्येत्यर्थः ।

( ३ ) मनःषष्ठानीन्द्रियाणीति स्मृतिवशादित्यर्थः । ( ४ ) प्राणसंवादे इन्द्रियाणामुक्तिश्रुतिः ।

( ५ ) अर्थक्रियाभेदादिति । बाह्येन्द्रियाणामर्थालोचनं, मनसो मननमिति अर्थक्रियाभेदादित्यर्थः ।

( ६ ) भाष्यकारव्याख्यानेऽरुचिं दर्शयन् व्याख्यान्तरमाहान्ये त्विति । न केवलमध्याहारसापेक्षत्वात् प्रतिज्ञाऽयुक्तत्वं किन्तु पौनरुक्त्याद्धेत्वयुक्तत्वमपीत्याह भेदश्रुतेश्चेति ।

विशये (१)इन्द्रस्यात्मनो लिङ्गमिन्द्रियं तथा च वागादिवत्प्राणस्यापीन्द्रलिङ्गताऽस्ति । न च रूपादिविषयालोचनकरणतेन्द्रियता,ऽऽलोकस्यापीन्द्रियत्वप्रसङ्गात् । तस्माद्भौतिकमिन्द्रलिङ्गमिन्द्रियमिति वागादिवत्प्राणोऽपीन्द्रियमिति प्राप्तम् ।

एवं प्राप्ते ऽभिधीयते—इन्द्रियाणि वागादीनि श्रेष्ठात् प्राणादन्यत्र । कुतः ? तेनेन्द्रियशब्देन तेषामेव वागादीनां व्यपदेशात् , न हि मुख्ये प्राण इन्द्रियशब्दो दृष्टचरः । इन्द्रलिङ्गता तु व्युत्पत्तिमात्रनिमित्तं यथा गच्छतीति गौरिति, प्रवृत्तिनिमित्तं तु (२)देहाधिष्ठानत्वे सति रूपाद्यालोचनकरणत्वम् । इदं चास्य देहाधिष्ठानत्वं यद्देहानुग्रहोपघाताभ्यां तदनुग्रहोपघातौ । तथा च नालोकस्येन्द्रियत्वप्रसङ्गः । तस्माद्रूढेर्वागादय एवेन्द्रियाणि न प्राण इति सिद्धम् । भाष्यकारीयं त्वधिकरणं भेदश्रुतेरित्यादिषु सूत्रेषु नेयम् ॥१७॥ ॥१८॥१९॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥

सत्प्रक्रियायां "तत्तेज ऐक्षते"त्यादिना सन्दर्भेण तेजोबन्नानां सृष्टिं विधायोपदिश्यते—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति । (३)अस्यार्थः—पूर्वोक्तं बहुभवनमीक्षणप्रयोजनमद्यापि सर्वथा न निष्पन्नमिति पुनरीक्षां कृतवती बहुभवनमेव प्रयोजनमुद्दिश्य, कथं ? हन्तेदानीमहमिमा यथोक्तास्तेजआद्यास्तिस्रो देवताः (४)पूर्वसृष्टावनुभूतेन सम्प्रति स्मरणसन्निधापितेन जीवेन प्राणधारणकर्त्रात्मनानुप्रविश्य बुद्ध्यादिभूतमात्रायामादर्श इव मुखबिम्बं तोय इव चन्द्रमसो बिम्बं छायामात्रतयानुप्रविश्य नाम च रूपं च ते व्याकरवाणि विस्पष्टं करवाणीदमस्य नामेदं च रूपमिति । (५)तासां तिसृणां देवतानां त्रिवृतं त्रिवृतं तेजोबन्नात्मना त्र्यात्मिकाम्त्र्यात्मिकामेकैकां देवतां करवाणीति । तत्र संशयः—किं जीवकर्तृकमिदं नामरूपव्याकरणमाहो परमेश्वरकर्तृकमिति ? यदि जीवकर्तृकं तत आकाशो वै नामरूपयोर्निर्वहितेत्यादिश्रुतिविरोधादनध्यवसायः । अथ परमेश्वरकर्तृकं, ततो न विरोधः । (६)तत्र डित्थडवित्थादिनामकरणे च घटपटादिरूपकरणे च जीवकर्तृत्वदर्शनात्, इहापि त्रिवृत्करणे नामरूपकरणे चास्ति सम्भावना जीवस्य, तथा च यौगपत्यादनेन जीवेनेति व्याकरवाणीति प्रधानक्रियया सम्बध्यते, न त्वानन्तर्यादनुप्रविश्येत्यनेन सम्बध्यते । प्रधानपदार्थसम्बन्धो हि साक्षात्सर्वेषां गुणभूतानां पदार्थानामौत्सर्गिकस्तादर्थ्यात्तेषाम् । तस्य तु क्वचित्साक्षादसम्भवात् परम्पराश्रयणं, साक्षात्सम्भवश्च योग्यतया दर्शितः । ननु सेयं देवतेति परमेश्वरकर्तृत्वं श्रूयते, सत्यं, प्रयोजकतया तु तद्भविष्यति । यथा लोके चारेणाहं परसैन्यमनुप्रविश्य

---

(१) संशये । नन्विन्द्रियशब्दश्चक्षुरादिषु रूढः कथं प्राणबोधकः स्यादत आहेन्द्रस्येति । जीवस्य प्राप्तस्येत्यर्थः ।

(२) इन्द्रियत्वव्यञ्जकमाह देहाधिष्ठानत्वे इति । अत्र देहशब्दोऽवयवपरः ।

(३) विषयप्रदर्शकभाष्यमुदाहृत्य व्याचष्टे अस्यार्थ इति ।

(४) ननु प्रलये प्राणस्याभावात्कथं तद्धारणनिमित्तो जीवशब्दस्तत्राह पूर्वसृष्टाविति ।

(५) त्रिवृत्करणश्रुतिं व्याचष्टे तासामिति ।

(६) जीवस्य समुद्रादिरूपनामनिर्माणयोग्यताया अभावात् जीवेनेत्यस्य व्याकरवाणीत्यनेन सम्बन्धाभावे पूर्वपक्षासम्भवमाशंक्याह तत्रेति । सामान्यतो नामरूपनिर्माणसामर्थ्यं जीवस्यापि घटत इत्यर्थः ।

सङ्कलयानीति । यदि पुनरस्य साक्षात्कर्तृभावो भवेदनेन जीवेनेत्यनर्थकं स्यात् । (१)नहि जीवस्यान्यथाकरणभावो भवितुमर्हति । प्रयोजककर्तुस्तत्साक्षात्कर्ता करणं भवति प्रधानक्रियोद्देशेन प्रयोजकेन प्रयोज्यकर्तुर्व्यापनात् । तस्मादत्र जीवस्य कर्तृत्वं नामरूपव्याकरणेऽन्यत्र तु परमेश्वरस्येति विरोधादनध्यवसाय इति प्राप्तम् ।

एवं प्राप्त उच्यते—परमेश्वरस्यैवेहापि नामरूपव्याकर्तृत्वमुपदिश्यते न तु जीवस्य, तस्य प्रधानक्रियासंबन्धं प्रत्ययोग्यत्वात् । नन्वन्यत्र डित्थडवित्थादिनामकर्मणि(२) घटशरावादिरूपकर्मणि च कर्तृत्वदर्शनादिहापि योग्यता सम्भाव्यत इति चेत् । (३)न । गिरिनदीसमुद्रादिनिर्माणासामर्थ्येनार्थापत्त्यभावपरिच्छिन्नेन सम्भावनापबाधनात् । तस्मात् परमेश्वरस्यैवात्र साक्षात्कर्तृत्वमुपदिश्यते न जीवस्यानुप्रविश्येत्यनेन तु सन्निहितेनास्य सम्बन्धो योग्यत्वात् । न चानर्थक्यं त्रिवृत्करणस्य, भोक्तृजीवार्थतया तदनुप्रवेशाभिधानस्यार्थवत्त्वात् । स्यादेतत्, अनुप्रविश्य व्याकरवाणीति समानकर्तृत्वे क्त्वः(४) स्मरणात्प्रवेशनकर्तुर्जीवस्यैव व्याकर्तृत्वमुपदिश्यतेऽन्यथा तु परमेश्वरस्य व्याकर्तृत्वे जीवस्य प्रवेष्टृत्वे भिन्नकर्तृकत्वेन क्त्वः प्रयोगो व्याहन्येतेत्यत्राह—"**न च जीवो नामे**" ति । अतिरोहितार्थमन्यत् ॥ २० ॥

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

अत्र भाष्यकृतोत्तरसूत्रशेषतया सूत्रमेतद्विषयोपदर्शनपरतया व्याख्यातं शङ्कानिराकरणार्थत्वमप्यस्य शक्यं वक्तुम्, तथाहि—योऽन्नस्याणिष्ठो भागस्तन्मनस्तेजसस्तु योऽणिष्ठो भागः स वागित्यत्र हि काणादानां सांख्यानां चास्ति विप्रतिपत्तिः तत्र काणादा मनो नित्यमाचक्षते । सांख्यास्त्वाहंकारिके वाङ्मनसे । (५)अन्नभागतावचनं त्वस्यान्नसम्बन्धलक्षणार्थम् । अन्नोपयोगे हि मनः स्वस्थं भवति । एवं वाचोऽपि पाटवेन तेजस्साम्यमभ्यूहनीयम् । तत्रेदमुपतिष्ठते—"**मांसादीति**" । (६)वाङ्मनस इति वक्तव्ये मांसाद्यभिधानं सिद्धेन सह साध्यस्योपन्यासो दृष्टान्तलाभाय । यथा मांसादिभौमाद्येवं वाङ्मनसे अपि तैजसभौमे इत्यर्थः । एतदुक्तं भवति । (७)न तावद्ब्रह्मव्यतिरिक्तमस्ति किंचिन्नित्यम्, ब्रह्मज्ञानेनसर्वज्ञानप्रतिज्ञाव्याघातात्, बहुश्रुतिविरोधाच्च । नाप्याहंकारिकमहंकारस्य सांख्याभिमतस्य तत्त्वस्याप्रामाणिकत्वात् । तस्मादसति बाधके श्रुतिराजसी नान्यथा कथंचिन्नेतुमुचितेति कंचिद्दोषमित्युक्तं तद्दोषतां दर्शयत्यत्राह पूर्वपक्षी—"**यदि सर्वमेवे**"ति ॥ २१ ॥

---

(१) ननु साक्षात्कर्तृदेवताकरणं जीवो भवतु तक्ष्ण इव वास्यादीत्याशंक्याह नहीति । जीवश्चेतनत्वात्कर्त्रैव, यत्र च कर्त्रन्तरं प्रति करणं तत्र करणभूतस्य स्वतन्त्रकर्तृत्वमितरस्य तु प्रयोजककर्तृत्वं चारेण सङ्कलयानीत्यादौ तथा दर्शनादिति भावः । (२) नामोत्पादने ।

(३) सामान्यतोऽवगतयोग्यत्वस्य विशेषे बाधकाभावादपवादमाह नेति । अर्थापत्त्यभावेति । कार्यजनकत्वान्यथानुपपत्त्या करणसामर्थ्यं सिद्ध्यति जीवस्य तु समुद्रादिजनकत्वादर्शनान्न तत्रार्थापत्तिः सम्भवत्यतः सामर्थ्याभावोऽर्थापत्त्यनुदयपरिच्छिन्न इत्यर्थः ।

(४) क्त्वाप्रत्ययस्य । (५) योऽणिष्ठस्तन्मन इत्युक्तमन्नस्य सूक्ष्मभागान्मनतावचनमित्यर्थः ।

(६) ननु तेजस्सूक्ष्मभागो वाक्, अन्नसूक्ष्मभागो मन इत्यादिश्रुतेर्वाङ्मनसयोस्तैजसत्वभौमत्वे वक्तव्ये कथं मांसादेर्भौमत्वमुच्यते, तत्राह वाङ्मनस इति । आदिशब्देनातेजःकार्यमज्जालोहितयोर्ग्रहणम् ।

(७) मनोनित्यत्वं दूषयति न तावदिति ।

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

त्रिवृत्करणविशेषेऽपि यस्य च यत्र भूयस्त्वं तेन तस्य व्यपदेश इत्यर्थः ॥ २२ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीमद्भगवत्पादशारीरकभाष्यविभागे
भामत्यां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥
समाप्तश्चायमध्यायः ॥ शुभम् ॥

---

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

द्वितीयतृतीयाध्याययोर्हेतुहेतुमद्भावलक्षणं सम्बन्धं दर्शयन् सुखावबोधार्थमर्थसङ्क्षेपमाह—"द्वितीयेऽध्याय" इति । (१)स्मृतिन्यायश्रुतिविरोधपरिहारेण हि अनध्यवसायलक्षणमप्रामाण्यं परिहृतं, तथा च प्रामाण्ये निश्चलीकृते तार्तीयो विचारो भवत्यन्यथा तु निर्बीजतया न सिध्येदिति । (२)अवान्तरसङ्गतिं दर्शयितुं तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि चेत्युक्तम् । अध्यायार्थसङ्क्षेपमुक्त्वा पदार्थसङ्क्षेपमाह—"तत्र प्रथमे तावत्पाद" इति । तस्य प्रयोजनमाह—"वैराग्ये"ति । (३)पूर्वापरपरिशोधनाय भूमिकामारचयति—"जीवो मुख्यप्राणसचिव" इति । "करणोपादानवद् भूतोपादानस्याश्रुतत्वा"दिति । अत्र च करणोपादानश्रुत्यैव भौतिकत्वात्करणानां भूतोपादानसिद्धेरिन्द्रियोपादानातिरिक्तभूतविवक्षयाधिकरणारम्भः । यदि भूतान्यादायागमिष्यत्तदा तदपि करणोपादानवदेवाश्रोष्यत , न च श्रूयते, तस्मान्न भूतपरिष्वक्तो रंहत्यपि तु करणमात्रपरिष्वक्तः । (४)नह्यागमैकगम्येऽर्थे तदभावः प्रमेयाभावं न परिच्छेत्तुमर्हति । न च देहान्तरारम्भान्यथानुपपत्त्या भूतपरिष्वक्तस्य रंहणकल्पनेति युक्तमित्याह—"सुलभाश्च सर्वत्र भूतमात्रा" इति । "द्युपर्जन्ये"ति । इह हि कार्यारम्भणमग्निहोत्रापूर्वपरिणामलक्षणं श्रद्धादित्वेन पञ्चधा प्रविभज्य पञ्चसु द्युप्रभृतिषु अग्निषु होतव्यत्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विवक्षन्त्याह श्रुतिः—'असौ वाव लोको गौतमाग्नि'रित्यादि । (५)अत्र सायम्प्रातरग्निहोत्राहुती हुते पयआदिसाधने श्रद्धापूर्वमाहवनीयाग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गभाविते कर्त्रादिकारकभाविते चान्तरिक्षं क्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते द्रवद्रव्यपयःप्रभृत्यप्सम्बन्धादप्शब्दवाच्ये श्रद्धाहेतुकत्वाच्च श्रद्धाशब्दवाच्ये, तयोराहुत्योराधिकरणमग्निरन्ये च समिद्धूमार्चिरङ्गारविस्फुलिङ्गा रूपकत्वेन निर्दिश्यन्ते–(६)'असौ वाव द्युलोको गौतमाग्निः' । यथाग्नि-

---

(१) हेतुहेतुमद्भावं विशदयति स्मृतीत्यादिना । स्मृतिन्यायश्रुतिभिः सह श्रुतीनां विरोधपरिहारेणेत्यर्थः ।

(२) पादसङ्गतिम् ।   (३) पूर्वपक्षोत्तरपक्षशोधनाय । भूमिका—विषयः ।

(४) ननु भूतोपादानाश्रवणं तदभावबोधकं न भवेत्सत्यपि प्रमेये प्रमाणानुदयसम्भवादत आह नहीति । नानाप्रमाणगम्ये हि वस्तुन्येकप्रमाणानुत्पत्तावपि प्रमाणान्तरप्रवृत्तिशङ्कया वस्तुसद्भावशङ्का स्यान्न प्रकृत इत्यर्थः ।

(५) यदि द्युलोकादिषु अग्नित्वसम्पादनं विधीयतेऽत्र कथं तर्ह्यापः पुरुषवचस इति प्रश्ने आहुतावप्शब्दः ? कथं वोत्तरे श्रद्धां जुहोतीति श्रद्धाशब्द अत आहात्रेति ।

(६) पञ्चाग्निविद्याश्रुतिमुदाहृत्य व्याचष्टे असौ वावेत्यादिना ।

होत्राधिकरणमाहवनीय एव श्रद्धाशब्दवाच्यमिहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा या आपः श्रद्धाभावितास्तदधिकरणं द्युलोकः। अस्यादित्य एव समित्, तेन हीद्धोऽसौ द्युलोको दीप्यतेऽतः समिन्धनात् समित् तस्यादित्यस्य रश्मयो धूमा इन्धनादिवादित्याद्रश्मीनां समुत्थानाद् हरर्चिप्रकाशसामान्यादादित्यकार्यत्वाच्च(१)। चन्द्रमा अङ्गारोऽर्चिषः प्रशमेऽभिव्यक्तेः। नक्षत्राण्यस्य विस्फुलिङ्गाश्चन्द्रमसोऽङ्गारस्यावयवा इव विप्रकीर्णतासामान्याद्विस्फुलिङ्गास्तदेतस्मिन्नग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधिदेवम्। श्रद्धां जुह्वति श्रद्धा चोक्ता। पर्जन्यो वाव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेषस्तस्य वायुरेव समित् वायुना हि पर्जन्योऽग्निः समिध्यते पुरोवातादिप्राबल्ये वृष्टिदर्शनात्। अभ्रं धूमः धूमकार्यत्वात् धूमसादृश्याच्च विद्युदर्चिः प्रकाशसामान्यात्। अशनिरङ्गाराः काठिन्याद्विद्युत्संम्बन्धाच्च। (२)गर्जितं मेघानां विस्फुलिङ्गाः विप्रकीर्णतासामान्यात्। तस्मिन्देवा यजमानप्राणा अग्निरूपाः सोमं राजानं जुह्वति तस्य सोमस्याहुतेर्वर्षं भवति। एतदुक्तं भवति। श्रद्धाख्या आपो द्युलोकमाहुतित्वेन प्रविश्य चन्द्राकारेण परिणताः सत्यो द्वितीये पर्याये पर्जन्याग्नौ हुता वृष्टित्वेन परिणमन्त इति। पृथिवी वाव गौतमाग्निस्तस्य पृथिव्याख्यस्याग्नेः संवत्सर एव समित्संवत्सरेण कालेन हि समिद्धा भूमिर्व्रीह्यादीनिष्पत्तये कल्पते। आकाशो धूमः पृथिव्यग्नेरुत्थित इवाकाशो दृश्यते रात्रिरर्चिः पृथिव्याः श्यामाया अनुरूपा श्यामतया रात्रिरग्नेरिवानुरूपमर्चिर्दिशोऽङ्गाराः (३)प्रगे रात्रिरूपार्चिःशमने उपशान्तानां प्रसन्नानां(४)दिशां दर्शनात्। अवान्तरदिशो विस्फुलिङ्गाः क्षुद्रत्वसाम्यात्तस्मिन्नेतस्मिन्नग्नौ श्रद्धासोमपरिणामक्रमेणागता आपो वृष्टिरूपेण परिणता देवा जुह्वति तस्या आहुतेरन्नं व्रीहियवादि भवति। पुरुषो वाव गौतमाग्निस्तस्य वागेव समिद्वाचा खल्वयं ताल्वाद्यष्टस्थानस्थितया वर्णपदवाक्याभिव्यक्तिक्रमेणार्थजातं प्रकाशयन् समिध्यते। प्राणो धूमः धूमवन्मुखान्निर्गमाद् जिह्वार्चिर्लोहितत्वसाम्याच्चक्षुरङ्गाराः प्रभाश्रयत्वात्। श्रोत्रं विस्फुलिङ्गाः (५)विप्रकीर्णत्वात्। ता एवापः श्रद्धादिपरिणामक्रमेणागताः व्रीह्यादिरूपैः परिणताः सत्यः पुरुषेऽग्नौ हुतास्तासां परिणामो रेतः सम्भवति। योषा वाव गौतमाग्निस्तस्या उपस्थ एव समित् तेन हि सा पुत्राद्युत्पादनाय समिध्यते यदुपमन्त्रयते स धूमः स्त्रीसम्भवादुपमन्त्रणस्य(६), लोमानि वा धूमः योनिरर्चिर्लोहितत्वाद् यदन्तः करोति मैथुनं तेऽङ्गारा अभिनन्दाः सुखलवा विस्फुलिङ्गाः क्षुद्रत्वात्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति। एवं श्रद्धासोमवर्षान्नरेतो हवनक्रमेण योषाग्निं प्राप्यापो गर्भाख्या भवन्ति। तत्राप्बहुत्वादापः पुरुषवचसो भवन्ति पञ्चम्यामाहुताविति। यतः पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति तस्मादद्भिः परिवेष्टितो जीवो रंहतीति गम्यते। एतदुक्तं भवति। श्रद्धाशब्दवाच्या आप इत्यग्रे वक्ष्यति तासां त्रिवृत्कृततया तेजोऽबविनाभावेनाब्ग्रहणेन तेजो-

(१) समिद्रूपादित्यकार्यत्वादहरर्चिः, प्रसिद्धस्यार्चिषः समित्कार्यत्वादित्यर्थः।
(२) ह्रादुनया विस्फुलिङ्गा इति श्रुतिं व्याचष्टे गर्जितमिति।
(३) प्रभाते। (४) अनेन स्वरूपाभावरूपोपशमो निरस्तः।
(५) शब्दश्रवणार्थमित्यर्थः।
(६) उपमंत्रणं-सङ्केतः।

ब्रयोरपि सङ्ग इत्येतदपि वक्ष्यते । (१)यद्यप्येतावतापि भूतवेष्टितस्य जीवस्य रंहणं नावगम्यते तेजोबन्नानां पञ्चम्यामाहुतौ पुरुषवचस्त्वमात्रश्रवणात् , तथापीष्टादिकारिणो धूमादिना पितृयानेन यथा चन्द्रलोकप्राप्तिकथनपरयाऽऽकाशाच्चन्द्रमसमेष सोमो राजेति श्रुत्या सह श्रद्धां जुह्वति तस्य आहुतेः सोमो राजा सम्भवतीत्यस्याः श्रुतेः समानत्वाद्गम्यते भूतपरिष्वक्तो रंहतीति । (२)तथाहि–या एवापो हुता द्वितीयस्यामाहुतौ सोमभावं गतास्ताभिरेव परिष्वक्तो जीव इष्टादिकारी चन्द्रभूयं गतश्चन्द्रलोकं प्राप्त इति। (३)ननु स्वतन्त्रा आपः श्रद्धादिक्रमेण सोमभावमाप्नुवन्तु ताभिरपरिष्वक्त एव तु जीवः सेन्द्रियमात्रो गत्वा सोमभावमनुभवतु. को दोषः ? अयं दोषः—यतः श्रुतिसामान्यातिक्रम इति । एवं हि श्रुतिसामान्यं कल्पेत यदि येन रूपेण येन च क्रमेणापो सोमभावस्तेनैव जीवस्यापि सोमभावो भवेत्–अन्यथा तु न श्रुतिसामान्यं स्यात् । (४)तस्मात्परिष्वक्तापरिष्वक्तरंहणविशये श्रुतिसामान्यानुरोधेन परिष्वक्तरंहणं निश्चीयते । अतो दधिपयःप्रभृतयो द्रवभूयस्त्वादापो हुताः सूक्ष्मीभूता इष्टादिकारिणमाश्रिता नेन्धनेन विधिना देहे हूयमाने हुताः सत्य आहुतिमय्य इष्टादिकारिणो परिवेष्ट्य स्वर्गं लोकं नयन्तीति । चोदयति–“नन्वन्या श्रुति”रिति । अयमर्थः—एवं हि सूक्ष्मदेहपरिष्वक्तो रंहेत् यद्यस्य स्थूलं शरीरं रंहतो न भवेत्, अस्ति त्वस्य वर्तमानस्थूलशरीरयोगः अदेहान्तरप्राप्तेस्तृण(५)जलायुकानिदर्शनेन, तस्मान्निदर्शनश्रुतिविरोधान्न सूक्ष्मदेहपरिष्वक्तो रंहतीति । परिहरति—“तत्रापी”ति । न तावत्परमात्मनः संसरणसम्भवः—तस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वात्, किंतु जीवानाम् , परमात्मैव चोपाधिकल्पितावच्छेदो जीव इत्याख्यायते, तस्य च देहेन्द्रियादेरुपाधेः प्रादेशिकत्वान्न तत्र सन्देहान्तरं गन्तुमर्हति । तस्मात्सूक्ष्मदेहपरिष्वक्तो रंहतिकर्मोपस्थापितः प्रतिपत्तव्यः । प्राप्तव्यो यो देहस्तद्विषयाया भावनाया(६) उत्पादनाया दीर्घीभावमात्रं जलुकयोपमीयते । सांख्यानां कल्पनामाह “व्यापिनां करणाना”मिति । अहंकारिकत्वात्करणानामहंकारस्य च जगन्मण्डलव्यापित्वात्करणानामपि व्यापितेत्यर्थः । बौद्धानां कल्पनामाह—“केवलस्यैवात्मन” इति । आलयविज्ञानसन्तान आत्मा तस्य वृत्तिः षट्प्रवृत्तिविज्ञानानि(७) पञ्चेन्द्रियाणि तु चक्षुरादीनि अभिनवानि

(१) अश्रुतत्वादिति सूत्रार्थं प्रस्तावसरत्वाद्दर्शयति यद्यपीति ।

(२) श्रद्धां जुह्वतीत्यत्रापामिष्टादिकारिभिरन्वयमुक्त्वा, एष सोमो राजेत्यत्र कर्तृगा श्रद्धावाक्यावगतामिरद्भिः परिष्वङ्गमाह तथाहीत्यादिना ।

(३) वाक्यद्वयस्थसोमराजशब्दयोरर्थभेदं शङ्कते नन्विति । श्रद्धावाक्ये आप एव सोमाख्यशरीरभावमाप्नुयुः, एष सोमो राजेत्यत्र तु अद्भिरपरिष्वक्त एवेन्द्रियमन्त्रोपाहितश्चन्द्रलोकं गत्वा सोमशरीरं भुंक्तामिति शङ्कार्थः ।

(४) ननु शब्दसाम्यमात्रस्य गमकत्वे बटावप्यग्निशब्दप्रयोगात् ज्वलनाभेदः स्यादत आह तस्मादिति । अप्शब्दात्पुरुषवचस इति पुरुषशब्दाच्च केवलभूतगमनस्य पुरुषाधिष्ठितगमनस्य च संशये सोमराजशब्दसाम्यं निर्णायकं भवेन्माणवकस्य तु ज्वलनाद्भेदनिश्चयान्नाभेदप्रसङ्ग इत्यर्थः ।

(५) जलूकेव जलायुका, जोंकाख्यकीटविशेषः ।

(६) तद्यथा तृणजलायुकेत्यादिश्रुतौ प्रतिपत्तव्यदेहविषयभावनादीर्घीभाव उपमीयत इति भाष्ये उक्तम्, तत्र भाविदेहस्याननुभूतत्वात्स्मृतिहेतुभावनाया अनुपपत्तिरित्याशंक्य व्याचष्टे उत्पादनाया इति । यथा जलूका तृणान्तरं प्राप्यैव तृणं मुञ्चति तथा जीवोऽपि देहान्तरप्राप्त्यर्थं कर्म कृत्वा देहं त्यजतीति भावः ।

(७) शब्दादिज्ञानपञ्चकं सुखादिज्ञानं चेति षट् प्रवृत्तिविज्ञानानि अहमित्यालयविज्ञानसन्तानरूपा-

जायन्ते । कणभुक्कल्पनामाह—"मन एव चे"ति । भोगस्थानं भोगायतनं शरीरमभिनव-मिति यावत् । दिगम्बरकल्पनामाह—"जीव एवोत्प्लुत्ये"ति । आदिग्रहणेन लोकायतिकानां कल्पनां संगृह्णाति, ते हि शरीरात्मवादिनो भस्मीभावमात्मन आहुर्न कस्यचिद्गमनमिति ॥ १ ॥

चोदयति—"ननूदाहृताभ्या"मिति । अत्र सूत्रेणोत्तरमाह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

(१)तेजसः कार्यमशितपीताहारपरिपाकः । अपां कार्यं स्नेहस्वेदादि । पृथिव्याः कार्यं गन्धादि । यस्तु गन्धस्वेदपाकप्राणावकाशदानदर्शनाद्देहस्य पाञ्चभौतिकत्वं पश्यंस्तेजोबन्नात्मकत्वेन त्र्यात्मकत्वेन परितुष्यति । तं प्रत्याह—"पुनश्च त्र्यात्मक" इति । वातपित्तश्लेष्मभिस्त्रिभिर्धातुभिः शरीरधारणात्मकैस्त्रिधातुत्वात् । (२)अतो न स देहो भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । अब्ग्रहणनियमस्तर्हि कस्मादित्यत आह—"तस्माद्भूयस्त्वापेक्ष" इति । पृथिवीधातुवर्जमितरतेजआद्यपेक्षया कार्यस्य शरीरस्य लोहितादिद्रवभूयस्त्वात्तत्कारणयोश्चोपादाननिमित्तयोर्द्रवभूयस्त्वादपां पुरुषवचस्त्वं किन्न पुनर्भूतान्तरनिराकार्था ॥ २ ॥

## प्राणगतेश्च ॥ ३ ॥

प्राणानां जीवद्देहे साश्रयत्वमवगम्य गच्छति जीवद्देहे तदनुविधायिनः प्राणा अपि गच्छन्तीति दृष्टम्, अतः षाट्कौशिकाद्देहादुत्क्रामन्तः कस्मिंश्चिदुत्क्रामत्युत्क्रामन्ति । स चैषामनुविधेयः सूक्ष्मो देहो भूतेन्द्रियमय इति गम्यते । (३)नहीन्द्रियमात्राश्रयत्वमेषां दृष्टं यतस्तन्मात्राश्रयाणां गतिरुपपद्येतेति ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

श्रावितेऽपि स्पष्टे जीवस्य प्राणैः सह गमनेऽग्न्यादिगतिशङ्का श्रुतिविरोधोत्थापनार्था । (४)अत्र हि लोमकेशयोरोषधिवनस्पतिगमनं दृष्टविरोधाद्भाक्तं तावदभ्युपेयम्, एवं च तन्मतन्मध्यपतितत्वेन तेषामपि(५) श्रुतिविरोधाद्भाक्तत्वमेवोचितमिति । भक्तिश्चोपकारनिवृत्तिरुक्ता ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥

---

त्मनो वृत्तिः कार्यमित्यर्थः ।

( १ ) शरीरे भूतत्रयकार्योपलब्धिं दर्शयति तेजस इति ।

( २ ) त्रिधातुकत्वे देहस्य पञ्चभूतात्मकत्वं कथमत आह अत इति । वातपित्तकफाऽन्यथाद्युतेजोऽबारब्धत्वमवकाशदानादाकाशारब्धत्वमपि शरीरे स्वीकार्यमित्यर्थः । नैयायिकैस्तु पाञ्चभौतिकत्वं न स्वीक्रियते तन्मतं वात्स्यायनादौ द्रष्टव्यम् ।

( ३ ) ननु इन्द्रियाण्येव प्राणाश्रया भवन्तु, तत्राह नहीति । तेषामपि परोपाधिगमनत्वेन प्राणगत्यनुपपादकत्वादित्यर्थः ।

( ४ ) न भाक्तत्वादिति परिहारभाष्यं व्याचष्टे अत्र हीति । ( ५ ) वागादिगमनानामपि ।

(१)द्युम्यामाहुतावनौ पुरुषवचस्त्वप्रकारे पृष्टे प्रथमायामाहुतौ अनग्नौ श्रद्धाया होतव्यताभिधानमसम्बद्धमनुपपन्नं च । न हि यथा पश्वादिभ्यो हृदयाद्योऽवयवा अवदाय निष्कृष्य हूयन्ते, एवं श्रद्धा बुद्धिप्रसादलक्षणा निष्क्रष्टुं वा होतुं वा शक्यते । (२)न चाप्येवमौत्सर्गिकी कारणानुरूपता कार्यस्य युज्यते । तस्मादुक्तन्यायमप्सु श्रद्धाशब्दः प्रयुक्त इति । अत एव श्रुति"रापो हे"ति ( पृ० ६८२ पं० ३ ) ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

अस्यार्थः पूर्वमेवोक्तः । अग्निहोत्रे षट्सूत्क्रान्तिगतिप्रतिष्ठातृप्तिपुनरावृत्तिलोकप्रत्युत्थायिष्वग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गेषु प्रश्नाः षट् तेषां यः समाहारः षण्णां सा षट्प्रश्नी(३), तस्या निरूपणं प्रतिवचनम् ॥ ६ ॥

सूत्रान्तरमवतारयितुं शङ्कते—"कथं पुन"रिति (पृ०६८३ पं०८) । सोमं राजानमाप्यायस्वापक्षीयस्वेति एवमेतांस्तत्र भक्षयन्तीति । (४)क्रियासमभिहारेणाप्यायनापक्षयौ यथा सोमस्य तथा भक्षयन्ति, सोममयान् लोकानित्यर्थः । अत उत्तरं पठति—

## भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

कर्मजनितफलोपभोगकर्ता ह्यधिकारी न पुनरुपभोग्यस्तस्माच्चन्द्रसालोक्यमुपगतानां देवादिभक्ष्यत्वे स्वर्गकामो यजेतेति यागभावनायाः कर्त्रपेक्षितोपायतारूपविधिश्रुतिविरोधादन्नशब्दो भोक्तॄणामेव सतां देवोपजीवितामात्रेण भाक्तो गमयितव्यो न तु चर्वणनिगरणाभ्यां मुख्य इति । अत्रैवार्थे श्रुत्यन्तरं सङ्गच्छत इत्याह—'तथा हि दर्शयति'श्रुतिरनात्मविदामनात्मवित्त्वादेव पशुवद्देवोपभोग्यतां न तु चर्वणीयतया । यथा हि बलीवर्दादयो भुञ्जाना अपि स्वफलस्वामिनो हलादिवहनेनोपकुर्वाणा भोग्या, एवं परमतत्त्वमविद्वांस इष्टादिकारिण इह दधिपयःपुरोडाशादिनाऽमुष्मिंश्च लोके परिचारकतया देवानामुपभोग्या इति श्रुत्यर्थः ।

अथ वा 'अनात्मवित्त्वात्तथा हि दर्शयतीत्यस्यान्या व्याख्या' ( पृ० ६८४ पं० १५ ) आत्मवित् पञ्चाग्निविद्यावित् , न आत्मवित् अनात्मवित् । यो हि पञ्चाग्निविद्यां न वेद तं देवा भक्षयन्तीति निन्द्यते पञ्चाग्निविद्यां स्तोतुं तस्या एव प्रकृतत्वात् । तदनेनोपचारस्य प्रयोजनमुक्तम् । उपचारनिमित्तमनुपपत्तिमाह—"तथा हि दर्शयति श्रुतिर्भोक्तृत्वम् । "स सोमलोके विभूतिमनुभूये"ति । शेषमति-

---

( १ ) ता एवेत्यादिपरिहारसूत्रभागं व्याचष्टे पञ्चम्यामिति ।

( २ ) अप्रभिन्नाया श्रद्धायाः प्रथमाहुतित्वे परम्परया तज्जस्य देहस्याब्बहुलत्वं न स्यादित्याह न चेति । उपचारमूलसम्बन्धमाह अत एवेति ।

( ३ ) षट्प्रश्नीति । अग्निहोत्रे षट्सु उत्क्रान्त्यादिषु ये प्रश्नास्तेऽग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गेषु समस्तेषु विषयेषु युज्यन्ते विस्फुलिङ्गादीनां तत्राप्युपसंहर्तव्यत्वात् , बहुसाम्ये सत्यल्पवैषम्यस्याकिञ्चित्करत्वात्पर्जन्याग्नेश्चाग्निहोत्रे स्वर्गात्पृथिवीमात्राभिधानेनार्थसिद्धेः, अन्तरिक्षाग्नेश्च पञ्चाग्निविद्यायां पृथिव्याः स्वर्गप्राप्त्यभिधानात्सामर्थ्यसिद्धेरित्यर्थः ।

( ४ ) एष सोम इति भाष्यस्थश्रुतिं व्याचष्टे क्रियेति । सोमस्येति यथेति शेषः । एतांस्तत्र भक्षयन्तीति श्रुतौ एतान्शब्देन कर्मिणामभिधानं गृहीत्वा भाक्तत्वं भक्षणस्य सूत्रभाष्यकाराभ्यां वर्णितम् , स्वयन्तु सिद्धान्तानुसारेणाविरुद्धमर्थमाह सोममयानिति ।

रोहितार्थम् ॥ ७ ॥

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

"(१)यावत्संपातमुषित्वे"ति(पृ०६८५पं०१२)। यावदुपबन्धात्, यत्किंचेह करोत्यामिति च यत्किंचेह कर्म कृतं तस्यान्तं प्राप्येति श्रवणात्, (२)प्रायणस्य चैकप्रघट्टकेन सकलकर्माभिव्यञ्जकत्वात्। न खल्वभिव्यक्तिनिमित्तस्यसाधारण्येऽभिव्यक्तिनियमो युक्तः। फलदानाभिमुखीकरणं चाभिव्यक्तिस्तस्मात्समस्तमेव कर्मफलमुपभोजितवत् स्वफलविरोधि च कर्म। तस्माच्छ्रुतेरुपपत्तेश्च निरनुशयानामेव चरणादा(३)चारादवरोहो न कर्मण, आचारकर्मणी च श्रुतेः प्रसिद्धभेदे। यथाकारी यथाचारी तथा भवतीति। तथा च रमणीयचरणाः कपूयचरणा इत्याचारमेव योनिनिमित्तमुपदिशति न तु कर्म। (४)स्तां वा कर्मशीले द्वे अप्यविशेषेणानुशयस्तथापि यद्यप्ययमिष्टापूर्तकारी स्वयं निरनुशयो भुक्तभोगत्वात्तथापि पित्रादिगतानुशयवशात्तद्विपाकान् जात्यायुर्भोगांश्चन्द्रलोकादवरुह्यानुभविष्यति। स्मर्यते ह्यन्यस्य सुकृतदुष्कृताभ्यामन्यस्य तत्संबन्धिनस्तत्फलभागिता—'पतत्यर्द्धंशरीरेण यस्य भार्या सुरां पिबे'दित्यादि। तथा श्राद्धवैश्वानरीयेष्ट्यादेः पितापुत्रादिगामिफलश्रुतिः। तस्माद्यावत्सम्पातमित्युपक्रमानुरोधाद्यत्किंचेह करोतीति च श्रुत्यन्तरानुसाराद्रमणीयचरणत्वं सम्बन्ध्यन्तरगतमिष्टापूर्तकारिणि भाक्तं गमयितव्यम्। तथा च निरनुशयानामेव भुक्तभोगानामवरोह इति प्राप्ते, उच्यते—येन कर्मकलापेन फलमुपभोजितं तस्मिन्नतीतेऽपि सानुशया एव चन्द्रमण्डलादवरोहन्ति। कुतः? दृष्टस्मृतिभ्याम्। प्रत्यक्षदृष्टा श्रुतिर्दृष्टशब्दवाच्या। स्मृतिश्चोपन्यस्ता(५)। अथ वा(६) दृष्टशब्देनोच्चावचरूपो भोग उच्यते। अयमभिसन्धिः—कपूयचरणा रमणीयचरणा इत्यवरोहतामेतद्विशेषणम्। न च सति मुख्यार्थसम्भवे सम्बन्धिमात्रेणोपचरितार्थत्वं न्याय्यम्। न चोपक्रमविरोधाच्छ्रुत्यन्तरविरोधाच्च मुख्यार्थासम्भव इति साम्प्रतम्। दत्तफलेष्टापूर्तकर्मापेक्षयाऽपि यावत्पदस्य यत्किंचेतिपदस्य चोपपत्तेः। नहि यावज्जीवमग्निहोत्रं जुहुयादिति यावज्जीवमाहारविहारादिसमयेऽपि होमं विधत्ते, नापि मध्याह्नादावपि तु सायम्प्रातःकालापेक्षया। (७)सायम्प्रातःकालविधानसामर्थ्यात्कालस्य चानुपादेयतयानङ्गस्यापि निमित्तानुप्रवेशात्तत्रैवमिति चेत्। न, इहापि रमणीयचरणा इत्यादेर्मुख्यार्थत्वानुरोधात्तदुपपत्तेः(८)। तत्किमिदानीमुपसंहा-

---

(१) कर्मसमवायिनीनामपां पञ्चम्यामाहुतौ पुंपरिणामहेतुमाश्रित्याद्भिः परिष्वक्तजीवगमनमुक्तं, तत्र स्वर्गादवरोहतः कर्मैव नास्ति कुतस्तत्समवायिन्य आपः, कुतस्तरां पुंपरिणाम इत्याक्षेपसङ्गतिगर्भं पूर्वपक्षमाह यावदिति। अत एव च कर्मणामेकभविकनयाद्विलयसम्भवे सम्यग्ज्ञानस्य नैष्फल्यं पूर्वपक्षे प्रयोजनम्।

(२) श्रुतिमुदाहृत्य युक्तिमप्याह प्रायणस्य चेति।

(३) नन्वसति कर्मणि निमित्ताभावात्कथमवरोहणमत आह आचारादिति।

(४) ननु यथाकारी यथाचारीत्युपक्रम्य साधुकारीत्युपसंहाराद् करणाचरणयोरेकत्वमवगम्यतेऽत आह स्तां वेति।

(५) वर्णा आश्रमा इत्याद्या भाष्ये इत्यर्थः।

(६) दृष्टश्चायं प्रतिप्राणीत्यादिभाष्यं व्याचष्टेऽथवेति।

(७) यावज्जीवमित्यत्रत्ययावत्पदस्य सायंप्रातःकालावच्छिन्नजीवनविषयत्वेऽस्ति प्रमाणमिति दृष्टान्ते विशेषमाशङ्कते सायमिति।

(८) तदुपपत्तेरिति। यावत्संपातमित्यादेः स्वर्गे तदफलेष्टापूर्तविषयत्वोपपत्तेरित्यर्थः।

रानुरोधेनोपक्रमः संकोचयितव्यः । नेत्युच्यते । नह्यप्रावुरसंहारानुरोधेऽप्ययमङ्कुवद्युपतिरुपत्तु-मर्हति । नहि यावन्तः सम्पाता यावतां वा पुंसां सम्पातास्ते सर्वे तत्रेष्टादिकारिणा भोगेन क्षयं नीयन्ते, पुरुषान्तराश्रयाणां कर्माशयानां तद्भोगेन क्षयेऽतिप्रसङ्गात्, विरोधभुक्तानां च कर्माशयानामसतां चन्द्रमण्डलोपभोगेनानपयनात् । तथा च स्वयं सङ्कुचन्ती यावच्छ्रुतिरुपसंहारानुरोधप्राप्तमपि सङ्कोचनमनुमन्यते । एतेन यत्किंचेह करोतीत्यपि व्याख्यातम् । अपि चेष्टापूर्तकारीह जन्मनि केवलं न तन्मात्रमकार्षीत्, अपि तु गोदोहनेनापः प्रणयन् पशु-फलमप्यपूर्वं समचैषीदेवमहर्निशं च वाङ्मनःशरीरचेष्टाभिः पुण्यापुण्यमिहामुत्रोपभोग्यं सञ्चि-तवतो न मर्त्यलोकादिभोग्यं चन्द्रलोके भोग्यं भवितुमर्हति । न च स्वफलविरोधिनोऽनुशयस्य ऋते प्रायश्चित्तादात्मज्ञानाद्वा ऽदत्तफलस्य ध्वंसः सम्भवति । तस्मात्तेनानुशयेनायमनुशयवान् परावर्तत इति श्लिष्टम् । न चैकभविकः कर्माशय इत्यग्रे भाष्यकृद्वक्ष्यति ।

अन्ये(१) तु सकलकर्मक्षये परावृत्तिशङ्का निर्बीजेति मन्यमाना अन्यथाधिकरणं वर्णया-चक्रुरित्याह "केचित्तावदाहु"रिति । अनुशयोऽत्र दत्तफलस्य कर्मणः शेष उच्यते । तत्रे-दमिह विचार्यते—किं दत्तफलानामिष्टपूर्तकर्मणामवशेषादिहावर्तन्ते उत तान्युपभोगेन निरव-शेषं क्षपयित्वाऽनुपभुक्तकर्मवशादिहावर्तन्त इति । तत्रेष्टादीनां भोगेन समूलकाषं कषितत्वान्नि-रनुशया एवानुभुक्तकर्मवशादावर्तन्त इति प्राप्त, उच्यते-"सानुशया एवावर्तन्त" इति । कुतः ? दृष्टानुसारात् । (२)यथा भाण्डस्थे मधुनि सर्पिषि वा क्षालितेऽपि भाण्डलेपकं तच्छेपं मधु वा सर्पिर्वा न क्षालयितुं शक्यमिति दृष्टमेवं तदनुसारादेतदपि प्रतिपत्तव्यम् । न चावशेषमात्राच्चन्द्रमण्डले तिष्ठा(३)सन्नपि स्थातुं पारयति । यथा सेवको हास्तिकाश्वीय-पदातिव्रातपरिवृतो महाराजं सेवमानः कालवशाच्छत्रपादुकावशेषो न सेवितुमर्हतीति दृष्टं तन्मूला च (४)लौकिकी स्मृतिरिति दृष्टस्मृतिभ्यां सानुशया एवावर्तन्त इति । तदेतद्दू-षयति—"न चैतदिति" । एवकारे प्रयोक्तव्ये इवकारो गुडजिह्विकया प्रयुक्तः (५)शब्दैकगम्येऽर्थे न सामान्यतोदृष्टानुमानावसर इत्यर्थः । शेषमतिरोहितार्थम् । पूर्वपक्षहेतुमनुभाषते "यदप्युक्तं प्रायण"मिति । ( पृ० ६८८ पं० २० ) दूषयति—"तदप्यनुशयसद्भावे"ति ( पृ० ६८९ पं० २ ) । रमणीयचरणाः कपूयचरणा इत्यादिकयानुशयप्रतिपादनपरया श्रुत्या विरुद्धमित्यर्थः । "अपि चे"त्यादि । इह जन्मनि हि पर्यायेण सुखदुःखे भुज्यमाने दृश्येते युगपच्चैकप्रघट्टकेन । प्रायणेन सुख-दुःखफलानि कर्माणि व्यज्येरन् । युगपदेव तत्फलानि भुज्येरन् । तस्मादुपभोगपर्यायदर्शनाद् बलीयसा दुर्बलस्याभिभवः कल्पनीयः । एवं विरुद्धजातिनिमित्तोपभोगफलेष्वपि कर्मसु द्रष्ट-

( १ ) पूर्वदर्शिताधिकरणपूर्वपक्षस्य तुच्छत्वाभिप्रायेण मतान्तरमाहान्ये त्विति । सकलेति । हेत्वभावे कार्यायोगात् कर्मरहितावरोहशङ्का नेत्यर्थः ( २ ) अत्र मते सौत्रदृष्टशब्दार्थमाह यथेति ।

( ३ ) स्थातुमिच्छन्, भुवि शेषफलोपभोग इत्यर्थः ।

( ४ ) दृष्टन्यायमूला लौकिकी कालिदासादिस्मृतिरित्यर्थः ।

( ५ ) यत्तु स्वर्गसुखं भुवि भोक्तव्यमिति, तत्राह शब्दैकगम्येऽर्थे इति । भाण्डस्नेहवत् सामान्यतोदृष्टेन हि कर्मशेषोऽनुमितः, तस्य च भुवि भोगः कल्पितः, तत्सर्वं स्वर्गोद्देशेन यागविधिना विरुध्यते भौमसुखस्य स्वर्गत्वायोगादित्यभिप्रायः ।

त्यम् । न चाभिव्यक्तं च कर्म फलं न दत्ते इति च सम्भवति । फलोपजननाभिमुख्यं हि कर्मणामभिव्यक्तिः । अपि च प्रायणस्याभिव्यञ्जकत्वे स्वर्गनरकतिर्यग्योनिगतानां जन्तूनां तस्मिन् जन्मनि कर्मस्वनधिकारान्नापूर्वकर्मोपजनः पूर्वकृतस्य कर्माशयस्य प्रायणाभिव्यक्ततया फलोपभोगेन प्रक्षयान्नास्ति तेषां कर्माशय इति न ते संसरेयुः । न च मुच्येरन्नात्मज्ञानाभावादिति कष्टां बताविष्टा दशाम् । न च स्वसमवेतमेव प्रायणेनाभिव्यज्यतेऽपूर्वं न परसमवेतं येन पित्रादिगतेन कर्मणा वर्तेरन्निति । शेषं सुगमम् ॥ ८ ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

अनेन निरनुशया एवा(१)वरोहन्तीति पूर्वपक्षबीजं निगूढमुद्धाट्य निरस्यति । यद्यपि

अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः ॥

इतिस्मृतेः शीलमाचारोऽनुशयाद्भिन्नस्तथाप्यस्यानुशयान्नतयाऽनुशयोपलक्षणत्वं कार्ष्णाजिनिराचार्यो मेने । तथा च रमणीयचरणाः कपूयचरणा इत्यनेनानुशयोपलक्षणात्सिद्धं सानुशयानामेवावरोहणमिति ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

'आचारहीनं न पुनन्ति वेदा' इति हि स्मृत्या वेदपदेन वेदार्थमुपलक्षयन्त्या वेदार्थानुष्ठानशेषत्वमाचारस्योक्तं न तु स्वतन्त्र आचारः फलस्य साधनं, तेन वेदार्थानुष्ठानोपकारकतया ऽऽचारस्य नानर्थक्यं क्रत्वर्थस्य । तदनेन समिदादिवदाचारस्य क्रत्वर्थत्वमुक्तं, सम्प्रति (२)स्नानादिवत्पुरुषार्थत्वे पुरुषसंस्कारत्वेऽप्यदोष इत्याह—"पुरुषार्थत्वेऽप्याचारस्ये"ति ( पृ०६९२पं०८ ) । तदेवं चरणशब्देनाचारवाचिना सर्वानुशयो (३)लक्षित इत्युक्तम् ॥१०॥

बादरिस्तु मुख्य एव चरणशब्दः कर्मणीत्याह—

## सुकृतदुष्कृते एवेति बादरिः ॥ ११ ॥

ब्राह्मणपरिव्राजकन्यायो (४)गोबलीवर्दन्यायः । शेषमतिरोहितार्थम् ॥ ११ ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥

## स्मरन्ति च ॥ १४ ॥ अपि च सप्त ॥ १५ ॥

---

( १ ) कर्मापूर्वरहिता एव ।

( २ ) यागादिवदाचारस्य न प्रधानकर्मतयां पुरुषार्थत्वमित्याह स्नानादिवदिति । यथा तीर्थस्नानादेः प्रकरणवाक्याभ्यां क्रत्वनुष्ठायिपुरुषधर्मत्वं तथाऽऽचारस्याप्याचारहीनमिति वाक्यात् वेदार्थानुष्ठातृपुरुषधर्मत्वमित्यर्थः । ज्योतिष्टोमे तीर्थस्नानादेः पुरुषधर्मत्वं सिद्धान्तितन्तत्रैव द्रष्टव्यम् ।

( ३ ) अजहल्लक्षणयेत्यादिः ।

( ४ ) ननु भाष्योक्तो ब्राह्मणपरिव्राजकन्यायेन करणाचरणभेदनिर्देशोऽयुक्तः ब्राह्मणत्वस्य यावत्पिण्डभावित्वेन जातित्वेऽपि परिव्राजकत्वस्य गार्हस्थ्यादिवदभावेन जातित्वाभावात् करणत्वचरणत्वयोश्चादृष्टत्वावान्तरजातित्वाददृष्टान्तासंगमनादित्याशंक्याह गोबलीवर्देति । परापरजातिविषयगोबलीवर्दन्यायेऽनुवृत्तव्यावृत्तविषयत्वसाम्याद् ब्राह्मणपरिव्राजकशब्द उपचारित इत्यर्थः ।

**तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥**
**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥**
**न तृतीये तथोपलब्धेः ॥ १८ ॥**
**स्मर्यतेऽपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥**
**तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥**

'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति' कौषीतकिनां समाम्नानाद्देहारम्भस्य च चन्द्रलोकगमनमन्तरेणानुपपत्तेः, पञ्चम्यामाहुताविरयाहुतिसंख्यानियमात् । तथाहि द्युसोमवृष्टयन्नरेतःपरिणामक्रमेण ता एवापो योषिदग्नौ हुताः पुरुषवचसो भवन्तीत्य-विशेषेण श्रुतम् । न चैतन्मनुष्याभिप्रायं, कपूयचरणाः श्वयोनिमित्यमनुष्यस्यापि श्रवणात् । गमनागमनाय च देवयानपितृयाणयोरेव मार्गयोराम्नानात् पथ्यन्तरस्याश्रुतेर्जायस्व म्रियस्वेति तृतीयं स्थानमिति च स्थानत्वमात्रेणावगमात् पथित्वेनाप्रतीतेः । चन्द्रलोकादवतीर्णानामपि च तत्स्थानत्वसम्भवादसम्पूरणेन प्रतिवचनोपपत्तेः । अनन्यमार्गतया च तद्भोगविरहिणामपि ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवत् संयमनादिषु यमवश्यतायै चन्द्रलोकगमनोपपत्तेः । (१)'न कतरेण च ने'त्यस्यासम्पूरणप्रतिपादनपरतया मार्गद्वयनिषेधपरत्वात् अनिष्टादिकारिणामपि चन्द्रलोकगमने प्राप्ते, ऽभिधीयते—(२)सत्यं स्थानतयाऽवगतस्य न मार्गत्वं तथापि वेत्थ यथाऽसौ लोको न सम्पूर्यत इत्यस्य प्रतिवचनावसरे मार्गद्वयनिषेधपूर्वं तृतीयं स्थानमभिवदन् असम्पूरणाय तत्प्रतिपक्षमाचक्षीत । यदि पुनस्तेनैव मार्गेणागत्य जन्ममरणप्रबन्धवत्स्थानमध्यासीत नैतत्तृतीयं स्थानं भवेत । नहीष्टादिकारिणश्चन्द्रमण्डलादवरुह्य रमणीयां निन्दितां वा योनिं प्रतिपद्यमानास्तृतीयं स्थानं प्रतिपद्यन्ते, तत्कस्य हेतोः ? पितृयाणेन पथाऽवरोहात् । यदि क्षुद्रजन्तवोऽप्यनेनैव पथाऽवरोहेयुः, नैतदेषां जन्ममरणप्रबन्धवत् तृतीयं स्थानं भवेत् । ततोऽवगच्छामः, संयमनं सप्त च यातनाभूमीर्यमवशतया प्रतिपद्यमाना अनिष्टादिकारिणो न चन्द्रमण्डलादवरोहन्तीति । तस्मा'द्ये वै के चे'तीष्टादिकारिविषयं न सर्वविषयम्, पञ्चम्यामाहुताविति च (३)स्वार्थविधानपरं न पुनरपञ्चम्याहुतिप्रतिषेधपरमपि, वाक्यभेदप्रसङ्गात् । संयमने त्वनुभूयेति सूत्रेणावरोहापादानतया(४) संयमनस्योपादानाच्चन्द्रमण्डलापादाननिषेध आञ्जसः, तथा च सिद्धान्तसूत्रमेव । पूर्वपक्षसूत्रत्वे तु शङ्कान्तराध्याहारेण कथंचिन्नमयितव्यम् । जीवजं जरायुजम् । संशोकजं संस्वेदजम् ॥ १६-२१ ॥

**साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥**

---

(१) पूर्वं तृतीयस्थानशब्दस्य मार्गपरत्वाभावो वर्णितः, इदानीं न। कतरेण च नेत्यस्य तृतीयस्थानसूचकत्वं निराकरोति न कतरेण चेति ।

(२) सिद्धान्तमाह सत्यमिति । तृतीयं स्थानमित्यत्र स्थानशब्दो यद्यपि शरीरे व्युत्पन्नत्वान्न मार्गवाची तथापि मार्गमुपक्रम्य तृतीयत्वेन निर्दिश्यमानस्य स्वार्थस्य मार्गत्वं गमयत्यर्थान्तरसंख्यानिवेशस्य साजात्यापेक्षत्वादिति सिद्धान्त्यभिप्रायः ।

(३) यदुक्तमाहुताविति इत्याहुतिसंख्यानियमात्सर्वेषां स्वर्गगमनमिति तत्राह स्वार्थेति ।

(४) भास्करमतं दूषयन्नाहावरोहापादानतयेति ।

यद्यपि यथेतमाकाशमाकाशाद्वायुमित्यतो न तादात्म्यं स्फुटमवगम्यते, तथापि (१)वायुर्भूत्वेत्यादेः स्फुटतरतादात्म्यावगमाद् यथेतमाकाशमित्येतदपि तादात्म्य एवावतिष्ठते। न चान्यस्यान्यभावानुपपत्तिः। मनुष्यशरीरस्य नन्दिकेश्वरस्य देवदेहरूपपरिणामस्मरणाद्देवदेहस्य च नहुषस्य तिर्यक्त्वस्मरणात्। तस्मान्मुख्यार्थपरित्यागेन न गौणी वृत्तिराश्रयणीया। (२)गौण्यां च वृत्तौ लक्षणाशब्दः प्रयुक्तो गुणे लक्षणायाः सम्भवात्। यथाहुः—

लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता। इति।

एवं प्राप्ते ब्रूमः—"साभाव्यापत्तिः"। समानो भावो रूपं येषां ते सभावास्तेषां भावः साभाव्यं सारूप्यं सादृश्यमिति यावत्। कुतः? उपपत्तेः। एतदेव व्यतिरेकमुखेन व्याचष्टे "नह्यन्यस्यान्यभाव उपपद्यते" (पृ० ६९९ पं० १२)। युक्तमेतद्यदेव शरीरमजगरभावेन परिणमते देवदेहसमयेऽजगरशरीरस्याभावात्। यदि तु देवाजगरशरीरे समसमये स्यातां न देवशरीरमजगरशरीरं शिल्पिशतेनापि क्रियते। नहि दधिपयसी समसमये परस्परात्मनी शक्ये सम्पादयितुं, तथेहापि सूक्ष्मशरीराकाशयोर्युगपद्भावान्न परस्परात्मत्वं भवितुमर्हति। एवं वाय्वादिष्वपि योज्यं, तथा च तद्भावस्तत्सादृश्येनौपचारिको व्याख्येयः। नन्वाकाशभावेन संयोगमात्रं लक्ष्यतां किं सादृश्येनेत्यत आह—"विभुत्वाच्चाकाशेने"ति॥ २२॥

## नातिचिरेण विशेषात्॥ २३॥

दुर्निष्प्रपतरमिति दुःखेन निसरणं ब्रूते न तु विलम्बेनेति मन्यते पूर्वपक्षी। विना स्थूलशरीरं न सूक्ष्मशरीरे दुःखमागीति दुर्निष्प्रपतरं विलम्बं लक्षयतीति राद्धान्तः॥ २३॥

## अन्याधिष्ठिते पूर्ववदभिलापात्॥ २४॥
## अशुद्धमिति चेन्न शब्दात्॥ २५॥

आकाशसारूप्यं वायुधूमादिसम्पर्कोऽनुशयिनामुक्त इहेदानीं व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त इति श्रूयते। तत्र संशयः—किमनुशयिनो भोगाधिष्ठानं व्रीहियवादयः स्थावरा भवन्त्याहो स्वित् क्षेत्रज्ञान्तराधिष्ठितेष्वेषु संसर्गमात्रमनुभवन्तीति। तत्र 'मनुष्यो जायते, देवो जायत' इत्यादौ प्रयोगे जनेः शरीरपरिग्रहे प्रसिद्धत्वादत्रापि व्रीह्यादिशरीरपरिग्रह एव जनेर्मुख्यार्थ इति व्रीह्यादिशरीरा एवानुशयिन इति युक्तम्। (३)न च रमणीयचरणाः कपूयचरणा इतिवत् कर्मविशेषासङ्कीर्तनात्तदभावे व्रीह्यादीनां शरीरभावाभावात् क्षेत्रज्ञान्तराधिष्ठितानामेव तत्सम्पर्कमात्रमिति साम्प्रतम्। इष्टादिकारिणामिष्टादिकर्मसङ्कीर्तना-

---

(१) वायुमिति कर्मत्वेन निर्दिष्टस्य वायुर्भूत्वेति तादात्म्यवत्त्वेन परामर्शकवाक्यशेषान्निर्णयेन पूर्वपक्षमाह वायुर्भूत्वेत्यादेरिति।

(२) ननु एवं व्रीह्यादिभाष्यमयुक्तम् श्रुतेर्हि सादृश्यालम्बनत्वे माणवके इव वह्निश्रुतेः गौणता स्यान्न लक्षणेत्याशङ्क्याह गौण्यामिति। गौण्यामपि गुणलक्षणा वर्तते लक्षणायां त्वभिधेयसम्बन्धाद् प्रवर्तमानायां सम्बन्धिवस्त्वन्तरपरत्वम् न सम्बन्धपरत्वम्, गुणात्प्रवर्तमानायान्तु गौण्यां वृत्तौ गुणपरत्वं न गुणविशिष्टवस्तुपरतेति विवेकः।

(३) प्रकरणेऽत्र यन्मुख्यं जन्म तत्कर्मसाध्यं श्रुतं यथा रमणीयचरणा इत्यादि। अत्र तु व्यापककर्मजत्वश्रुतिव्यावृत्त्या तद्व्याप्यमुख्यत्वव्यावृत्तिमाशङ्क्य हेत्वसिद्धिमाह न चेति। शरीराभावाभावात्—शरीरत्वाभावात्।

दिष्टादेश्च(१) हिंसादोषदूषितत्वेन सावद्यफलतया चन्द्रलोकभोगानन्तरं स्थावरशरीरभोग्यदुःखफलत्वस्याप्युपपत्तेः । न च 'न हिंस्यात्सर्वा भूतानी'ति सामान्यशास्त्रस्याग्नीषोमीयपशुहिंसाविषयविशेषशास्त्रेण बाधनं, सामान्यशास्त्रस्य (हिंसा)सामान्यद्वारेण विशेषोपसर्पणं विलम्बेनेति साक्षाद्विशेषस्पृशः शास्त्रात् शीघ्रतरप्रवृत्ताद्दुर्बलत्वादिति साम्प्रतम् । नहि बलवदित्येव दुर्बलं बाधते, किन्तु सति विरोधे । न चेहास्ति विरोधो, भिन्नगोचरचारित्वात् । 'अग्नीषोमीयं पशुमालभेते'ति हि क्रतुप्रकरणे समाम्नातं क्रत्वर्थतामस्य गमयति, न त्वपनयति निषेधापादितामस्य पुरुषं प्रत्यनर्थहेतुतां, तेनास्तु निषेधादस्य पुरुषं प्रत्यनर्थहेतुता विधेश्च क्रत्वर्थता को विरोधः । यथाहुः(२)—

यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् ।
न क्रतोस्तत्र वैगुण्यं यथा चोदितसिद्धितः ॥ इति ।

तस्माज्जनेर्मुख्यार्थत्वाद् व्रीह्यादिशरीरा अनुशयिनो जायन्त इति प्राप्ते, ऽभिधीयते—भवेदेतदेवं यदि रमणीयचरणाः कपूयचरणा इतिवद्व्रीह्यादिष्वनुशयवतां कर्मविशेषः कीर्त्येत, न चैतदस्ति । न चेष्टादेः कर्मणः स्थावरशरीरोपभोग्यदुःखफलप्रसवहेतुभावः सम्भवति, तस्य धर्मत्वेन सुखैकहेतुत्वात् । न च तद्गतायाः पशुहिंसाया न हिंस्यादिति निषेधात् क्रत्वर्थाया अपि दुःखफलत्वसम्भवः, पुरुषार्थाया एव न हिंस्यादिति प्रतिषेधात् । तथाहि(३)—न हिंस्यादिति निषेधस्य निषेध्याधीननिरूपणतया यदर्थं निषेध्यं तदर्थ एव निषेधो विज्ञायते । न चैतत् 'नानृतं वदेन्न तौ पशौ करोती'तिवद् कस्यचित्प्रकरणे समाम्नातं येनानृतवदनवदस्य निषेधस्य क्रत्वर्थत्वे निषेधोपि क्रत्वर्थः स्यात् । पशौ निषिद्धयोराज्यभागयोः क्रत्वर्थत्वेन निषेधस्यापि क्रत्वर्थत्वं भवेत् । (४)एवं हि सत्याज्यभागरहितैरप्यङ्गान्तरैराज्यभागसाध्यः क्रतूपकारो विज्ञायते । (५)तस्मादनारभ्याधीतेन न हिंस्यादित्यनेनाभाहितस्य विध्युपहितस्य पुरुषव्यापारस्य (६)विधिविभक्तिविरोधाद्दुःखात्मकप्रकृत्यर्थहिंसाकर्मभाव्यत्वपरि-

---

(१) नन्विष्टकर्मणा विहितत्वात्कथं पुण्यस्य स्थावरशरीरप्राप्तिहेतुत्वमत आहेष्टादेश्चेति । विहितत्वेपि तद्गतपशुहिंसोच्छिष्टसोमभक्षादेर्निषिद्धत्वाद्दुःखहेतुतेत्यर्थः । सामान्यशास्त्रस्य दौर्बल्ये हेतुस्सामान्यद्वारेणेति । विशेषशास्त्रप्राबल्ये हेतुः साक्षादिति ।

(२) ननूक्तरीत्या विषयभेदाद्विधिनिषेधयोराविरोधश्चेत्तदा क्रतुमध्ये निषिद्धहिंसानुष्ठाने क्रतुवैगुण्यं स्यादित्याशङ्कायामाह यथाहुरिति । निषेधानां पुरुषार्थत्वात्तदतिक्रमे पुरुषस्यैव प्रत्यवायो न क्रतोर्वैगुण्यम्, यथाविहितस्य तस्य सिद्धेः, नहि क्रतुशेषः प्रतिषेधो यतस्तदतिलङ्घनात्क्रतुवैगुण्यं स्यादिति भावः पूर्वपक्षिणो भट्टस्यात्र बोध्यः ।

(३) क्रत्वर्थो हि प्रतिषेधः क्रत्वर्थां हिंसां प्रतिषेधेत, तत्र यद्ययं न हिंस्यादिति निषेधः क्रत्वर्थो हिंसां प्रतिषेधेत तर्ह्येव क्रत्वर्थः स्यात्तच्च नास्तीति वदिष्यन्निषेध्यनिषेधयोरेकार्थतामाह तथाहीति । यो हि यदर्थं प्रवृत्तो यस्माद्विषयान्निवार्यते तन्निषेधोपि तदर्थ इत्यर्थः ।

(४) नन्वाज्यभागौ क्रत्वर्थौ भवेतां निषेधस्त्वभावार्थः कथं क्रत्वर्थः स्यादत आह एवमिति । विज्ञायत इति न केवलनिषेधादिति शेषः, अत्र च पशुप्रकरण एवैतद्वाक्यमिति कृत्वाऽप्रतिषेधत्वमिति गूढार्थः ।

(५) ननु मा भूत् प्रकरणेनाम्नानान्न हिंस्यादिति निषेधस्य क्रत्वर्थता पुरुषार्थत्वं तु कथं स्यादित्याशङ्क्य तत्र पुरुषार्थप्रतीतिमुपादयति तस्मादिति ।

(६) धात्वर्थभाव्यत्वेऽर्थविरोधमभिधाय शब्दविरोधमप्याह विधिविभक्तीति । हिंसैव कर्म क्रिया तद्भाव्यत्वपरित्यागेनेत्यर्थः ।

त्यागेन पुरुषार्थ एव भाव्योऽवतिष्ठते। (१)आख्यातानभिहितस्यापि पुरुषस्य कर्तृव्यापाराभिधानद्वारेणोपस्थापितत्वात् केवलं तस्य रागतः प्राप्तत्वात्तदनुवादेन नञर्थं विधिरुपसंक्रामति, तेन पुरुषार्थो निषेध्य इति तदधीननिरूपणो निषेधोपि पुरुषार्थो भवति। तथा चायमर्थः सम्पद्यते-यत्पुरुषार्थं हननं तन्न कुर्यादिति। (२)क्रत्वर्थस्यापि च निषेधे हिंसायाः क्रतूपकारकत्वमपि कल्प्यते। न च दृष्टे पुरुषोपकारकत्वे प्रत्यर्थिनि सति तत्कल्पनास्पदम्। न च स्वातन्त्र्यपारतन्त्र्ये असति संयोगपृथक्त्वे खादिरतादिवदेकत्र सम्भवतः। (३)तस्मात्पुरुषार्थप्रतिषेधो न क्रत्वर्थत्वमप्यास्कन्दतीति शुद्धसुखफलत्वमेवेष्टादीनां न स्थावरशरीरोपभोग्यदुःखफलत्वमपीति, आकाशादिष्विव कर्मव्यापारमन्तरेणाभिलापात्। अनुशयिनां व्रीह्यादिसंयोगमात्रं न तु देहत्वमिति। अयमेवार्थ उत्सर्गापवादकथनेनोपलक्षितः। अपि च मुख्यनुशायिनां व्रीह्यादिजन्मनीति( पृ०७०२ पं०२ )व्रीह्यादिभावमापन्नाः खल्वनुशयिनः पुरुषैरुपभुक्ता रेतःसिग्भावमनुभवन्तीति श्रूयते। तदेतद्व्रीह्यादिदेहत्वेऽनुशयिनां नोपपद्यते। व्रीह्यादिदेहत्वे हि व्रीह्यादिषु लूनेष्ववहन्तिना (४)फलीकृतेषु च व्रीह्यादिदेहविनाशादनुशयिनः प्रवसेयुरिति कथमनुशयिनां रेतःसिग्भावः, संसर्गमात्रे तु संसर्गिषु व्रीह्यादिषु नष्टेष्वपि न संसर्गिणोऽनुशयिनः प्रवसेयुरिति रेतःसिग्भाव उपपद्यते। शेषमुक्तम् ॥ २४ ॥ २५ ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

सद्यो जातो हि बालो न रेतःसिग्भवत्यपि तु चिरजातः प्रौढयौवनस्तस्मादपि संसर्गमात्रमिति गम्यते ॥ २६ ॥

तत्किमिदानीं सर्वत्रैवानुशयिनां संसर्गमात्रं, तथा च रमणीयचरणा इत्यादिषु तथाभाव आपद्येतेति, नेत्याह—

## योनेः शरीरम् ॥ २७ ॥

सुगमम् ॥ २७ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीमद्भगवत्पादशारीरकभाष्यविभागे
भामत्यां तृतीयस्याध्यायस्य प्रथमः पादः ॥

---

## सन्ध्ये सृष्टिराह हि ॥ १ ॥
## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

इदानीं तु तस्यैव(५)जीवस्यावस्थाभेदः स्वयंज्योतिष्ट्वसिद्ध्यर्थं प्रपञ्च्यते-(६)किं प्रबो

---

( १ ) पुरुषप्रतीतिमुपपादयति आख्यातेति।

( २ ) ननु हिंस्यादिति क्रतुपुरुषार्थसाधारणी हिंसाऽनूद्य निषिध्यतां, तथा चोभयार्थत्वं निषेधस्य वाक्येनावगम्यतामित्याशङ्क्याह क्रत्वर्थस्यापि चेति। हिंसानिषेधस्य रागतः प्राप्तहिंसाविषयतया चरितार्थत्वेऽधिकारान्तरानुप्रविष्टक्रतुशेषहिंसानुवादतन्निषेधविषयत्वकल्पनायां गौरवं स्यादित्यर्थः।

( ३ ) एवमुक्तं विधिनिषेधयोर्विषयभेदमुपसंहरति तस्मादिति। ( ४ ) कण्डितेषु।

( ५ ) आद्याधिकरणस्य तात्पर्यमाह तस्यैवेति। पूर्वपादे यस्य जाग्रदवस्थायामिहपरलोकसञ्चार उक्तस्तस्यैवेत्यर्थः। ( ६ ) रथादिसर्गाम्नानादृथाद्यभावकथनाच्च सन्देहमाह किमित्यादिना।

थ इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयी"ति(पृ०७०५पं०११)। (१)यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नावस्थागतयोरुभयोरपि सर्गयोर्मायामयत्वं तथापि यथा जाग्रत्सृष्टिर्ब्रह्मात्मभावसाक्षात्कारात्प्रागनुवर्तते, ब्रह्मात्मसाक्षात्कारात्तु निवर्तते, एवं किं स्वप्नसृष्टिराहोस्वित् प्रतिदिनमेव निवर्तत इति विमर्शार्थः। "द्वयो" रिहलोकपरलोकस्थानयोः सन्धौ भवं सन्ध्यम्। ऐहलौकिकचक्षुराद्यव्यापाराद्रूपादिसाक्षात्कारोपजननादनैहलौकिकं पारलौकिकेन्द्रियादिव्यापारस्य च भविष्यतोऽप्रत्युत्पन्नत्वेन न पारलौकिकम्। न च न रूपादिसाक्षात्कारोऽस्ति स्वप्नदृशस्तस्मादुभयोर्लोकयोरस्यान्तरालत्वमिति (२)ब्रह्मात्मभावसाक्षात्कारात्प्राक् तथ्यरूपैव सृष्टिर्भवितुमर्हति। अयमभिसन्धिः(३)—इह हि सर्वाण्येव मिथ्याज्ञानान्युदाहरणं तेषां सत्यत्वं प्रतिज्ञायते। प्रकृतोपयोगितया तु स्वप्नज्ञानमुदाहृतम्। ज्ञानं यमर्थमवबोधयति स तथैवेति युक्तम्, तथाभावस्य ज्ञानारोहात्। अतथात्वस्य त्वप्रतीयमानस्य तथाभावप्रमेयाविरोधेन कल्पनानास्पदत्वात्। बाधकप्रत्ययादतथात्वमिति चेत्, न, तस्य बाधकत्वासिद्धेः, (४)समानगोचरे हि विरुद्धार्थोपसंहारिणी ज्ञाने विरुद्ध्यते, बलवदबलवत्त्वानिश्चयाच्च बाध्यबाधकभावं प्रतिपद्येते। न चेह समानविषयत्वं, कालभेदेन व्यवस्थोपपत्तेः। यथाहि क्षीरं दृष्टं कालान्तरे दधि भवति, एवं रजतं दृष्टं कालान्तरे शुक्तिर्भवेत्, नानारूपं वा तद्वस्तु। तद्यस्य तीव्रातपक्लान्तिसहितं चक्षुः स तस्य रजतरूपतां गृह्णाति, यस्य तु केवलमालोकमात्रोपकृतं, स तस्यैव शुक्तिरूपतां गृह्णाति। एवमुत्पलमपि नीललोहितं दिवा सौरीभिर्भाभिरभिव्यक्तं नीलतया गृह्यते। प्रदीपाभिव्यक्तं तु नक्तं लोहिततया। एवमसत्यां निद्रायां सतोऽपि रथादीन् न गृह्णाति निद्राणस्तु गृह्णातीति सामग्रीभेदाद्वा कालभेदाद्वा विरोधाभावः। नापि पूर्वोत्तरयोर्बलवदबलवत्त्वनिर्णयः। द्वयोरपि स्वगोचरचारितया समानत्वेन विनिगमनाहेतोरभावात्। (५)तस्मादप्यवश्यमविरोधो व्यवस्थापनीयः। तत्सिद्धमेतत्—विवादास्पदं प्रत्ययाः सम्यञ्चः प्रत्ययत्वाज्जाग्रत्स्तम्भादिप्रत्ययवदिति। इममर्थं श्रुतिरपि दर्शयति—'अथ रथान् रथयोगान्(६) पथः सृजते'ति। न च "तत्र रथो न रथयोगो न पन्थानो भवन्ती"ति विरोधादुपचरितार्था सृजत इति श्रुतिर्व्याख्येया। सृजत इति हि श्रुतेः, बहुश्रुतिसम्वादात्प्रमाणान्तरसंवादाच्च। बलीयस्त्वेन तदनुगुणतया न तत्र रथा इत्यस्या भाक्तत्वेन व्याख्यानात्। जाग्रदवस्थादर्शनयोग्या न सन्ति न तु रथा न सन्तीति। अत एव कर्तृश्रुतिः शाखान्तरश्रुतिरुदाहृता। (७)प्राज्ञकर्तृकत्वाच्चास्य पारमार्थिकत्वं वियदादिसर्गवत्। नच जीवकर्तृकत्वान्न

---

(१) विकारमात्रस्य मिथ्यात्वान्न पूर्वपक्षिणो दृष्टान्तसिद्धिरित्याशङ्क्याह यद्यपीति। स्वप्नस्य व्यावहारिकत्वमेव चिन्त्यत इत्यभिप्रायः।

(२) ननु सन्ध्ये स्थाने तथ्यरूपैव सृष्टिरिति भाष्यमयुक्तमारम्भणाधिकरणादौ सर्वकार्यमिथ्यात्वदर्शनादत आह ब्रह्मात्मभावसाक्षात्कारात्प्रागिति। (३) पूर्वपक्षिण इत्यर्थः।

(४) बाधकत्वासिद्धिमुपपादयितुं पराभिमतबाधकस्वरूपमनुवदति समानेति।

(५) तत्रेदं रजतादिनेदं रजतादिज्ञानानां च विरोधाभावमाह तस्मादित्यन्तग्रन्थेन। अपिना प्रागुक्तविरोधाभावसमुच्चयः। (६) अश्वादयः।

(७) प्रमाणान्तरमाह प्राज्ञेति। स्वप्नसृष्टिः परमार्थिकी प्राज्ञकर्तृकत्वाद्वियदादिसर्गवत् इत्यनुमानप्रयोगः। हेत्वसिद्धिमाशङ्क्याह नचेति।

प्राज्ञकर्तृकत्वमिति साम्प्रतम्। अन्यत्र धर्मादन्यत्राधर्मादिति प्राज्ञस्यैव प्रकृतत्वाज्जीवकर्तृकत्वेपि च प्राज्ञादभेदेन जीवस्य प्राज्ञत्वात्। अपि च जाग्रत्प्रत्ययसंवादवन्तोऽपि स्वप्नप्रत्ययाः केचिद्दृश्यन्ते(१)। तद्यथा—स्वप्ने शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो ब्राह्मणायनः प्रियव्रतं प्रत्याह—प्रियव्रत! पञ्चमे ऽहनि प्रातरेवोर्वराप्रायभूमिदानेन नरपतिस्त्वां मानयिष्यतीति। स च जाग्रत्तथा ऽऽत्मनो मानमनुभूय स्वप्नप्रत्ययं सत्यमभिमन्यते। तस्मात्संध्ये पारमार्थिकी सृष्टिः ॥ १ ॥ २ ॥

इति प्राप्ते उच्यते—

## मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

इदमत्राकूतम्—(२)न तावत्क्षीरस्येव दधि रजतस्य परिणामः शुक्तिः सम्भवति, नहि जात्वीश्वरगृहे चिरस्थितान्यपि रजतभाजनानि शुक्तिभावमनुभवन्ति दृश्यन्ते। न चेतरस्य रजतानुभवसमये ऽन्यो ऽनाकुलेन्द्रियो न तस्य शुक्तिभावमनुभवति प्रत्येति च (३)। न चोभयरूपं वस्तु, सामग्रीभेदात्तु कदाचिदस्य तोयभावोनुभूयते कदाचिन्मरीचितेति सांप्रतम्। पारमार्थिके ह्यस्य तोयभावे तत्साध्यामुदन्योपशमलक्षणार्थक्रियां कुर्यान्मरीचिसाध्यामपि रूपप्रकाशलक्षणाम्। न मरीचिभिः कस्यचित्तृष्णजा उदन्योपशाम्यति। न च तोयमेव द्विविधमुदन्योपशमनमतदुपशमनमिति युक्तम्। तदर्थक्रियाकारित्वव्याप्तं तोयत्वं मात्रयापि तामकुर्वत्तोयमेव न स्यात्। अपि च तोयप्रत्ययसमीचीनत्वायास्य द्वैविध्यमभ्युपेयते तच्चाभ्युपगमेपि न सेद्धुमर्हति। तथाह्यसमर्थविधापाति तोयमेतदिति मन्वानो न तृष्णयापि मरीचितोयमभिधावेत्, यथा मरीचीननुभवन्। अथाशक्तं शक्तमभिमन्यमानो ऽभिधावति। किमपराद्धं मरीचिषु तोयविपर्यासेन सर्वजनीनेन यत्तमतिलङ्घ्य विपर्यासान्तरं कल्प्यते। (४)न च क्षीरदधिप्रत्ययवदाचार्यमातुलब्राह्मणप्रत्ययवद्वा तोयमरीचिविज्ञाने समुच्चितावगाहिनी स्वानुभवात्परस्परविरुद्धयोर्बाध्यबाधकभावावभासनात्। (५)तत्रापि रजतज्ञानं पूर्वमुत्पन्नं बाध्यमुत्तरं तु बाधकं शुक्तिज्ञानं प्राप्तिपूर्वकत्वात् प्रतिषेधस्य। रजतज्ञानात् प्राक् प्रापकाभावेन शुक्तेरप्राप्तायाः प्रतिषेधासम्भवात् पूर्वज्ञानप्राप्तं तु रजतं शुक्तिज्ञानमपबाधितुमर्हति। तदपबाधात्मकं च स्वानुभवादवसीयते। यथाहुः—

(६)आगामित्वादबाधित्वा परं पूर्वं हि जायते।
पूर्वं पुनरबाधित्वा परं नोत्पद्यते क चित् ॥

---

(१) अत्र विमतिपदं सत्यं स्वप्नत्वात्संवादिस्वप्नवदिति प्रयोगो द्रष्टव्यः।

(२) यदुक्तं पूर्वपक्षिणा क्षीरदधिवत्कालभेदेनैकस्य शुक्तिरजतात्मकत्वादविरोधो रजतशुक्तिज्ञानयोरिति, तत्राह न तावदिति।

(३) अनेनान्वयोपि प्रदर्शितः। शुक्तिभावमित्यनुषज्यते।

(४) पूर्वं क्षीरस्येव दधि न रजतस्य शुक्तिः परिणाम इत्यर्थं दूषणं दत्तमधुना प्रतीतिरपि तथा नास्तीत्याह न चेति।

(५) यदुक्तं बाध्यबाधकभावो न ज्ञानयोरिति तत्राह तत्रापीति।

(६) परं शुक्तिज्ञानमबाधित्वैव पूर्वं रजतज्ञानं जायते, कुतः? परस्यागामित्वात् भविष्यत्त्वादप्राप्तस्य निषेधस्य पूर्वेण कर्तुमशक्यत्वादित्यर्थः। ननु तर्हि पूर्वमपि परेण न बाध्यते स्वविषयशूरत्वादुभयोरिति तत्राह पूर्वं पुनरिति। सत्यं तथापि पूर्वप्रतीतार्थाभावबोधितत्वात्तस्य बाधकमित्यर्थः।

(१)न च वर्तमानरजतावभासि ज्ञानं भविष्यत्तामस्यागोचरयत भविष्यता स्वसमयवर्तिनीं शुक्तिं गोचरयता प्रत्ययेन बाध्यते कालभेदेन विरोधाभावादिति युक्तम् । मा नामास्य ज्ञासीप्रत्यक्षं भविष्यत्तां तत्पृष्ठभावि त्वनुमानमुपकारहेतुमावमिवासति विनाशप्रत्ययोपनिपाते स्थेमानमाकलयति । असति विनाशप्रत्ययोपनिपाते रजतमिदं स्थिरं रजतत्वादनुभूतप्रत्यभिज्ञातरजतवत् । तथा च रजतगोचरं प्रत्यक्षं वस्तुतः स्थिरमेव रजतं गोचरयेत् । तथा च भविष्यच्छुक्तिकाज्ञानकालं रजतं व्याप्नुवादिति विरोधात् शुक्तिज्ञानेन बाध्यते । यथाहुः—

रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते ।
भविष्यच्छुक्तिकाज्ञानकालं व्याप्नोति तेन तत् ॥ इति ।

(२)प्रत्यक्षेण चिरस्थायीति गृह्यत इति के चिद्याचक्षते । तदयुक्तं, यदि चिरस्थायित्वं योग्यता न सा प्रत्यक्षगोचरः शक्तेरतीन्द्रियत्वात् । अथ कालान्तरव्यापित्वं तदप्ययुक्तं, कालान्तरेण भविष्यतेन्द्रियस्य संयोगायोगात् तदुपहितधर्मिणो व्यापित्वस्यातीन्द्रियत्वात् । न (३)च प्रत्यभिज्ञाप्रत्ययवदत्रास्ति संस्कारः सहकारी येनावर्तमानमप्याकलयेत् । तस्मादत्यन्ताभ्यासवशेन प्रत्यक्षानन्तरं शीघ्रतरोत्पन्नविनश्यदवस्थानुमानसहितप्रत्यक्षाभिप्रायमेव चिरस्थायीति गृह्यत इति मन्तव्यम् । अत एवैतत्सूक्ष्मतरं कालव्यवधानमविवेचयन्तः सौगताः प्राहुर्द्विविधो हि विषयः प्रत्यक्षस्य ग्राह्यश्चाध्यवसेयश्च । ग्राह्यःक्षण एकः स्वलक्षणो ऽध्यवसेयश्च सन्तान इति । (४)एतेन स्वप्नप्रत्ययो मिथ्यात्वेन व्याख्यातः । यत्तु सत्यं स्वप्नदर्शनमुक्तं तत्राप्याख्यात्रा ब्राह्मणायनेनाख्याते संवादाभावात् , प्रियव्रतस्याख्यातसंवादस्तु काकतालीयो न स्वप्नज्ञानं प्रमाणयितुमर्हति, तादृशस्यैव बहुलं विसंवाददर्शनात् । दर्शितश्च विसंवादो भाष्यकृता कात्स्न्र्येनानभिव्यक्ति विवृण्वता रजन्यां सुप्त इति रजनीयसमयेपि(५) हि भारताद् वर्षान्तरे केतुमालादौ वासरो भवतीति भारते वर्षं इत्युक्तम् ॥ ३ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

दर्शनं सूचकं (६)तच्च स्वरूपेण सत् , असत्तु दृश्यम् । अत एव स्त्रीदर्शनस्वरूपसाध्याश्चरमधातुविसर्गादयो जाग्रदवस्थायामनुवर्तन्ते । स्त्रीसाध्यास्तु माल्यविलेपनदन्तक्षतादयो नानुवर्तन्ते । न चास्माभिः स्वप्नेपि प्राज्ञव्यापार इति । (७)प्राज्ञव्यापारत्वेन पारमार्थिकत्वा·

(१) स्वविषयशूरत्वेपि अर्थाद्विरोधमाह नचेति । अयुक्तत्वे हेतुमाह मानमिति । रजतज्ञानकालमारभ्य यावच्छुक्तिज्ञानकालं रजतविनाशहेत्वदर्शनात् स्थायित्वे शुक्तित्वरजतत्वयोरेकदैकत्र विरोधादर्थात बाध्यबाधकभावो ज्ञानयोरित्यर्थः । (२) अनुमानानुगृहीतप्रत्यक्षेण ।

(३) ननु यथा प्रत्यभिज्ञाप्रत्यक्षं कालान्तरवर्तिनीं तत्तां गृह्णाति तथा रजतप्रत्यक्षमपि भविष्यत्तां रजतस्य ग्रहीष्यति, अत आह नचेति ।

(४) इदंरजतादिभ्रमाणां बाधमुपपाद्य प्रकृते योजयति एतेनेति ।

(५) भारतवर्षे यो रजनीसमयस्तत्समिन्नित्यर्थः ।

(६) ननु कुञ्जरारोहादिदर्शनं स्वप्ने सूचकं तच्च सत्यमिति कथं मिथ्याभूतस्य स्वप्नस्य सूचकत्वं सूत्रे उच्यते, तत्राह तच्चेति । विषयाविशेषितरूपेण ज्ञानमात्ररूपेण सत् तच्च न सूचकं यतःकुतश्चिज्ज्ञानाद्यस्यकस्यचित्सूचनप्रसङ्गात् , असत्तु दृश्यं तस्मात्तदुपहितं दर्शनं सूचकं तच्च मिथ्यैवेत्यर्थः ।

(७) स्वप्नः सत्यः प्राज्ञकर्तृकत्वादित्यनुमिते नचास्माभिरिति भाष्येण स्वप्नस्य प्राज्ञकर्तृकत्वमभ्यनुज्ञायते तत्र हेतुस्वीकारे हेतुमत्सत्यत्वमपि स्यादित्याशङ्क्याह प्राज्ञेति ।

नुमानं प्रत्यक्षेण बाधकप्रत्ययेनाविरुध्यमानं नात्मानं लभत इति भावः ॥ ४ ॥

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥**

**देहयोगाद्वा सोऽपि ॥ ६ ॥**

(१)बन्धमोक्षयोरान्तरालिकं तृतीयमैश्वर्यमिति ।

'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' 'देहयोगाद्वा सोऽपी'ति( पृ० ७११ पं० १५ ) सूत्रद्वयं कृतोपपादनमस्माभिः प्रथमसूत्रे । निगदव्याख्यातं चैतयोर्भाष्यमिति ॥ ५-६ ॥

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥**

**अतः प्रबोधोऽस्मात् ॥ ८ ॥**

इह हि नाडीपुरीतत्परमात्मानो जीवस्य सुषुप्तावस्थायां स्थानत्वेन श्रूयन्ते । तत्र किमेषां स्थानानां विकल्प आहो स्वित्समुच्चयः(२) । किमतो ? यद्येवम् एतदतो भवति । यदा नाड्यो वा पुरीतद्वा सुषुप्तस्थानं तदा विपरीतग्रहणनिवृत्तावपि न जीवस्य परमात्मभाव इति । (३)अविद्यानिवृत्तावपि जीवस्य परमात्मभावाय कारणान्तरमपेक्षितव्यं, तच्च कर्मैव न तु तत्त्वज्ञानं विपरीतज्ञाननिवृत्तिमात्रेण तस्योपयोगात् विपरीतज्ञाननिवृत्तेश्च विनापि तत्त्वज्ञानं सुषुप्तावपि सम्भवात् । ततश्च कर्मणैवापवर्गो न ज्ञानेन । यथाहुः—

कर्मणैव तु संसिद्धिमास्थिता जनकादयः ॥ इति ।

अथ तु परमात्मैव नाडीपुरीतत्द्वारा सुषुप्तिस्थानं ततो विपरीतज्ञाननिवृत्तेरस्ति आत्रया परमात्मभावोपयोगः । तया हि तावदेव जीवस्तदवस्थानो भवति केवलम् । तत्त्वज्ञानाभावेन समूलकाषमविद्याया अकाषात् जाग्रत्स्वप्नलक्षणं जीवस्य व्युत्थानं भवति । तस्मात्प्रयोजनवत्येषा विचारणेति । किं तावत्प्राप्तं ? नाडीपुरीतत्परमात्मसु स्थानेषु सुषुप्तस्य जीवस्य निलयनं प्रति विकल्पः । यथा बहुषु प्रासादेष्वेको नरेन्द्रः कदाचित्क्वचिन्निलीयते कदाचित्क्वचिदेवमेको जीवः कदाचिन्नाडीषु कदाचित्पुरीतति कदा चिद्ब्रह्मणीति । (४)यथा निरपेक्षा व्रीहियवाः क्रतुसाधनीभूतपुरोडाशप्रकृतितया श्रुता एकार्था विकल्प्यन्ते, एवं सप्तमीश्रुत्या वा ऽऽयतनश्रुत्या वैकनिलयनार्थाः परस्परानपेक्षा नाड्यादयोऽपि विकल्पमर्हन्ति । यत्रापि नाडीभिः प्रत्यवसृप्य पुरीतति शेत इति नाडीपुरीततोः समुच्चयश्रवणं 'तथा तासु तदा भवति यदा सुप्तः स्वप्नं न कं चन पश्यति । अथास्मिन्प्राण एवैकधा भवती'ति नाडीब्रह्मणोराधारयोः समुच्चयश्रवणम्।(५) प्राणशब्दं च ब्रह्म 'यस्मिन् प्राणे ब्रह्मणि स जीव एक-

---

( १ ) तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यमिति भाष्योदाहृतश्रुतौ तृतीयशब्दस्यार्थमाह बन्धेति । सगुणब्रह्मोपासनफलमीश्वरसायुज्यं हि न बन्धो दुःखाभावान्न मोक्षो भेदाश्रयत्वादतोऽन्तरालवर्तीत्यर्थः ।

( २ ) आसु तदा नाडीषु इत्यादिसप्तमीनिर्देशात्ताभिः प्रत्यवसृप्येत्यादिसमुच्चयनिर्देशाच्च संशय इत्यर्थः ।

( ३ ) ननु दण्डायमानभावरूपाज्ञाननिवृत्तौ ब्रह्मभावः, सुषुप्तौ तु नाड्यादिस्थस्य तदनिवृत्तमिति न ब्रह्मभावः ततो नाड्यादेः सुषुप्तिस्थानत्वाभावचिन्ता निष्प्रयोजनेत्याशङ्क्याहाविद्यानिवृत्ताविति ।

( ४ ) लौकिकविकल्पोदाहरणमुक्त्वा वैदिकन्तदाह यथेति ।

( ५ ) नन्वत्र प्रमाणप्राप्तिः प्रतीयते कथं नाडीब्रह्मसमुच्चयस्तत्राह प्राणशब्दमिति ।

धा भवती'ति वचनात् । तथा(१)प्यासु तदा नाडीषु सुप्तो भवतीति च पुरीतति शेत इति च निरपेक्षयोर्नाडीपुरीततोराधारत्वेन निर्देशान्निरपेक्षयोरेवाधारत्वम् । (२)द्वयोस्तु विशेषः—कदाचिन्नाड्य एवाधारः कदाचिन्नाडीभिः सञ्चरमाणस्य पुरीतदेव । एवं ताभिरेव सञ्चरमाणस्य कदाचिद्ब्रह्मैवाधार इति सिद्धमाधारत्वे नाडीपुरीतत्परमात्मनामनपेक्षत्वम्, तथा च विकल्पो व्रीहियववद्बृहद्रथन्तरवद्वेति प्राप्तम् ।

एवं प्राप्तेऽभिधीयते—जीवः समुच्चयेनैवैतानि नाड्यादीनि स्वापायोपैति न विकल्पेन । अयमभिसन्धिः-नित्यवदाम्नातानां यत्पाक्षिकत्वं नाम तद्गत्यन्तराभावे कल्प्यते । यथाहुः—

एवमेषोऽष्टदोषोऽपि(३) यद्व्रीहियववाक्ययोः ।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥ इति ।

(४)प्रकृतक्रतुसाधनीभूतपुरोडाशद्रव्यप्रकृतितया हि परस्परानपेक्षौ व्रीहियवौ विहितौ शक्नुतश्चैतौ प्रत्येकं पुरोडाशमभिनिर्वर्तयितुं, तत्र यदि मिश्राभ्यां पुरोडाशोऽभिनिर्वर्त्येत परस्परानपेक्षव्रीहियवविधातृणी उभे अपि शास्त्रे बाध्येयाताम् ।(५)न चैतौ प्रयोगवचनः समुच्चेतुमर्हति, स हि यथाविहितान्यभिसमीक्ष्य प्रवर्तमानो नैतान्यन्यथयितुं शक्नोति मिश्रणे चान्यथात्वमेतेषाम् । न चाङ्गानुरोधेन प्रधानाभ्यासो 'गोसवे उभे कुर्या'दितियुक्तः(६) । अश्रुतो ह्यत्र प्रधानाभ्यासोऽङ्गानुरोधेन च सो ऽन्याय्यः । न चाङ्गभूतैन्द्रवायवादिग्रहानुरोधेन यथा प्रधानस्य सोमयागस्यावृत्तिरेवमत्रापीति युक्तम् । (७)'सोमेन यजेते'ति हि तत्रापूर्वयागविधिः । तत्र च दशमुष्टिपरिमितस्य सोमद्रव्यस्य 'सोममभिषुणोति सोममभिप्लावयती'ति च वाक्यान्तरानुलोचनया रसद्वारेण यागसाधनीभूतस्यैन्द्रवाय्वाद्युद्देशेन प्रादेशमात्रेषूर्ध्वपात्रेषु ग्रहणानि पृथक् प्रकल्पनानि संस्कारा विधीयन्ते न तु सोमयागोद्देशेनेन्द्रवाय्वादयो देवताश्चो-

(१) यत्रापीत्युपक्रमात् तत्रापीत्यर्थः ।

(२) निरपेक्षसप्तमीश्रुतिभ्यां यदि नाडीपुरीततोर्निरपेक्षमाधारत्वं का तर्हि समुच्चयश्रवणस्य गतिरत आह द्वयोस्त्विति । नाड्यस्तावत्स्वतन्त्रा एवाधारः, पुरीतद्ब्रह्मप्राप्ती तु नाडीद्वारा भवतः परस्परं चानपेक्षे, तत्र समुच्चयश्रवणाभावात् कदाचिच्च नाडीनां पुरीतद्ब्रह्मसमुच्चयेपि कदाचिदनपेक्षत्वानत्वाद्विकल्पसिद्धिरित्यर्थः ।

(३) अष्टदोषोपीति । व्रीह्यनुष्ठानपक्षे यवशास्त्रप्रतीतप्रामाण्यत्यागः, अप्रतीतप्रामाण्यस्वीकारः तथा प्रयोगान्तरे यवेषूपादीयमानेषु यवशास्त्रस्य प्राक्स्वीकृताप्रामाण्यत्यागः परित्यक्तप्रामाण्योपपादनामिति यवशास्त्रे ४ दोषाः, एवं यवानुष्ठानपक्षेपीत्यष्टौ दोषा विकल्पे बोध्याः ।

(४) नन्वेवं तर्हि आग्नेयादिवत्समुच्चयः किं न स्वीक्रियते इत्याशङ्क्य गतिरन्या न विद्यत इत्येतत्प्रपञ्चयति प्रकृतेति ।

(५) ननु वाक्यद्वयसामर्थ्यात्समुच्चयासम्भवेपि अङ्गसहितप्रधानानुष्ठापकप्रयोगवचनो व्रीहियवौ समुच्चाययतु इत्याशङ्क्याह नचेति ।

(६) तत्राङ्गभूतबृहद्रथन्तरसाहित्यवचनात्पृष्ठस्तोत्रावृत्तिवदत्राङ्गभूतव्रीहियवानुरोधेनाग्नेययागाभ्यासो न युक्त इत्यर्थः, युक्तिमाह अश्रुत इति । उभे कुर्यादित्यङ्गसाहित्यश्रवणात्तत्रावृत्तिर्युक्ताऽत्र व्रीहियवाभ्यां यजेतेति श्रवणाभावान्नावृत्तिरिति भावः ।

(७) ननु कथमत्र प्रधानस्याङ्गानुरोधेनावृत्तिः, ऐन्द्रवायवादिवाक्येभ्य एव द्रव्यदेवतासम्बन्धाभिधानात्तद्द्वाराऽनुमितयागा विधीयन्ते, सोमेनेति तु तेषां यागानां समुदायानुवाद इत्याशङ्क्याह सोमेनेति । ननु भवत्वपूर्वविधिस्तथापि कथमावृत्तिः, सोमवाक्यविहितयागे इन्द्रवाय्वादिदेवताविकल्पेन विधीयन्तान्तत्राह तत्रेत्यादिना ।

यन्ते येन तासां यागनिष्पत्तिलक्षणैकार्थत्वेन विकल्पः स्यात्। (१)न च प्रादेशमात्रमेकैकमूर्ध्वपात्रं दशमुष्टिपरिमितसोमरसग्रहणाय कल्पते येन तुल्यार्थतया ग्रहणानि विकल्पेरन्। न च यावन्मात्रमेकमूर्ध्वपात्रं व्याप्नोति तावन्मात्रं गृहीत्वा परिशिष्टं त्यज्येतेति युज्यते। दशमुष्टिपरिमितोपादानस्यादृष्टार्थत्वप्रसङ्गात्। एवं तद्दृष्टार्थं भवेद्यदि तत्सर्वं याग उपयुज्येत। न च दृष्टे सम्भवत्यदृष्टकल्पना न्याय्या, तस्मात्सकलस्य सोमरसस्य यागशेषत्वेन संस्कारार्हत्वादेकैकेन च ग्रहणेन सकलस्य संस्कर्तुमशक्यत्वात्तदवयवस्यैकेन संस्कारेऽवयवान्तरस्य ग्रहणान्तरेण संस्कार इति कार्य्यभेदाद्ग्रहणानि समुच्चीयेरन्। (२)अत एव समुच्चयदर्शनं 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाती'ति। समुच्चये च सति क्रमोऽप्युपपद्यते—'आश्विनो दशमो गृह्यते तृतीयो हूयते', तथैवै'न्द्रवायवाग्रान् ग्रहान् गृह्णाती'ति। (३)तेषां च समुच्चये सति यावद्यदुद्देशेन गृहीतं तावत्तस्यै देवतायै त्यक्तव्यमित्यर्थाद्यागस्यावृत्त्या भवितव्यम्। यदि पुनः पृथक्कृतान्यप्येकीकृत्य काञ्चन देवतामुद्दिश्य त्यजेरन् पृथक्करणानि च देवतोद्देशाश्चादृष्टार्था भवेयुः। न च दृष्टे सम्भवत्यदृष्टकल्पना न्याय्येत्युक्तम्। तस्मात्तत्र समुच्चयस्यावश्यम्भावित्वाद्गुणानुरोधेनापि प्रधानाभ्यास आस्थीयते। (४)इह त्वभ्यासकल्पनाप्रमाणाभावात् पुरोडाशद्रव्यस्य चानियमेन प्रकृतद्रव्ये यस्मिन् कस्मिंश्चित्प्राप्ते एकैकापरस्परानपेक्षा व्रीहिश्रुतिर्यवश्रुतिश्च नियामिकैकार्थतया विकल्पमर्हतः। (५) न तु नाडीपुरीतत्परमात्मनामन्योन्यानपेक्षाणामेकनिलयनार्थत्वसम्भवो येन विकल्पो भवेत्। नह्येकविभक्तिनिर्देशमात्रेणैकार्थता भवति समुच्चितानामप्येकविभक्तिनिर्देशदर्शनात्—पर्यङ्के शेते प्रासादे शेत इति। तस्मादेकविभक्तिनिर्देशस्यानैकान्तिकत्वादन्यतो विनिगमना वक्तव्या। सा चोक्ता भाष्यकृता *"यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति"*(पृ०७१५पं० ५)इत्यादिना। सापेक्षश्रुत्यनुरोधेन निरपेक्षश्रुतिर्नेतव्येत्यर्थः। शेषमतिरोहितार्थम्। ननु यदि ब्रह्मैव निलयनस्थानं तावन्मात्रमुच्यतां कृतं नाड्युपन्यासेनेत्यत आह—अपि चात्रेति। अपि चेति समुच्चये न विकल्पे(६)। एतदुपपत्तिसहिता पूर्वोपपत्तिरर्थसाधिनीति। मार्गोपदेशोपयुक्तानां नाडीनां स्तुत्यर्थमत्र नाडीसङ्कीर्तनमित्यर्थः। पित्तेनाभिव्याप्तकरणो न बाह्यान् विषयान् वेदेति तद्द्वारा सुखदुःखाभावेन तत्कारणपाप्मास्पर्शेन नाडीस्तुतिः। यदा तु तेजो ब्रह्म तदा सुगमम्। अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवती-

---

(१) दशमुष्ट्यादिमर्थं स्वयं व्याचष्टे नचेति।

(२) लिङ्गदर्शनाभ्याहात एवेति। विकल्पे ह्येक एव प्रयोगः स्यादित्यर्थः।

(३) नन्वेवमपि ग्रहणान्यावर्तन्तां कथं यागावृत्तिस्तत्र श्रुत्याद्यभावात् यतोऽङ्गानुरोधेन प्रधानावृत्तिः स्यादित्याशंक्य सामर्थ्यमाह तेषां चेति।

(४) व्रीहियववाक्ये, व्रीहियवसमुच्चये हि यागाभ्यासकल्पना स्यात् तत्र च प्रमाणाभावादित्यर्थः। व्रीहियवसमुच्चये न केवलं प्रमाणाभावः किन्तु प्रमाणविरोधोऽपीत्याह पुरोडाशद्रव्यस्येति। पुरोडाशचोदनयोपात्तद्रव्येषु व्रीहयोऽपि पक्षप्राप्तास्तत्रप्राप्तांशपूरणार्था व्रीहिश्रुतिर्व्रीहिभिरेवेति नियमयेत् तत्र यवसमुच्चये व्रीहिश्रुतिबाधः, एवं यवश्रुतेर्नियमार्थत्वाद्व्रीहिसमुच्चये तद्बाध इत्यर्थः।

(५) गत्यन्तराभावाद्व्रीहियवयोर्विकल्पं प्रदर्श्य प्रकृते गत्यन्तरसद्भावाद्विकल्पाभावमाह नत्विति।

(६) विकल्पफलकोऽभ्युच्चय इत्यर्थः।

स्ययमर्थः । (१)अभ्युपेत्य जीवस्याधेयत्वमिदमुक्तम्, परमार्थतस्तु न जीवस्याधेयत्वमस्ति । तथाहि—नाड्यः पुरीतद्वा जीवस्योपाधीनां करणानामाश्रयः, जीवस्तु ब्रह्माव्यतिरेकात् स्वमहिमप्रतिष्ठः । न चापि ब्रह्म जीवस्याधारस्तादात्म्याद्विकल्प्य तु व्यतिरेकं ब्रह्मण आधारत्वमुच्यते जीवं प्रति । तथा च सुषुप्तावस्थायामुपाधीनामसमुदाचारा(२)ज्जीवस्य ब्रह्मात्मत्वमेव ब्रह्माधारत्वं न तु नाडीपुरीतदाधारत्वम् तदुपाधिकरणमात्राधारतया तु सुषुप्तदशारम्भाय जीवस्य नाडीपुरीतदाधारत्वमित्यतुल्यार्थतया न विकल्प इति । "अपि च न कदा चिज्जीवस्येति" (पृ० ७१७ पं० ५)। औत्सर्गिकं ब्रह्मस्वरूपत्वं जीवस्याग्रति जाग्रत्स्वप्नदशारूपेऽपवादे सुषुप्तावस्थायां नान्यथयितुं शक्यमित्यर्थः । अपि च येऽपि स्थानविकल्पमास्थिषत तैरपि विशेषविज्ञानोपशमलक्षणा सुषुप्त्यवस्थाङ्गीकर्तव्या । न चेयमात्मतादात्म्यं विना नाड्यादिषु परमात्मव्यतिरिक्तेषु स्थानेषूपपद्यते । तत्र हि स्थितोऽयं जीव आत्मव्यतिरेकाभिमानी सन्नवश्यं विशेषज्ञानवान् भवेत् । तथाहि श्रुतिः—'यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्ये'दिति । आत्मस्थानत्वे त्वदोषः, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं विजानीया'दिति श्रुतेः । तस्मादप्यात्मस्थानत्वस्य द्वारं नाड्यादीत्याह "अपि च स्थानविकल्पाभ्युपगमेऽपी"ति । अत्र चोदयति—"ननु भेदविषयस्यापी"ति । भिद्यत इति भेदः, भिद्यमानस्यापि विषयस्येत्यर्थः । परिहरति—"बाढमेवं स्यादि"ति । न तावज्जीवस्यास्ति स्वतःपरिच्छेदस्तस्य ब्रह्मात्मत्वेन विभुत्वात् । औपाधिके तु परिच्छेदे यत्रोपाधिरसन्निहितस्तन्मात्रं न जानीयान्न तु सर्वम् । नह्यसन्निधानात् सुमेरुमविद्वान् देवदत्तः सन्निहितमपि न वेद । तस्मात्सर्वविशेषविज्ञानप्रत्यस्तमयीं सुषुप्तिं प्रसाधयता तदाऽस्य सर्वोपाध्युपसंहारो वक्तव्यः । तथा च सिद्धमस्य तदा ब्रह्मात्मत्वमित्यर्थः । गुणप्रधानभावेन समुच्चयो न (३)समप्रधानतयाऽऽग्नेयादिवदिति वदन् विकल्पमप्यपाकरोति—"न च वयमिहे"ति (पृ० ७१८ पं० १) स्वाध्यायाध्ययनविध्यापादितपुरुषार्थत्वस्य वेदराशेरेकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तम् । न च सुषुप्तावस्थायां जीवस्य स्वरूपेण नाड्यादिस्थानत्वप्रतिपादने किंचित्प्रयोजनं ब्रह्मभूयप्रतिपादने त्वस्ति । तस्मान्न समप्रधानभावेन समुच्चयो नापि विकल्प इति भावः । नीतार्थमन्यत् ॥ ७ ॥ ८ ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

(४)यद्यपीश्वरादभिन्नो जीवस्तथाप्युपाध्यवच्छेदेन भेदं विवक्षित्वाऽधिकरणान्तरारम्भः ।

---

(१) एवं तुल्यबलत्वस्याभावान्न नाड्यादीनां विकल्प इत्युक्तम् अधुनाऽतुल्यार्थत्वाच्च न स इत्याहाभ्युपेत्येत्यादिना । जीवोपाध्यन्तःकरणादिर्नाडीपुरीततोराश्रितः जीवस्तु न क्वापीति कथमाधारत्वेन तुल्यार्थतेत्यर्थः ।

(२) अभिव्यक्तेः, अनेन सर्वदा जीवस्य ब्रह्माभेदे सुषुप्तौ किमित्याधारत्वोपचार इत्याक्षेपः परिहृतः ।

(३) न समेति । समप्रधानत्वे हि नाडीपुरीतद्ब्रह्मसु त्रिष्वपि जीवस्थानं स्यात् तदा च न ब्रह्मभाव इति समप्रधानभावनिरासो विकल्पनिरासोपलक्षणार्थः ।

(४) स्यादेतत्, येषामीश्वर एव साक्षात्संसारीति दर्शनं न तेषां पूर्वपक्षोऽवकल्पते, नापि सिद्धान्तः, ईश्वरस्य सुषुप्त्युत्थानादेरदर्शनात्कल्पितस्य च जीवस्य स्वाप्नजीववदुत्थानाद्यसम्भवात्कथमधिकरणान्तरारंभ

स एवेति दुःसम्पादमिति स वान्यो वेति ईश्वरो वेति सम्भवमात्रेणोपन्यासः । न हि तस्य शुद्धमुक्तस्वभावस्याविद्याकृतव्युत्थानसम्भवः, अत एव विमर्शावसरेऽस्यानुपन्यासः । (१)यदि ब्रह्मादिनिर्वर्तनीयमेकस्य पुंसश्चोदितं कर्म तस्य पूर्वेद्युरनुष्ठितस्यापि स्मृतिरिति वक्तव्येऽनुः प्रत्यभिज्ञानसूचनार्थः । अत एव सोऽहमस्मीत्युक्तम् । "पुनः प्रतिन्यायं प्रतियोन्या द्रवती"ति ( पृ० ७१९ पं० १६ ) । अयनम् आयः नियमेन गमनं न्यायः । जीवः प्रतिन्यायं सम्प्रसादे सुषुप्तावस्थायां बुद्धान्ताया (२)द्रवति आगच्छति । प्रतियोनि यो हि व्याघ्रयोनिः सुषुप्तो बुद्धान्तमागच्छन् स व्याघ्र एव भवति न जात्यन्तरम् । तदिदमुक्तम्–"त इह व्याघ्रो वा सिंहो वे"ति ( पृ० ७२० पं० १ ) । "अथ तत्र सुप्त उत्तिष्ठती"ति । यो हि जीवः सुप्तः स शरीरान्तर उत्तिष्ठति । शरीरान्तरगतस्तु सुप्तजीवसम्बन्धिनि शरीर उत्तिष्ठति । ततश्च न शरीरान्तरे व्यवहारलोप इत्यर्थः । "अपि च न जीवो नाम परस्मादन्य" इति । यथा घटाकाशो नाम न परमाकाशादन्यः, अथ चान्य इव यावद्घटमनुवर्तते न चासौ दुर्विवेचस्तदुपाधेर्घटस्य विविक्तत्वात् । एवमनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवो न वस्तुतः परमात्मनो भिद्यते, (३)तदुपाध्युद्भवाभिभवाभ्यां चोद्भूत इवाभिभूत इव प्रतीयते । ततश्च सुषुप्तादावपि अभिभूत इव जाग्रदवस्थादिषूद्भूत इव । तस्य चाविद्यातद्वासनोपाधेरनादितया कार्यकारणभावेन प्रवृत्तः सुविवेचतया तदुपहितो जीवः सुविवेच इति ॥ ९ ॥

## मुग्धेऽर्द्धसंपत्तिः परिशेषात् ॥ १० ॥

(४)विशेषविज्ञानाभावान्मूर्च्छा जागरस्वप्नावस्थाभ्यां भिद्यते पुनरुत्थानाच्च मरणावस्थायाः । अतः सुषुप्तिरेव मूर्छा विशेषज्ञानाभावाविशेषात् । चिरानुच्छ्वासवेपथुप्रभृतयस्तु सुप्तेरवान्तरप्रभेदाः । तद्यथा—कश्चित्सुप्तोत्थितः प्राह सुखमहमस्वाप्सं लघूनि मे गात्राणि प्रसन्नं मे मन इति, कश्चित्पुनर्दुःखमस्वाप्सं गुरूणि मे गात्राणि भ्रमत्यनवस्थितं मे मन इति । न चैतावता सुषुप्तिर्भिद्यते । तथा (५)विकारान्तरेऽपि मूर्च्छा न सुषुप्तेर्भिद्यते । तस्माल्लोकप्रसिद्ध्यभावान्नेयं पञ्चम्यवस्थेति प्राप्तम् ।

एवं प्राप्ते, उच्यते–यद्यपि विशेषविज्ञानोपशमने मोहसुषुप्तयोः साम्यं तथापि नैक्यम् ।

---

इति भास्कराक्षेपे आह यद्यपीति । अवस्थात्रयानुगव्यावहारिकसत्त्वोपेताविद्योपहितजीवस्य स्वप्नकल्पितजीववैलक्षण्यात्स एवोत्तिष्ठत्यन्यो वेति चिन्ता सम्भवतीत्यर्थः ।

( १ ) ननु स्मृतिमात्रस्यापि सुप्तोत्थितजीवैक्यगमकत्वमस्ति, नह्यन्यदृष्टमन्यः स्मरति, स्मरति चायं सुप्तो जाग्रद्दृष्टमतः सूत्रे अनुस्मृतीत्यनुशब्दो व्यर्थ इत्याशङ्क्याह यदीति । हे अहनी द्व्यहः, यतः सूत्रेऽनुस्मृतिः प्रत्यभिज्ञाऽतः सोऽहमस्मीति प्रत्यभिज्ञोदाहृता भाष्ये इत्यर्थः ।

( २ ) जाग्रदवस्थायै ।

( ३ ) ननु यद्यौपाधिको जीवस्तर्हि सुषुप्तावुपाधिनाशान्न पश्यतीत्यत आहोपाध्युद्भवेति । सुषुप्तादावन्तःकरणाद्युपाधिरभिभूतो भवति संस्कारात्मनाऽवतिष्ठते न तु सर्वात्मना न पश्यतीत्यर्थः ।

( ४ ) पूर्वत्र प्रत्यभिज्ञानात्स एवोत्तिष्ठतीत्युक्तम् , तर्हि विशेषविज्ञानाभावविशेषेणैक्यप्रत्यभिज्ञानात्सुषुप्तिरेव मुग्धिरिति पूर्वपक्षमाह विशेषेति ।

( ५ ) करालवदनत्वादौ ।

(१)नहि विशेषविज्ञानसद्भावसाम्यमात्रेण स्वप्नजागरयोरभेदः । बाह्येन्द्रियव्यापारभावाभावाभ्यां तु भेदे तयोः सुषुप्तमोहयोरपि प्रयोजनभेदात्कारणभेदाल्लक्षणभेदाच्च भेदः । श्रमापनुत्त्यर्थां हि ब्रह्मणा सम्पत्तिः सुषुप्तम् । शरीरत्यागार्थां तु ब्रह्मणा संपत्तिर्मोहः । (२) यद्यपि सत्यपि मोहे न मरणं तथाप्यप्रति मोहे न मरणमिति मरणार्थो मोहः । मुषलसंपातादिनिमित्तत्वान्मोहस्य श्रमादिनिमित्तत्वाच्च सुषुप्तस्य मुखनेत्रादिविकारलक्षणत्वान्मोहस्य प्रसन्नवदनत्वादिलक्षणभेदाच्च सुषुप्तस्य । सुषुप्तस्य स्ववान्तरभेदेपि निमित्तप्रयोजनलक्षणाभेदादेकत्वम् , तस्मात्सुषुप्तमोहावस्थयोर्ब्रह्मणा संपत्तावपि सुषुप्ते यादृशी संपत्तिर्न तादृशी मोह इत्यर्द्धसंपत्तिरुक्ता, साम्यवैषम्याभ्यामर्धत्वम् । यदा चैतदवस्थान्तरं तदा भेदात् तत्प्रविलयाय (३) यत्नान्तरमास्थेयम् । अभेदे तु न यत्नान्तरमिति चिन्ताप्रयोजनम् ॥ १० ॥

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥**

**न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥**

**अपि चैवमेके ॥ १३ ॥**

**अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥**

**प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥**

**आह च तन्मात्रम् ॥ १६ ॥**

**दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥**

**अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥**

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥**

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥२०॥**

**दर्शनाच्च ॥ २१ ॥**

अवान्तरसंगतिमाह "येन ब्रह्मणा सुषुप्तादिष्विति" । यद्यपि 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र निष्प्रपञ्चमेव ब्रह्मोपपादितं तथापि प्रपञ्चलिङ्गानां (४) बह्वीनां श्रुतीनां दर्शनाद्भवति पुनर्विचिकित्साऽतस्तन्निवारणायारम्भस्तस्य (५) च तत्त्वज्ञानमपवर्गोपयोगीति प्रयोजनवान् विचारः । तत्रोभयलिङ्गश्रवणादुभयरूपत्वं ब्रह्मणः प्राप्तम् । तत्रापि

---

( १ ) ज्ञानाभावसाम्येन मुप्तिमुग्ध्योरभेदे स्वप्नजागरितयोरपि विशेषविज्ञानसाम्यादभेद इति प्रतिबन्दीमाह नहीति । अथ सत्यप्यप्रयोजकसाम्ये प्रयोजकभेदात्तयोर्भेदस्तर्हि सुषुप्तिमोहयोरपि स्यात्स इत्याह बाह्येति । प्रयोजनभेदमेवाह श्रमेति ।

( २ ) ननु शरीरत्यागार्थश्चेन्मोहस्तर्हि मुग्धः शरीरं त्यजेदत आह यद्यपीति । सत्येव मोहे मृतिरित्यस्ति व्याप्तिः, सैव कारणत्वोपयोगिनी, न तु सति भवत्येवेति स्थितिकारणस्वीकारादित्यर्थः ।

( ३ ) अद्वयब्रह्मात्मत्वप्रतीतिकाले विचारेण तत्प्रविलयाय ।

( ४ ) प्रपञ्चो लिङ्गं सविशेषब्रह्मणस्तयाभिः प्रकाश्यते ताः प्रपञ्चलिङ्गा इत्यर्थः ।

( ५ ) निष्प्रपञ्चब्रह्मणश्च ।

सविशेषत्वनिर्विशेषत्वयोर्विरोधात्स्वाभाविकत्वानुपपत्तेरेकं स्वतोऽपरं तु परतः । न च यत्पर-तस्तदपारमार्थिकम्, नहि चक्षुरादीनां स्वतःप्रमाणभूतानां दोषतोऽप्रामाण्यमपारमार्थिकम्, विपर्ययज्ञानलक्षणकार्यानुत्पादप्रसङ्गात् । तस्मा(१)दुभयलिङ्गकश्रुतिप्रामाण्यादुभयरूपता ब्रह्मणः पारमार्थिकेति प्राप्ते,

उच्यते—न स्थानत उपाधितोऽपि परस्य ब्रह्मण उभयलिङ्गत्वसम्भवः । एकं हि पारमार्थिकमन्यदध्यारोपितं, पारमार्थिकत्वं ह्युपाधिजनितस्य रूपस्य ब्रह्मणः परिणामो भवेत् । स प्राक् प्रतिषिद्धस्तत्पारिशेष्यात्स्फटिकमणेरिव स्वभावस्वच्छधवलस्य लाक्षारसावसेकोपाधिरक्तिमा सर्वगन्धत्वादिरौपाधिको ब्रह्मण्यध्यस्त इति पश्यामः, निर्विशेषताप्रतिपादनार्थत्वाच्छ्रुतीनाम् । सविशेषतायामपि यश्चायमस्यां पृथिव्यां तेजोमय इत्यादीनां श्रुतीनां ब्रह्मैकत्वप्रतिपादनपरत्वाद्, एकत्वनानात्वयोश्चैकस्मिन्नसम्भवाद् एकत्वाङ्गत्वेनैव नानात्वप्रतिपादनपर्यवसानात्, नानात्वस्य(२) प्रमाणान्तरसिद्धतयानुवाद्यत्वादेकत्वस्य चानधिगतेर्विधेयत्वोपपत्तेर्भेददर्शननिन्दया च साक्षाद्भूयसीभिः श्रुतिभिरभेदप्रतिपादनाद् आकारवद् ब्रह्मविषयाणां च कासांचिच्छ्रुतीनामुपासनापरत्वमसति बाधकेऽन्यपराद्वचनात्प्रतीयमानमपि गृह्यते । यथा देवतानां विग्रहवत्त्वम् । सन्ति चात्र साक्षाद्द्वैतापवादेनाद्वैतप्रतिपादनपराः शतशः श्रुतयः, कासां (३)चिच्च द्वैताभिधायिनीनां तत्प्रविलयपरत्वम् । तस्मान्निर्विशेषमेकरूपं चैतन्यैकरसं सद्ब्रह्म परमार्थतो, विशेषाश्च सर्वगन्धत्ववामनत्वादय उपाधिवशादध्यस्ता इति सिद्धम् । शेषमतिरोहितार्थम् ॥

**अत्र केचिद् द्वे अधिकरणे कल्पयन्तीति** (पृ० ७३० पं० १२) किं सल्लक्षणं च प्रकाशलक्षणं ब्रह्म किं सल्लक्षणमेव (४)ब्रह्मोत प्रकाशलक्षणमेवेति । तत्र पूर्वपक्षं गृह्णाति **प्रकाशवच्चावैयर्थ्यात्** । चकारात्सच्च, अवैयर्थ्यात्, ब्रह्मणि तच्छ्रुतेः । सिद्धान्तयति **आह च तन्मात्रम्** । प्रकाशमात्रं, न हि सत्त्वं नाम प्रकाशरूपादन्यत् यथा सर्वगन्धत्वादयोऽपि तु प्रकाशरूपमेव सदिति नोभयरूपत्वं ब्रह्मण इत्यर्थः । तदेतदनेनोप(५)न्यस्य दूषितम् । (६)सत्ताप्रकाशयोरेकत्वे नोभयलक्षणत्वम् । भेदेन स्थानतोऽपीऽति निराकृतमिति नाधिकरणान्तरं प्रयोजयति । परमार्थतस्त्वभेद एव प्रकर्षप्रकाशवदिति । **सर्वेषां च साधारणे प्रविलयार्थत्वे सत्यरूपवदेव हि तत्प्रधानत्वादिति विनिगमनकारणवचनमनवकाशं स्यात्** (पृ० ७३३

(१) ननु परोपाधिकं किञ्चित्सत्यं यथा चक्षुरादीनामप्रमाकरत्वं, किञ्चिन्मिथ्या यथा स्फटिकलौहित्यम्, तत्र सविशेषत्वनिर्विशेषत्वयोर्यदन्यतरपक्षोपाधिकं तत्सत्यमेवेति कुतो निर्णयस्तत्राहोभयलिङ्गकशास्त्रप्रामाण्यादिति ।

(२) व्यावहारिकप्रमाणसिद्धभेदानुवादेन पारमार्थिकाभेदप्रतिपादनपरा श्रुतिरित्यर्थः ।

(३) द्वा सुपर्णा इत्यादीनाम् ।

(४) एकदेशिमते द्वितीयाधिकरणे वचनव्यक्तीराह किं सल्लक्षणमेवेति । एवकारो बोधान्तरव्यवच्छेदार्थः । (५) अत्र केचिदित्यादिभाष्येण ।

(६) अथ पूर्वपक्षानुत्थानमाह सत्तेति। प्रकाशवच्च ब्रह्मेत्युक्ते किं सत्ताप्रकाशयोरभेदः, उत भेदः आद्ये सिद्धान्त एवेति न पूर्वपक्षत्वमित्याह नोभयलक्षणत्वमिति, ब्रह्मण इति शेषः । द्वितीये चारितार्थ्यमाह भेद इति । शङ्कितो भेदः स्वनिराकरणाय नाधिकरणान्तरप्रयोजक इत्यर्थः ।

पं० १ ) । एवं हि तस्यावकाशः स्याद् यदि काश्चिदुपासनापरतया रूपमाचक्षीरन् काश्चि-न्नीरूपब्रह्मप्रतिपादनपरा भवेयुः । सर्वासां तु प्रविलयार्थत्वेन नीरूपब्रह्मप्रतिपादनार्थत्वे उक्तो-पनिगमनहेतुर्न स्यादित्यर्थः । **एकविनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्य-वदित्यधिकाराभिप्रायम्**(१) । अनुबन्धभेदात्तु(२) भिन्नो ऽनयोरपि नियोग इति । **"कोऽयं प्रपञ्चप्रविलय"** इति । वास्तवस्य वा प्रपञ्चस्य प्रविलयः सर्पिष इवाग्निसंयोगात् , समा-रोपितस्य वा रज्ज्वां सर्पभावस्येव रज्जुतत्त्वपरिज्ञानात् । न तावद्वास्तवः सर्वसाधारणः पृथिव्यादिप्रपञ्चः पुरुषमात्रेण शक्यः समुच्छेत्तुम् । अपि च प्रह्लादशुकादिभिः पुरुषधौरेयैः समूलमुन्मूलितः प्रपञ्च इति शून्यं जगद्भवेत् । न च वास्तवं तत्त्वज्ञानेन शक्यं समुच्छेत्तुम् , आरोपितरूपविरोधित्वात्तत्त्वज्ञानस्येत्युक्तम् । समारोपितरूपस्तु प्रपञ्चो ब्रह्मतत्त्वज्ञापनपरैरेव वाक्यैर्ब्रह्मतत्त्वमवबोधयद्भिः शक्यः समुच्छेत्तुमिति कृतमत्र विधिना । नहि विधिशतेनापि विना तत्त्वावबोधनम् प्रवर्तस्वात्मज्ञान इति वा कुरु प्रपञ्चप्रविलयं वेति प्रवर्तितः शक्नोति प्रपञ्चप्रविलयं कर्तुम् । न चास्यात्मज्ञानविधिं विना वेदान्तार्थब्रह्मतत्त्वावबोधो न भवति । मौलिकस्य स्वाध्यायाध्ययनविधेरेव विवक्षितार्थतया सकलस्य वेदराशेः फलवदर्थावबोधन-परतामापादयतो विद्यमानत्वादन्यथा कर्मविधिवाक्यान्यपि विध्यन्तरमपेक्षेरन्निति । (३)न च चिन्तासाक्षात्कारयोर्विधिरिति तत्त्वसमीक्षायामस्माभिरुपपादितम् । विस्तरेण चायमर्थस्तत्रै-व प्रपञ्चितः । तस्माज्जर्तिलयवाग्वा(४) जुहुयादितिवद् विधिसरूपा एते 'आत्मा वा अरे द्रष्टव्य' इत्यादयो न तु विधय इति । तदिदमुक्तं **द्रष्टव्यादिशब्दा अपि तत्त्वाभिमुखीकरण-प्रधाना न तत्त्वावबोधविधिप्रधाना** इति । अपि च ब्रह्मतत्त्वं निष्प्रपञ्चमुक्तं न तत्र नि-योज्यः कश्चित्सम्भवति । जीवो हि नियोज्यो भवेत् (५)स चेत् प्रपञ्चपक्षे वर्तते को नियोज्य-स्तस्योच्छिन्नत्वात् । अथ ब्रह्मपक्षे, तथाप्यनियोज्यो ब्रह्मणो ऽनियोज्यत्वात् । अथ ब्रह्मणो ऽनन्योऽप्यविद्यया ऽन्य इवेति नियोज्यः । तदयुक्तम् । ब्रह्मभावं पारमार्थिकमवगमयतागमेना-विद्याया निरस्तत्वात् । तस्मान्नियोज्याभावादपि न नियोगः । तदिदमुक्तं **"जीवो नाम**

---

(१) प्रयाजनियोगानामपि समिधो यजतीत्याद्याख्याताभिहितानां दर्शपूर्णमासनियोगाद्भेदाद्भूयस्त्वा-शङ्कानिमाशङ्क्याह अधिकाराभिप्रायमिति । अधिकारः परमापूर्वं तदेकमिति तदपेक्षयैकनियोगत्वमित्यर्थः ।

(२) नियोगावच्छेदकधात्वर्थभेदात्, स च प्रयाजादावाग्नेयादौ च द्रव्यदेवताभेदाद्भिन्न इत्यर्थः ।

(३) शब्दादेव शाब्दज्ञानसम्भवात्ध्याने विधिर्ध्याने साक्षात्कारे वा भवतु स इत्यत आह नचेति ।

(४) जर्तिलेति । अग्निहोत्रं प्रकृत्य 'जर्तिलयवाग्वा जुहुयाद्गवीधुकयवाग्वा जुहुयात्' इत्यादिकमधीतं पूर्वमीमांसायाम्, तत्र उक्तवाक्ये विधिरनाहुतिरिति प्रतिषेधः पयसेति विध्यन्तरमुत पयसेत्येव विधिरितर-स्तदर्थोऽर्थवाद इति संशये निन्दाया निषेधशेषत्वेन विधिशेषत्वायोगान्निषेधं परिकल्प्य विधिनिषेधसमावेशा-द्विकल्प इति पूर्वपक्षे राद्धान्तः—अनाहुतिरित्यतन्निषेधं प्रकल्पयेदयमयं स्वशेषित्वेन कल्पयेत्, कल्पयति चेदं पयसेति विधिं स्वशेषित्वेन, प्रबलत्वे चार्थवादः स्यात्, किञ्च कल्पितेऽपि प्रतिषेधे विकल्पः स्यात्—जर्तिल-गवेधुकयवाग्भ्यां होतव्यं न होतव्यमिति, तत्र प्रतिषेधकल्पनावैयर्थ्यम् ततः पयोहोमस्य प्रशस्ततरत्वार्थ-मनाहुतिवाक्येन जर्तिलगवीधुकहोमौ निन्द्येते तस्मादर्थवाद इति ।

(५) नियोज्यआकाशादिप्रपञ्चान्तर्भूतो ब्रह्मैव वा ब्रह्मण औपाधिकावच्छेदो वेति विकल्पान् क्रमेण निरस्यति स चेदित्यादिना । त्वया विज्ञाते ब्रह्मणि तज्ज्ञानेन प्रपञ्चप्रविलयः साध्य इति वक्तव्यम् , तदा च जन्मानन्तरमेव नियोज्यस्योच्छिन्नत्वान्नियोगासिद्धिरित्यर्थः ।

प्रपञ्चपक्षस्यैवे"ति ( पृ० ७३४ पं० १६ )। अपि च ज्ञानविधिपरत्वे तन्मात्रात्तु ज्ञानस्यानुत्पत्तेस्तत्त्वप्रतिपादनपरत्वमेवास्तु तस्यावश्याभ्युपगन्तव्यत्वेनोभयवादिसिद्धत्वात् । एवं च कृतं तत्त्वज्ञानविधिनेत्याह—"श्रेयाभिमुखस्यापी"ति ( पृ०७३५ पं०७ )। (१) न च ज्ञानाधाने प्रमाणानपेक्षस्यास्ति कश्चिदुपयोगो विधेरेवं हि तदुपयोगो भवेद्यद्यन्यथाकारं ज्ञानमन्यथादधीत। न च तच्छक्यं वापि युक्तमित्याह—"न च प्रमाणान्तरेणे"ति। किं चान्यन्नियोगनिष्ठतयैव च पर्यवस्यत्याम्नाये यदभ्युगतं भवद्भिः शास्त्रपर्यालोचनया ऽनियोज्यब्रह्मात्मत्वं जीवस्येति तदेतच्छास्त्रविरोधादप्रमाणरूपम्। अथैतच्छास्त्रमनियोज्यब्रह्मात्मत्वं च जीवस्य प्रतिपादयति जीवं च नियुक्तं ततो व्यर्थं च विरुद्धार्थं च स्यादित्याह—"अथे"ति ( पृ० ७३६ पं० १ )। दर्शपौर्णमासादिवाक्येषु जीवस्यानियोज्यस्यापि वस्तुतो ऽध्यस्तनियोज्यभावस्य नियोज्यता युक्ता, नहि तद्वाक्यं तस्य नियोज्यतामाह, अपि तु लौकिकप्रमाणसिद्धां नियोज्यतामाश्रित्य दर्शपूर्णमासौ विधत्ते। इदं तु नियोज्यतामपनयति च नियुङ्क्ते चेति दुर्घटमिति भावः। "नियोगपरतायां चे"ति। पौर्वापर्यालोचनया वेदान्तानां तत्त्वनिष्ठता श्रुता न श्रुता नियोगनिष्ठतेत्यर्थः। अपि च नियोगनिष्ठत्वे वाक्यस्य दर्शपौर्णमासकर्मण इवापूर्वावान्तरव्यापारादात्मज्ञानकर्मणोऽप्यपूर्वावान्तरव्यापारादेव स्वर्गादिफलवन्मोक्षस्यानन्दरूपफलस्य सिद्धिः। तथा चानित्यत्वं सातिशयत्वं स्वर्गवद्भवेदित्याह—"कर्मफलवदि"ति। "अपि च ब्रह्मवाक्येष्वि"ति। सप्रपञ्चनिष्प्रपञ्चोपदेशेषु हि (२) साध्यानुबन्धभेदादेकनियोगत्वमसिद्धं, दर्शपौर्णमासप्रयाजवाक्येषु तु यद्यप्यनुबन्धभेदस्तथाप्यधिकारांशस्य साध्यस्य भेदाभावादभेद इति ॥११॥२१॥

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥२२॥**

**तदव्यक्तमाह हि ॥ २३ ॥**

**अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥**

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥२५॥**

**अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥**

अधिकरणविषयमाह "द्वे वाव ब्रह्मणो रूपे" इति । ( पृ० ७६७ पं० ५ )। द्वे एव ब्रह्मणो रूपे ब्रह्मणः परमार्थतो ऽरूपस्याध्यारोपिते द्वे एव रूपे ताभ्यां हि तद्रूप्यते। ते दर्शयति—मूर्तं चैवामूर्तं च"। (३) समुच्चीयमानावधारणम्। अत्र(४) पृथिव्यसे-

( १ ) एवन्तत्त्वप्रतिपादनस्य ज्ञानोत्पत्तावश्यापेक्षणीयत्वमुक्त्वा विधौ तदभावमाह नचेति।

( २ ) साध्येति। मीमांसकमते साध्यभेदादनुबन्धभेदाच्च शास्त्रभेद इत्युक्तम्। तत्र साध्यमुत्पत्तिप्राप्तिसंस्कृतिविकृतिकरणोपकारकरणावान्तरव्यापाराधिकाररूपमुदाहरणान्येषान्तत्रैव द्रष्टव्यानि। सर्वेषां वेदामधिकारापूर्वं परमसाध्यं तेषां मते। साध्यश्च नियोगानां पिष्टं संयौतीत्यादिशास्त्राणां भेदस्तथा द्रव्यदेवतादिरूपभेदाद्धात्वर्थभेदस्ततश्च नियोगावच्छेदकधात्वर्थात्मकविषयभेद इति भावः।

( ३ ) समुच्चये सत्येवकारो विरुध्यते तन्मात्रावधारणस्य तदितरसमुच्चयस्य च विरोधादित्याशङ्क्याह समुच्चीयमानेति। यद्वा द्वे अपि रूपे मिलिते एवेत्यर्थ एवकार इत्यर्थः।

( ४ ) द्वे वाव ब्रह्मण इत्यारभ्य य्येव रस इत्यन्तश्रुतौ। मूर्छनं स्थूलता।

जाति त्रीणि भूतानि ब्रह्मणो रूपं मूर्तं मूर्छितावयवमितरेतरानुप्रविष्टावयवं कठिनमिति यावत्। तस्यैव विशेषणान्तराणि मर्त्यं मरणधर्मकं स्थितमव्यापि अवच्छिन्नमिति यावत्। सदन्येभ्यो विशिष्यमाणमसाधारणधर्मवदिति यावत्। गन्धस्नेहौष्ण्यानि चान्योन्यव्यवच्छेदहेतवोऽसाधारणधर्मास्तस्यैतस्य ब्रह्मरूपस्य तेजोबन्नस्य चतुर्विशेषणस्यैष रसः सारो य एष सविता तपति। अथामूर्तं वायुश्चान्तरिक्षं च तद्धि न कठिनमित्यमूर्तमेतदमृतममरणधर्मकं मूर्तं हि मूर्तान्तरेणाभिहन्यमानमवयवविश्लेषाद्ध्वंसते न तु तथाभावः सम्भवत्यमूर्तस्य। एतद्यदेति गच्छति व्याप्नोतीति एतत्त्यं नित्यपरोक्षमित्यर्थः। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एतस्मिन् सवितृमण्डले पुरुषः। करणात्मको हिरण्यगर्भप्राणाद्वयस्त्यस्य ह्येष रसः सारो नित्यपरोक्षता (१)च साम्यमित्याधिदैवतम्। अथाध्यात्ममिदमेव मूर्तं यदन्यत् प्राणान्तराकाशाभ्यां भूतत्रयं शरीरारम्भकमेतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रस इति। अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्याकाशः। एतदमृतमेतद्यदेतत्त्यन्तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेक्षन् पुरुषस्त्यस्यैष रसः। (२)लिङ्गस्य हि करणात्मकस्य हिरण्यगर्भस्य दक्षिणमक्ष्यधिष्ठानं श्रुतेरधिगतम्। तदेवं ब्रह्मण औपाधिकयोर्मूर्तामूर्तयोराध्यात्मिकाधिदैविकयोः कार्यकारणभावेन विभागो व्याख्यातः सत्यद्शब्दवाच्ययोः(३)। (४)अथेदानीं तस्य करणात्मनः पुरुषस्य लिङ्गस्य रूपं वक्तव्यम्। मूर्तामूर्तवासनाविज्ञानमयं विचित्रं मायामहेन्द्रजालोपमं तद्विचित्रैर्दृष्टान्तैरादर्शयति तद्यथा "माहारजन"मित्यादिना। (५)एतदुक्तं भवति—मूर्तामूर्तवासनाविज्ञानमयस्य विचित्रं रूपं लिङ्गस्येति। तदेवं निरवशेषं सवासनं सत्यरूपमुक्त्वा यत्सत्यस्य सत्यमुक्तं ब्रह्म तत्स्वरूपावधारणार्थमिदमारभ्यते। (६)यतः सत्यस्य रूपं निःशेषमुक्तमतोऽवशिष्टं सत्यस्य सत्यं तस्यानन्तरं तदुक्तिहेतुकं स्वरूपं वक्तव्यमित्याह—"अथात आदेशः"। कथनम्। सत्यसत्यस्य (७) परमात्मनस्तमाह—"नेतिनेति"। एतदर्थकथनार्थमिदमधिकरणम्। ननु किमेतावदेवादेश्यमुतैतः परमन्यदप्यस्तीत्यत आह—"नह्येतस्माद्ब्रह्मण" इति। नेत्यादिष्टादन्यत्परमस्ति यदादेश्यं भवेत्। तस्मादेतावदेवादेश्यं नापरमस्तीत्यर्थः। अत्रैवमर्थेनेतिना यत्संनिहितं परामृष्टं तन्निषिध्यते नञा सन्निहितं च मूर्तामूर्तं सवासनं रूपद्वयम्, तदवच्छे-

---

(१) अमूर्तभूतद्वयस्य हिरण्यगर्भस्य च रसरसिभावे सामान्यहेतुः श्रुतिगतत्यशब्देन विवक्षितस्तं दर्शयति नित्यपरोक्षतेति।

(२) ननु चैतन्यव्याप्तं लिङ्गशरीरं स्थूलशरीरमात्रे वर्तते तत्र कथं दक्षिणमक्ष्याधारत्वेनोक्तमत आह लिङ्गस्येति। करणात्मकस्येत्यनेन रूपाद्युपलब्धिभिः क्रियाभिः करणत्वेनानुमीयत इत्यनुमानप्रकारो दर्शितः। (३) सदिति त्यमिति च शब्दवाच्ययोरित्यर्थः।

(४) एवं प्रतिषेध्ये मूर्तामूर्ते प्रदर्श्य वासनामयं निषेध्यं रूपं दर्शयति अथेदानीमिति। मूर्तामूर्तविषयानुभवजनितवासनाजन्याविज्ञानविषय इत्यर्थः।

(५) नन्वनुद्भूतरूपलिङ्गशरीरस्य कथं हारिद्रादिरूपतुल्यरूपसम्भव इत्यत आह एतदुक्तं भवतीति।

(६) अथात आदेश इत्यथातःशब्दार्थमाह यत इति तदुक्तिहेतुकमित्यन्तेन। मध्येऽथशब्दार्थमाह तस्यानन्तरमिति। (७) व्यावहारिकसत्यस्य प्रपञ्चस्य यः सत्य आत्मा तस्य।

दकत्वेन (१) च ब्रह्म । तत्रेदं विचार्यते—किं रूपद्वयं सवासनं ब्रह्म च सर्वमेव च प्रतिषिध्यते, उत ब्रह्मैवाथ सवासनं रूपद्वयं ब्रह्म तु परिशिष्यत इति । (२) यद्यपि तेषुतेषु वेदान्तप्रदेशेषु ब्रह्मस्वरूपं प्रतिपादितं तदसद्भावज्ञानं च निन्दितम् । अस्तीत्येवोपलब्धव्य इति चास्य सत्त्वमवधारितं, तथापि सद्रूपरूपं तद्ब्रह्म सवासनमूर्तामूर्तरूपसाधारणतया च सामान्यं तस्य चैते विशेषा मूर्तामूर्तादयो, न च तत्तद्विशेषनिषेधे सामान्यमवस्थातुमर्हति निर्विशेषस्य सामान्यस्यायोगात्, यथाहुः—

निर्विशेषं न सामान्यं भवेच्छशविषाणवत् । इति ॥

तस्मात्तद्विशेषनिषेधेपि तत्सामान्यस्य ब्रह्मणोऽनवस्थानात्सर्वस्यैवायं निषेधः, अत एव नह्येतस्मादिति नेत्यन्यत्परमस्तीति निषेधात्परं नास्तीति सर्वनिषेधमेव तत्त्वमाह श्रुतिः । अस्तीत्येवोपलब्धव्य इति चोपासनाविधानव(३)शेयं, न त्वस्तित्वमेवास्य तत्त्वम् । तत्प्रशंसार्थं चासद्भावज्ञाननिन्दा । यच्चान्यत्र ब्रह्मस्वरूपप्रतिपादनं तदपि मूर्तामूर्तरूपप्रतिपादनवन्निषेधार्थमसन्निहितोऽपि च तत्र निषेधो योग्यत्वात् संभन्त्स्यते (४) । यथाहुः—

येन यस्याभिसंबन्धो दूरस्थस्यापि तेन सः । इति ।

तस्मात्सर्वस्यैवाविशेषेण निषेध इति प्रथमः पक्षः । (५) अथ वा पृथिव्यादिप्रमाणसिद्धत्वाद्ब्रह्मणस्तु वाङ्मनसागोचरतया सकलप्रमाणविरहात् कतरस्यास्तु निषेध इति विशये, प्रपञ्चप्रतिषेधे समस्तप्रत्यक्षादिव्याकोपप्रसङ्गाद् ब्रह्मप्रतिषेधे त्वव्याकोपाद्ब्रह्मैव प्रतिषेधेन संबध्यते योग्यत्वान्न प्रपञ्चस्तद्वैपरीत्याद्वीप्सा तु तदत्यन्ताभावसूचनायेति मध्यमः पक्षः । तत्र प्रथमं पक्षं निराकरोति—"न तावदुभयप्रतिषेध उपपद्यते शून्यवादप्रसङ्गादि"ति । ( पृ० ७३८ पं० ७ ) अयमभिसंधिः । (६) उपाधयो अमी पृथिव्यादयोऽविद्याकल्पिता न तु शोणकर्कादय इव विशेषो ब्रह्मत्वस्य । न चोपाधिविगमे उपहितस्याभावो ऽप्रतीतिर्वा(७) नह्युपाधीनां दर्पणमणिकृपाणादीनामपगमे मुखस्याभावोऽप्रतीतिर्वा । तस्मादुपाधिनिषेधेपि नोपहितस्य शशविषाणायमानता ऽप्रत्ययो वा । न चेतीति सविशेषाविशेषात्सर्वस्य प्रतिषेध्यत्वमिति युक्तम् । न हि भावमनुपाश्रित्य प्रतिषेध उपपद्यते, किंचिद्धि कश्चिन्निषिध्यते नह्यनाश्रयः प्रतिषेधः शक्यः प्रतिपत्तुं, तदिदमुक्तमपरिशिष्यमाणे चान्यस्मिन् य इतरः प्रतिषेद्धुमारभ्यते तस्य प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः । मध्यमं पक्षं प्रतिक्षिपति—नापि ब्रह्मनिषेध

(१) कस्य रूपद्वयमित्यपेक्षायां ब्रह्मण इत्येवंरूपेण विशेषणत्वेन ।

(२) ब्रह्मप्रतिषेधेन पूर्वपक्षस्यानुत्थानमाशंक्याह यद्यपीति ।

(३) यथा नाम ब्रह्मेत्युपासीतेत्यादावब्रह्माणि ब्रह्मत्वेनोपासना विधीयते, एवमसत्येवास्तीत्युपलब्धिर्विधीयते इति शशशिरस्कत्वाविशेषादित्यर्थः । (४) संबद्धो भविष्यति ।

(५) धर्म्यनाश्रये निषेधासम्भवात्पक्षान्तरमाहाथवेति ।

(६) ननु विशेषाणां निषेधे सामान्यस्याप्ययोगाच्छून्यवादप्रसङ्ग इत्याशंक्य सामान्यविशेषभावो ब्रह्मणोऽसिद्ध इत्याहोपाधय इति । शोणो लोहितः, कर्क ईषल्लोहितः ।

(७) निर्विशेषं सामान्यं न भवेदित्युक्तं, तत्र निषेधेन निषेध्यपक्ष। निषिध्यते सा किमर्थस्वभावप्रतीत प्रमाणसम्बन्धात्मिका, द्वावपि पक्षौ नेत्याहाभावोऽप्रतीतिर्वेति ।

उपपद्यते । युक्तं यत्संसर्गिकाविद्याप्राप्तः प्रपञ्चः प्रतिषिध्यते प्राप्तिपूर्वकत्वात्प्रतिषेधस्य । ब्रह्म तु नाविद्यासिद्धं नापि प्रमाणान्तरात्, तस्माच्छब्देन प्राप्तं प्रतिषेधनीयं, तथा च यस्तस्य शब्दः प्रापकः स तत्पर इति स ब्रह्मणि प्रमाणमिति कथमस्य निषेधोपि प्रमाणवान् । (१) न च पर्युदासाधिकरणपूर्वपक्षन्यायेन विकल्पो, वस्तुनि सिद्धस्वभावे तदनुपपत्तेः । न चावाङ्मनसगोचरो बुद्ध्यालेखितुं शक्यः । अशक्यश्च कथं निषिध्यते । प्रपञ्चस्त्वनाद्यविद्यासिद्धोऽनूद्य ब्रह्मणि प्रतिषिध्यते इति युक्तम् । तदिमामनुपपत्तिमभिप्रेत्योक्तं नापि ब्रह्मप्रतिषेध उपपद्यते इति । हेत्वन्तरमाह—"ब्रह्म ते ब्रवाणी"ति । "उपक्रमविरोधादि"ति । उपक्रमपरामर्शोपसंहारपर्यालोचनया हि वेदान्तानां सर्वेषामेव ब्रह्मपरत्वमुपपादितं प्रथमेऽध्याये । न चासत्यामाकाङ्क्षायां दूरतरस्थेन प्रतिषेधेनैषां संबन्धः संभवति । यच्च वाङ्मनसातीततया ब्रह्मणस्तत्प्रतिषेधस्य न प्रमाणान्तरविरोध इति तत्राह "वाङ्मनसातीतत्वमपी"ति ( पृ० ७३९ पं २ ) प्रतिपादयन्ति वेदान्ता महता प्रयत्नेन ब्रह्म । न च निषेधाय तत्प्रतिपादनम् अनुपपत्तेरित्युक्तमधस्तात् । इदानीं तु निष्प्रयोजनमित्युक्तं प्रक्षालनाद्धि पङ्कस्येति न्यायात् । तस्माद्वेदान्तवाचा मनसि सन्निधानाद्ब्रह्मणो वाङ्मनसातीतत्वं नाञ्जसमपि तु प्रतिपादनप्रक्रियोपक्रम(२)एषः । यथा गवादयो विषयाः साक्षाच्छब्दग्राहिकया प्रतिपाद्यन्ते प्रतीयन्ते च नैवं ब्रह्म । यथाहुः—

भेदप्रपञ्चविलयद्वारेण च निरूपणमिति ।

ननु प्रकृतप्रतिषेधे ब्रह्मणोपि कस्मान्न प्रतिषेध इत्यत आह "तद्धि प्रकृतं प्रपञ्चितं चे"ति । प्रधानं प्रकृतं प्रपञ्चश्च प्रधानं न ब्रह्म तस्य षष्ठ्यन्ततया प्रपञ्चावच्छेदकत्वेनाप्रधानत्वादित्यर्थः । "ततोऽन्यद्ब्रवीती"ति । नेति नेतीति प्रतिषेधादन्यद् भूयो ब्रवीतीति । तन्निर्वचनम् । नह्येतस्मादित्यस्य यदा नह्येतस्मादिति नेति नेत्यादिष्टाद्ब्रह्मणोऽन्यत्परमस्तीति व्याख्यानं तदा प्रपञ्चप्रतिषेधादन्यद्ब्रह्मैव ब्रवीतीति व्याख्येयम् । यदा तु नह्येतस्मादिति सर्वनाम्ना प्रतिषेधो ब्रह्मण आदेशः परामृश्यते तदापि प्रपञ्चप्रतिषेधमात्रं न प्रतिपत्तव्यमपि तु तेन प्रतिषेधेन भावरूपं ब्रह्मोपलक्ष्यते, कस्मादित्यत आह—"ततो ब्रवीति च भूय" इति । यस्मात्प्रतिषेधस्य परस्तादपि ब्रवीति । अथ ब्रह्मणो नामधेयं नाम सत्यस्य सत्यमिति तद्व्याचष्टे श्रुतिः 'प्राणा वै सत्यमि'ति । (३) माहारजनाद्युपमितं लिङ्गमुपलक्षयति । तत्खलु सत्यमितरापेक्षया (४) तस्यापि परं सत्यं ब्रह्म । तदेवं यतः प्रतिषेधस्य परस्ताद्ब्रवीति तस्मान्न प्रपञ्चप्रतिषेधमात्रं ब्रह्मापि तु भावरूपमिति । तदेवं पूर्व-

---

( १ ) ननु शास्त्रप्रमितेऽपि प्रतिषेधः प्रमाणवान् भवेत विधिप्रतिषेधयोस्तुल्यबलत्वेन विकल्पसम्भवादित्याशंक्याह न चेति । तृतीयाध्यायस्थतृतीयपादे वक्ष्यमाणे पर्युदासाधिकरणे यथा विधिप्राप्तस्य यागेषु ये यजामहकरणस्य सर्वात्मना नानुयाजेष्विति प्रतिषेधेन वारयितुमशक्यत्वादनुयाजेषु ये यजामहविकल्पः एवमिह न वस्तुनि तदभावात्, पुरुषप्रवृत्तिनिवृत्त्योः प्रागेव तस्यैकरूपत्वेन सिद्धत्वादित्यर्थः ।

( २ ) प्रक्रियाशब्दार्थमाहोपक्रम इति । वाङ्मनसगोचरत्वे निषिद्धे तथैव मनसि स्थिरीकृते स्वयंज्योतिरात्मा स्फुरतीत्युपक्रमत्वम् ।

( ३ ) स्थूलशरीरापेक्षया प्राणप्रधानस्य लिङ्गशरीरस्य स्थायित्वात् सत्यत्वमुच्यत इत्याह माहारजनादीति । माहारजनादीनि रूपाण्युपहितानि निचितानि यस्मिंस्तत्तथोक्तम् । ( ४ ) स्थूलशरीरापेक्षया ।

स्मिन् व्याख्याने निर्वचनं ब्रवीतीति व्याख्यातम्। अस्मिंस्तु सत्यस्य सत्यमिति ब्रवीतीति व्याख्येयम्। शेषमतिरोहितार्थम् ॥ २२-२६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

अनेनाहिरूपेणाभेदः कुण्डलादिरूपेण तु भेद इत्युक्तं तेन (१) विषयभेदाद्भेदाभेदयोरविरोध इत्येकविषयत्वेन वा सर्वदोपलब्धेरविरोधः। विरुद्धमिति हि नः क्व संप्रत्ययो न यत्प्रमाणेनोपलभ्यते। आगमतश्च प्रमाणादेकगोचरावपि भेदाभेदौ प्रतीयमानौ न विरोधमावहतः सवितृप्रकाशयोरिव प्रत्यक्षात्प्रमाणाद्भेदाभेदाविति ॥ २७ ॥

प्रकारान्तरेण भेदाभेदयोरविरोधमाह—

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

तदेवं परमतमुपन्यस्य स्वमतमाह—

## पूर्ववद्वा ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३० ॥

अयमभिसंधिः। (२) यस्य मतं वस्तुनोऽहित्वेनाभेदः कुण्डलत्वेन भेद इति। स एवं ब्रुवाणः प्रष्टव्यो जायते—किमहित्वकुण्डलत्वे वस्तुनो भिन्ने उताभिन्ने इति। यदि भिन्ने, अहित्वकुण्डलत्वे भिन्ने इति वक्तव्यं न तु वस्तुनस्ताभ्यां भेदाभेदौ, नह्यन्यभेदाभेदाभ्यामन्यद्भिन्नमभिन्नं वा भवितुमर्हति, अतिप्रसङ्गात्। अथ वस्तुनो न भिद्येते अहित्वकुण्डलत्वे, तथा सति को भेदाभेदयोर्विषयभेदस्तयोर्वस्तुनोऽनन्यत्वेनाभेदात्। (३) न चैकविषयत्वेऽपि सदानुभूयमानत्वाद्भेदाभेदयोरविरोधः, स्वरूपविरुद्धयोरप्यविरोधे क्व नाम विरोधो व्यवतिष्ठेत। न च सदानुभूयमानं विचारासहं भाविकं भवितुमर्हति, देहात्मभावस्यापि सर्वदानुभूयमानस्य भाविकत्वप्रसङ्गात्। प्रपञ्चितं चैतदस्माभिः प्रथमसूत्र इति नेह प्रपञ्चितम्। तस्मादनाद्यविद्याविक्रीडितमेवैकस्यात्मनो जीवभावभेदो न भाविकस्तथा च तत्त्वज्ञानादविद्यानिवृत्तावपवर्गसिद्धिः। तात्त्विकत्वे त्वस्य न ज्ञानान्निवृत्तिसंभवः। न च तत्त्वज्ञानादन्यदपवर्गसाधनमस्ति। यथाह श्रुतिः—'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति। शेषमतिरोहितार्थम् ॥ २९-३० ॥

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

यद्यपि श्रुतिप्राचुर्याद्ब्रह्मव्यतिरिक्तं तत्त्वं नास्तीत्यवधारितं तथापि सेत्वादिश्रुतीनामापाततस्तद्विरोधदर्शनात् तत्प्रतिसमाधानार्थमयमारम्भः। "जाङ्गलं" (पृ० ७४५ पं० १०)

---

(१) अहिकुण्डलसूत्रस्य प्रकाशाश्रयवद्वेति (३-२-२८) सूत्रस्य च भेदाभेदविषयत्वसाम्यात्पौनरुक्त्यमाशंक्याह विषयभेदादिति। अत्राहेरेकत्वेन कुण्डलादीनां मिथो भेदात् भेदाभेदौ भिन्नविषयौ, तत्र तु सवितरि प्रकाशगुणस्य द्रव्यस्य च मिथो भेदाभेदौ न वस्त्वन्तरापेक्षयेत्येकविषयत्वमेकविषयत्वे हेतुः सर्वदेति। विरोधे हि विषयव्यवस्था सदानुभूयमानत्वादविरोध इत्येकविषयत्वमित्यर्थः।

(२) यन्मते भेदाभेदौ भिन्नविषयौ तन्मतं दूषयन्नाह यस्येति।

(३) प्रकाशाश्रयवद्भेदाभेदौ निषेधति नचेति।

स्थलम् । प्रका(१)शवदनन्तवज्ज्योतिष्मदायतनवदिति पादा ब्रह्मणश्चत्वारस्तेषां पादानामर्द्धान्यष्टौ शफाः, तेष्टावस्य ब्रह्मण इत्यष्टशफं ब्रह्म । षोडश कला अस्येति षोडशकलम् । तद्यथा प्राचीप्रतीचीदक्षिणोदीचीति चतस्रः कला अवयवा इव कलाः स प्रकाशवान्नाम प्रथमः पादः । (२) एतदुपासनायां प्रकाशवान् मुख्यो भवतीति प्रकाशवान् पादः । अथापराः पृथिव्यन्तरिक्षं द्यौः समुद्र इति चतस्रः कला एष द्वितीयः पादो ऽनन्तवान्नाम । सोऽयमनन्तवत्त्वेन गुणेनोपास्यमानोऽनन्तत्वमुपासकस्यावहतीति अनन्तवान्पादः । अथाग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलाः स ज्योतिष्मान्नाम पादस्तृतीयस्तदुपासनाज्ज्योतिष्मान् भवतीति ज्योतिष्मान् पादः । अथ प्राणश्चक्षुः श्रोत्रं वागिति चतस्रः कलाश्चतुर्थः पादः आयतनवान्नामैते घ्राणादयो हि गन्धादिविषया मन आयतनमाश्रित्य भोगसाधनं भवन्तीत्यायतनवान्नाम पादः । तदेवं चतुष्पाद्ब्रह्माष्टशफं षोडशकलमुन्मिषितं श्रुत्या । अतस्ततो ब्रह्मणः परमन्यदस्ति । (३)स्यादेतत् , अस्ति चेत्परिसंख्यायोच्यतामेतावदित्यत आह "मितमस्तीति" ( पृ० ७४६ पं० १ ) प्रमाणसिद्धम् । न त्वेतावदित्यर्थः । भेदव्यपदेशश्च त्रिःप्रकारः-आधारतश्चातिदेशतश्चावधितश्च ॥ ३१॥

## सामान्यात्तु ॥ ३२ ॥

जगतस्तन्मर्यादानां (४) च विधारकत्वं च सेतुसामान्यम् । यथा हि तन्तवः पटं विधारयन्ति तदुपादानत्वादेवं ब्रह्मापि जगद्विधारयति तदुपपादकत्वात् । तन्मर्यादानां च विधारकं ब्रह्म इतरथाऽतिचपलस्थूलवलवत्कल्लोलमालाकलिलो जलनिधिरिलापरिमण्डलमवगिलेत्(५) वडवानलो वा विस्फूर्जितज्वालाजटिलो जगद्भस्मसाद्भावयेत् , पवनः प्रचण्डो वा ऽकाण्डमेव (६)ब्रह्माण्डं विघटयेदिति । तथा च श्रुतिः 'भीषास्माद्वातः पवते' इत्यादिका ॥ ३२ ॥

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

मनसो(७) ब्रह्मप्रतीकस्य समारोपितब्रह्मभावस्य वाग्घ्राणचक्षुः श्रोत्रमिति चत्वारः पादाः । (८)मनो हि वक्तव्यघ्रातव्यश्रोतव्यान् गोचरान् वागादिभिः संचरतीति संचरणसाधारणतया मनसः पादास्तदिदमध्यात्मम् । (९)आकाशस्य ब्रह्मप्रतीकस्याग्निर्वायुरादित्यो दिश इति चत्वारः पादाः । ते हि व्यापिनो नभस उदर इव गोः पादा विलग्ना उपलक्ष्यन्त इति पादाः । तदिदमधिदैवतम् । तदनेन पादवदिति वैदिकं निदर्शनं व्याख्याय लौकिकं चेदं निदर्शनमित्याह—"अथ वा पादवदिति" ( पृ० ७४७ पं० १५ ) । "तद्वदि"ति इहापि मन्दबुद्धीनामाध्यानव्यवहारायेत्यर्थः ॥ ३३ ॥

---

(१) उन्मानव्यपदेशविवरणार्थं ब्रह्म चतुष्पादित्यादि भाष्यं, तच्छान्दोग्यश्रुत्युक्तषोडशकलाविद्यासम्बन्धिपादशब्दोदाहरणेन व्याचष्टे प्रकाशवदित्यादिना ।

(२) पादस्य प्रकाशवत्त्वसमाख्यायां हेतुमाहैतदिति ।

(३) अतः परमन्यदस्तीति भाष्यम् , तदयुक्तमन्यत्वे सत्यमितत्वानुपपत्तेः, अत उचितशङ्कां कृत्वाऽवतारयति स्यादेतदस्ति चेदिति ।

(४) न केवलं जगत उपादानत्वेन धारकं ब्रह्म किन्तु नियन्तृत्वेनापीत्याह तन्मर्यादानां चेति ।

(५) ग्रसेत् । यदि ब्रह्म भुवं न धारयेदित्यर्थः । (६) अनवसरे एव ।

(७) पादवदिति सूत्रावयवव्याख्यानभाष्यं 'यथा मन' इत्यादिकं व्याचष्टे मनस इत्यादिना ।

(८) वागादीनां मनःपादत्वे हेतुमाह मनो हीति ।

(९) एवमाध्यात्मिकं मनश्चतुष्पाद्व्याख्यायाधिदैविकाकाशं चतुष्पादं व्याचष्टे आकाशस्येत्यादिना ।

## स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य जाग्रत्स्वप्नयोर्विशेषविज्ञानस्योपाध्युपशमेऽभिभवे सुषुप्तावस्थानमिति । कथाभेदव्यपदेशोऽपि त्रिविधो ब्रह्मण उपाधिभेदापेक्षयेति । यथा सौधजालमार्गनिवेशिन्यः सवितृभासो जालमार्गोपाधिभेदाद्भिन्ना भासन्ते तद्विगमे तु गभस्तिमण्डलेनैकीभवन्त्यतस्तेन सम्बध्यन्त इव एवमिहापीति ॥ ३४ ॥

स्यादेतत् , एकीभावः कस्मादिह सम्बन्धः कथंचिद्व्याख्यायते न मुख्य एवेत्येतत्सूत्रेण परिहरति—

## उपपत्तेश्च ॥ ३५ ॥

स्वमपीत इति हि स्वरूपसम्बन्धं ब्रूते । (१)स्वभावच्छेदनेन सम्बन्धत्वेन स्पृष्टस्ततः स्वाभाविकस्तादात्म्यान्नातिरिच्यत इति तर्कपाद उपपादितमित्यर्थः । तथा भेदोपि त्रिविधो नान्यादृशः स्वाभाविक इत्यर्थः ॥ ३५ ॥

## तथान्यप्रतिषेधात् ॥ ३६ ॥

सुगमेन भाष्येण व्याख्यातम् ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

ब्रह्माद्वैतसिद्धावपि न सर्वगतत्वं सर्वव्यापिता सर्वस्य ब्रह्मणा स्वरूपेण रूपवत्त्वं सिद्ध्यतीत्यत आह—"**अनेन सेत्वादिनिराकरणेन**" ( पृ० ७४९ पं० ११ ) । परहेतुनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च स्वसाधनोपन्यासेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति । (२)अद्वैते सिद्धे सर्वोऽयमनिर्वचनीयः प्रपञ्चावभासो ब्रह्माधिष्ठान इति सर्वस्य ब्रह्मसम्बन्धाद्ब्रह्म सर्वगतमिति सिद्धम् ॥ ३७ ॥

## फलमत उपपत्तेः ॥ ३८ ॥

सिद्धान्तोपक्रममिदमधिकरणम् । स्यादेतत् , नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः कुत ईश्वरत्वं कुतश्च फलहेतुत्वमपीत्यत आह—"**तस्यैव ब्रह्मणो व्यावहारिक्या**"मिति ( पृ० ७५० पं० ५ ) । नास्य पारमार्थिकं रूपमाश्रित्यैतच्चिन्त्यते किन्तु सांव्यवहारिकमेतच्च तपसा चीयते ब्रह्मेति व्याचक्षाणैरस्माभिरुपपादितम् । (३)इष्टं फलं स्वर्गः । यथाहुः—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥ इति ।

अनिष्टमवीच्यादिस्थानभोग्यं, व्यामिश्रं मनुष्यभोग्यम् । तत्र तावत्प्रतिपाद्यते । फलमत ईश्वरात्कर्मभिराराधिताद्भ(४)वितुमर्हति । अथ कर्मण एव फलं कस्मान्न भवतीत्यत आह— "**कर्मणस्त्वनक्षविनाशिनः प्रत्यक्षविनाशिन**" इति । चोदयति—"**स्यादेतत् कर्म विनश्य**"दिति । (५)उपात्तमपि फलं भोक्तुमयोग्यत्वाद्वा कर्मान्तरप्रतिबन्धाद्वा न भुज्य-

---

( १ ) ननु स्वरूपसम्बन्धः समवायोपि सम्भवति कथं जीवस्य ब्रह्मतादात्म्यसिद्धिरत आह स्वभावच्छेदिति । समवायस्तर्कपादे निरस्त इत्यर्थः ।

( २ ) न पारमार्थिकं सर्वगतत्वं किन्तु प्रपञ्चेन मिथ्यातादात्म्यमित्याहाद्वैत इति ।

( ३ ) भाष्यस्थमिष्टपदं व्याचष्टे इष्टमिति । ( ४ ) अनेनेश्वरे वैषम्यनैर्घृण्यप्रसक्तो निरस्तः ।

( ५ ) यदि कर्म स्वानन्तरकालमारभेत, तर्ह्युपलभ्येतेत्याशंक्याह उपात्तमपीति ।

त इत्यर्थः । परिहरति—"तदपि न परिशुध्यती"ति । नहि स्वर्गं आत्मानं लभतामि-त्यधिकारिणः कामयन्ते किन्तु भोग्योऽस्माकं भवत्विति । तेन यादृशमेभिः काम्यते तादृशस्य फलत्वमिति भोग्यत्वमेव स्वफलमिति । न च तादृशं कर्मान्तरमिति कथं फलं स्वरूपेण, अपि च स्वर्गनरकौ तीव्रतमे सुखःदुखे इति तद्विषयेणानुभवेन भोगापरनाम्नावश्यं भवितव्यम् । तस्मादनुभवयोग्ये अननुभूयमाने शशशृङ्गवद्स्त इति निश्चीयते । चोदयति—"अथोच्यते मा भूत्कर्मानन्तरं फलोत्पादः कर्मकार्यादपूर्वाद्भवे"दिति ( पृ० ७५१ पं० १ ) । परिहरति—"तदपि ने"ति । यद्यदचेतनं तत्तत्सर्वं चेतनाधिष्ठितं प्रवर्तते इति प्रत्यक्षागमाभ्या(१)मवधारितम् । तस्मादपूर्वेणाप्यचेतनेन चेतनाधिष्ठितेनैव प्रवर्तितव्यं नान्यथेत्यर्थः । न चापूर्वं प्रामाणिकमपीत्याह—"तदस्ति त्वे" इति ॥३८॥

## श्रुतत्वाच्च ॥ ३९ ॥

"अन्नादो"ऽन्नप्रदः ॥ ३९ ॥

सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति—

## धर्मं जैमिनिरत एव ॥ ४० ॥

श्रुतिमाह—"श्रूयते ताव"दिति । (२)ननु 'स्वर्गकामो यजेते'त्यादयः श्रुतयः फलं प्रति न साधनतया यागं विदधति । यथा हि—यदि यागादय एव क्रिया न तदतिरिक्ता भावना तथापि त एव स्वपदेभ्यः (३)पूर्वापरीभूताः साध्यस्वभावा अवगम्यन्त इति न साध्यान्तरमपेक्षन्ते इति न स्वर्गेण साध्यान्तरेण सम्बन्धुमर्हन्ति । अथापि तदतिरेकिणी भावनास्ति (४)तथाप्यसौ भाव्यापेक्षापि स्वपदोपात्तं पूर्वावगतं च भाव्यं धात्वर्थमपहाय न भिन्नपदोपात्तं पुरुषविशेषणं च स्वर्गादि भाव्यतया स्वीकर्तुमर्हति । न चैकस्मिन्वाक्ये साध्यद्वयसंबन्धसंभवः, वाक्यभेदप्रसङ्गात् । न केवलं शब्दतो वस्तुतश्च पुरुषप्रयत्नस्य भावनायाः साक्षाद्धात्वर्थ एव साध्यो न तु स्वर्गादिस्तस्य तदव्याप्यत्वात् । स्वर्गादेस्तु नामपदाभिधेयतया सिद्धरूपस्याख्यातवाच्यं साध्यं धात्वर्थं प्रति भूतं भव्यायोपादिश्यत इति न्यायात्साधनतया गुणत्वेनाभिसंबन्धः । तथा च पारमर्षं सूत्रम्—'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्ध' इति । (५)तथा च कर्मणो यागादेर्दुःखत्वेन पुरुषेणासमीहितत्वात् समीहितस्य च स्वर्गादे-

---

( १ ) यः सर्वाणि भूतान्यन्तरो गमयतीत्यागमोऽत्र ग्राह्यः ।

( २ ) अत्र भाष्यकारः कर्मण एव फलमिति पूर्वपक्षघटनाय स्वर्गकामाधिकरणसिद्धान्तं सङ्क्षिपेतन्निवर्त्याशङ्कां दर्शयंस्तदधिकरणपूर्वपक्षमाह नन्विति ।

( ३ ) यागादीनामेव क्रियात्वे तेषां धातुभिरेव प्रतीतेः प्रत्ययपौनरुक्त्यमाशंक्याह पूर्वेति । यजेतेत्यत्र हि यजिना प्रकृत्या याग एव हि प्रतीयते, प्रत्ययसहितेन तु तेन स एव पूर्वापरीभूतो नानाक्षणव्यासक्तोऽभिधीयते । तत्र लिङादिषु विशेषमाह साध्यस्वभावा इति ।

( ४ ) तथापीति । प्रत्ययार्थभूता भावना धात्वर्थभिन्ना यद्यपि स्वभिन्नं भाव्यमाकाङ्क्षते, तथापि धात्वर्थ एवास्या भाव्यः तस्य यजेतेत्येकपदश्रुत्या साध्यत्वप्रतीतेः, अत एव च पूर्वावगतेन स्वर्गः तस्य भिन्नपदोपात्तस्य वाक्येन साध्यत्वस्य प्रत्येतव्यत्वात् वाक्यस्य च लिङ्गश्रुतिकल्पनापेक्षस्य चरमभावित्वात् ,किञ्च पुरुषविशेषणस्वर्गस्य न यागेन सम्बन्धः, उपसर्जनपदान्तरेणासम्बन्धादित्यर्थः ।

( ५ ) यदि न यागादेः स्वर्गादिसाधनता कथन्तर्हि पुरुषप्रवृत्तिरप्रवर्तमानेषु च तेषु कथं शास्त्रप्रामाण्यमत आह तथाचेति ।

रसाध्यत्वाच्च यागादयः पुरुषस्योपकुर्वन्त्यनुपकारिणो चैषां न पुरुष ईष्टे 'अनीशानश्च न तेषु संभवत्यधिकारी'त्यधिकाराभावप्रतिपादितानर्थक्यपरिहाराय कृत्स्नस्यैवाम्नायस्य निर्मृष्टनिखिलदुःखानुषङ्गनित्यसुखमयब्रह्मज्ञानपरत्वं भेदप्रपञ्चविलयनद्वारेण । तथा हि—सर्वत्रैवाम्नाये क्वचित्कस्यचिद्भेदस्य प्रविलयो गम्यते यथा स्वर्गकामो यजेतेति शरीरात्मभावप्रविलयः । इह खल्वापाततो देहातिरिक्त आमुष्मिकफलोपभोगसमर्थोऽधिकारी गम्यते । तत्राधिकारस्योक्तेन क्रमेण निराकरणाद् (१)असतोऽपि प्रतीयमानस्य विचारासहस्योपायतामात्रेणावस्थानादनेन वाक्येन देहात्मभावप्रविलयस्तत्परेण क्रियते । (२)गोदोहनेन पशुकामस्य प्रणयेदित्यत्राप्यापाततोऽधिकृताधिकारावगमादधिकारिभेदप्रविलयः । निषेधवाक्यानि च साक्षादेव प्रवृत्तिनिषेधेन, विधिवाक्यानि चान्यानि 'सांग्रहण्या यजेत ग्रामकाम' इत्यादीनि न सांग्रहण्यादिप्रवृत्तिपराण्यपि तूपायान्तरोपदेशेन सेवादिदृष्टोपायप्रतिषेधार्थानि, (३)यथा विषं भुङ्क्ष्व मा ऽस्य गृहे भुङ्क्ष्व इति । तथा च रागाद्याक्षिप्तप्रवृत्तिप्रतिषेधेन शास्त्रस्य शास्त्रत्वमप्युपपद्यते रागनिबन्धना तूपायोपदेशद्वारेण प्रवृत्तिमनुजानतो रागसंवर्द्धनादशास्त्रत्वप्रसङ्गः । तन्निषेधेन तु ब्रह्मणि प्रणिधानमादधत् शास्त्रं शास्त्रं भवेत् । तस्मात्कर्मफलसंबन्धस्याप्रामाणिकत्वादनादिविचित्राविद्यासहकारिण ईश्वरादेव कर्मानपेक्षाद्विचित्रफलोत्पत्तिरिति । कथं तर्हि विधिः ? किमत्र कथंप्रवर्तनामात्रत्वाद्विधेस्तस्य चाधिकारमन्तरेणाप्युपपत्तेः, नहि यो यः प्रवर्तयति स सर्वोऽधिकृतमपेक्षते । पवनादेः प्रवर्तकस्य तदनपेक्षत्वादिति शङ्कामपाचिकीर्षुराह "**तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते । अन्यथा ह्यननुष्ठातृको याग आपद्येत**" । अयमभिसंधिः—(४)उपदेशो हि विधिः, यथोक्तं तस्य ज्ञानमुपदेश इति । उपदेशश्च नियोज्यप्रयोजने कर्मणि लोकशास्त्रयोः प्रसिद्धः, तद्यथाऽऽरोग्यकामो जीर्णे भुञ्जीत । एष सुपन्था गच्छतु भवाननेनेति । न त्वाज्ञादिरिव नियोक्तृप्रयोजन(५)स्तत्राभिप्रायस्य प्रवर्तकत्वात् तस्य चापौरुषेयेऽसंभवात् । अस्य चोपदेशस्य नियोज्यप्रयोजनव्यापारविषयत्वमनुष्ठात्रपेक्षितानुकूलव्यापारगोचरत्वमस्माभिरुपपादितं न्यायकणिकायाम्(६) । तथा च स्वर्गकामो यजेतेत्यादिषु स्वर्गकामादेः समीहितोपाया गम्यन्ते यागादयः, इतरथा तु न साधयितारमनुगच्छेयुः । तदुक्तमृषिणा—'असाधकं तु तादर्थ्यादि'ति । (७)अनुष्ठात्रपेक्षितोपायतारहितप्रवर्तनामात्रार्थत्वे यजेतेत्यादीनामसाधकं कर्म यागादि स्यात् साधयितारं नाधिगच्छेदित्यर्थः । (८)न चैते साक्षाद्भावनाभाव्या

(१) निराकृतस्य कथं प्रपञ्चप्रविलयप्रमित्यर्थत्वमत आहासतोपीति । असन्नपि प्रमित्यर्थो यथोत्खननादिरिव प्राशस्त्यप्रमित्यर्थ इति भावः ।

(२) एवं स्वर्गकामवाक्ये देहात्मभावोपलक्षितजडप्रपञ्चाविलयमुक्त्वा गोदोहनवाक्ये दर्शपूर्णमासाधिकारिण एव गोदोहनेऽप्यधिकारावगमादुभयत्राधिकारिभेदप्राविलापनद्वारा तदुपलक्षितात्मभेदः प्रविलाप्यत इत्याह गोदोहनेनेति । (३) सेवादिविषयप्रवृत्तिर्हि सांग्रहण्यामनुष्ठीयमानायां न भवतीत्यर्थः ।

(४) वायूदकादिवद्विधेः प्रवर्तकत्वमित्येतत्पक्षं निषेधन् स्वर्गकामाधिकरणसिद्धान्तं दर्शयति उपदेशो हीति

(५) उपदेश इत्यर्थः । (६) अनुज्ञाया प्रवर्तनमुपदेशो त्वप्रवृत्तस्येत्यादिकमुक्तमित्यर्थः ।

(७) तादर्थ्यादितिपदं व्याचष्टेऽनुष्ठात्रपेक्षितेति ।

(८) साक्षाद्भावनाभाव्यो यागादिः स च दुःखरूपत्वादप्रवृत्तिरिति यदुक्तं तत्राह नचैते इति । विधि-

अपि कर्त्रपेक्षितसाधनताविध्युपहितमर्यादा भावनोद्देश्या भवितुमर्हन्ति, येन पुंसामनुपकारकाः सन्तो नाधिकारभाजो भवेयुः । दुःखत्वेन कर्मणां चेतनसमीहानास्पदत्वात्, स्वर्गादीनां तु भावनापूर्वरूपकामनोपधानाच्च प्रीत्यात्मकत्वाच्च नामपदाभिधेयानामपि पुरुषविशेषणानामपि भावनोद्देश्यतालक्षणभाव्यत्वप्रतीतेः । (१)फलार्थप्रवृत्तभावनाभाव्यत्वलक्षणेन च यागादिसाध्यत्वेन फलार्थप्रवृत्तभावनाभाव्यत्वरूपस्य फलसाध्यत्वस्य समप्रधानत्वाभावेनैकवाक्यसमवायसम्भवात् भावनाभाव्यत्वमात्रस्य च यागादिसाध्यत्वस्य करणेप्यविरोधात्, अन्यथा सर्वत्र तदुच्छेदात्, परश्वादेरपि छिदादिषु तथाभावात् फलस्य साक्षाद्भावनाव्याप्यत्वविरहिणोपि तदुद्देश्यतया सर्वत्र व्यापितया व्यवस्थानात् स्वर्गसाधने यागादौ स्वर्गकामादेरधिकार इति सिद्धम् । न चाप्राप्तार्थविषयाः साङ्ग्रहण्यादियागविधयः परिसंख्यायका नियामका वा भवितुमर्हन्ति । (२)न चाधिकाराभावे देहात्मप्रविलयो वाऽधिकारिभेदप्रविलयो वा शक्य उपपादयितुम् । आपाततः प्रतिभाने चास्य तत्परत्वमेव नार्थायातपरत्वम् स्वरसतः प्रतीयमानेऽर्थे वाक्यस्य तादर्थ्ये सम्भवति न सम्पातायातपरत्वमुचितम् । न चैतावता शास्त्रत्वव्याघातः, तस्य स्वर्गाद्युपायशासनेपि शास्त्रत्वोपपत्तेः । पुरुषश्रेयोभिधायकत्वं हि शास्त्रत्वम् सरागवीतरागपुरुषश्रेयोभिधायकत्वेन सर्वपारिषदतया(३) न तत्त्वव्याघातः । तस्माद्विधिविषयभावोपगमाद् यागः स्वर्गस्योत्पादक इति सिद्धम् । "कर्मणो वा काचिदवस्थे"-ति । कर्मणोवान्तरव्यापारः । एतदुक्तम् भवति । कर्मणो हि फलं प्रति तत्साधनत्वं श्रुतम् तन्निर्वाहयितुं तस्यैवावान्तरव्यापारो भवति । न च व्यापारवति सत्येव व्यापारो नासतीति युक्तम् । असत्स्वप्याग्नेयादिषु तदुत्पत्त्यपूर्वाणां परमापूर्वे जनयितव्ये तदवान्तरव्यापारत्वात् । असत्यपि च तैलपानकर्मणि तेन पुष्टौ कर्तव्यायामन्तरा तैलपरिणामभेदानां तदवान्तरव्यापारात् । तस्मात्कर्मकार्यमपूर्वं कर्मणा फले कर्तव्ये तदवान्तरव्यापार इति युक्तम् । यदाः पुनः फलोपजननान्यथानुपपत्त्या किंचित्कल्प्यते तदा फलस्य वा पूर्वावस्था । "अविचित्रस्य कारणस्येति" ( पृ० ७५२ पं० २ ) । यदीश्वरादेव केवलादिति शेषः । (४)कर्मभिर्वा शुभाशुभैः कार्यद्वैधोत्पादे रागादिमत्त्वप्रसङ्ग इत्याशयः ॥ ४० ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

दृष्टानुसारिणी हि कल्पना युक्ता नान्यथा । नहि जातु मृत्पिण्डदण्डादयः कुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय विभवन्तो दृष्टाः । न च विद्युत्पवनादिभिरप्रयत्नपूर्वैर्व्यभिचारस्तेषामपि कल्पनास्पदतया व्यभिचारनिदर्शनत्वानुपपत्तेः । तस्मादचेतनं कर्म वाऽपूर्वं वा न चेतनानधिष्ठितं स्वतन्त्रं स्वकार्ये प्रवर्तितुमुत्सहते । न च चैतन्यमात्रं कर्मस्वरूपसामान्य-

---

विषयीकृतभावनायाः श्रेयःसाधनत्वात् स्वर्ग एवोद्देश्यो न यागादयः, यदि स्युस्तर्हि प्रवृत्तिविषयता तेषां स्यात् । तच्च नास्ति, यागादीनां भावना भत्यनीप्सितकर्मतामात्रत्वादित्यर्थः ।

(१) यागादेः स्वर्गादेश्च भाव्यत्वेन वाक्यभेद इति यदुक्तं तत्राह फलार्थेति ।

(२) नचेति । स्वर्गभोक्तुर्यागाधिकारान्यथानुपपत्त्या हि देहात्मत्वाभावावगतिरित्यर्थः ।

(३) सर्वपरिषत्प्रसिद्धतया ।

(४) तर्हि कर्मापेक्षत्वपक्षो निर्दोष इति कथं पूर्वपक्षावकाश इत्यत्राह कर्मभिर्वेति । कांश्चिच्छुभं कांश्चिदशुभं कारयतीति वैषम्यप्रसङ्ग इत्यर्थः ।

विनियोगादिविशेषविज्ञानशून्यमुपयुज्यते येन तद्रहितक्षेत्रज्ञमात्राधिष्ठानेन सिद्धसाध्यत्वमुद्भाव्येत(१), तस्मात् तत्तत्प्रासादाट्टालगोपुरतोरणाद्युपजननिदर्शनसहस्रैः सुपरिनिश्चितं यथा चेतनाधिष्ठानादचेतनानां कार्यारम्भकत्वमिति, तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धुमित्यपि स्पष्टं निरटङ्कि देवताधिकरणे । लौकिकश्चेश्वरो दानपरिचरणप्रणामाञ्जलिकरणस्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिराराधितः प्रसन्नः स्वानुरूपमाराधकाय फलं प्रयच्छति विरोधितश्चापक्रियाभिर्विरोधकायाहितमित्यपि सुप्रसिद्धं, तदिह केवलं कर्म वाऽपूर्वं वा चेतनानधिष्ठितमचेतनं फलं प्रसूत इति दृष्टविरुद्धम् । यथा विनष्टं कर्म न फलं प्रसूत इति कल्प्यते दृष्टविरोधादेवमिहापीति । तथा देवपूजात्मको यागो देवतां न प्रसादयन् फलं प्रसूत इत्यपि दृष्टविरुद्धम् । न हि राजपूजात्मकमाराधनं राजानमप्रसाद्य फलाय कल्पते । तस्माद्दृष्टानुगुण्याय यागादिभिरपि देवताप्रसत्तिरुपास्यते । तथा च देवताप्रसादादेव स्थायिनः फलोत्पत्तेरुपपत्तेः कृतमपूर्वेण । एवमशुभेनापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धम् , ततः स्थायिनोऽनिष्टफलप्रसवः । न च शुभाशुभकारिणां तदनुरूपं फलं प्रसुवाना देवता द्वेषपक्षपातवतीति युज्यते, नहि राजा साधुकारिणमनुगृह्णन्निगृह्णन् वा पापकारिणं भवति द्विष्टो रक्तो वा तद्वदलौकिकोपीश्वरः । (२)यथा च परमापूर्वे कर्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः, एवं प्रधानाराधनेऽङ्गाराधनानामुत्पत्त्याराधनानां चोपयोगः, स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिति सर्वं समानमन्यत्राभिनिवेशात् । तस्माद्दृष्टाविरोधेन देवताराधनात्फलं न स्वपूर्वात्कर्मणो वा केवलाद्विरोधतो हेतुव्यपदेशश्च श्रौतः स्मार्तश्च व्याख्यातः । (३)ये पुनरन्तर्यामिव्यापाराया फलोत्पादनाया नित्यत्वं सर्वसाधारणत्वमिति मन्यमाना भाष्यकारीयमधिकरणं दूषयांबभूवुः, तेभ्यो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामिति भाष्यं व्याचक्षीत ॥ ४१ ॥

इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां तृतीयस्याध्यायस्य द्वितीयः पादः ॥

---

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

पूर्वेण सङ्गति(४)माह—"व्याख्यातं विज्ञेयस्य ब्रह्मण" ( पृ० ७५३ पं० १० ) इति । निरुपाधिब्रह्मतत्त्वगोचरं विज्ञानं मन्वान आक्षिपति—"ननु विज्ञेयं ब्रह्मे"ति । (५)सावयवस्य ह्यवयवानां भेदात्तदवयवविशिष्टब्रह्मगोचराणि विज्ञानानि गोचरभेदाद्भिद्येरन्निरवयवा ब्रह्मणो निराकृताः पूर्वापरादित्यनेन । न च नानास्वभावं ब्रह्म यतः स्वभावभे-

( १ ) अनेन कर्मादि चेतनाधिष्ठितमचेतनत्वात् मृदादिवदित्यनुमाने जीवैः सिद्धसाधनत्वाशङ्का निरस्ता बोध्या । फलसिद्धिपूर्वक्षणे कर्मस्वरूपादिसाक्षात्कारवदधिष्ठितमस्माभिः साध्यते इति न सिद्धसाधनमित्यर्थः ।

( २ ) ननु तर्हि प्रधानकर्मणैवेश्वरप्रसादसम्भवे किमर्थमङ्गानुष्ठानमत आह यथाचेति ।

( ३ ) भास्करमतं दूषयितुमनुवदति ये पुनरिति । अविद्योपाधिवशादीश्वरस्यानित्यः प्रतिजीवं कर्मसाध्यश्चानुग्रहोऽस्तीति दूषणार्थो द्रष्टव्यः । ( ४ ) पादसङ्गतिमित्यर्थः ।

( ५ ) पूर्वापरादिभेदरहितमेव रसामिति च विशेषणद्वयस्यापुनरुक्तमर्थमाह सावयवस्येति । प्रथमेन सावयवत्वनिषेध उत्तरेणानेकधर्मवत्त्वनिषेध इति न पौनरुक्त्यमित्यर्थः ।

त्वाद् भिन्नानि ज्ञानानीत्युक्तमेकत्वमिति । "घनं" कठिनम् । (१)नन्वेकमप्यनेकरूपं लोके दृष्टं यथा सोमशर्मैकोऽप्याचार्यो मातुलः पिता पुत्रो भ्राता भर्ता जामाता द्विजोत्तम इत्यनेकरूप इत्यत उक्त"मेकरूपत्वाच्च" ( पृ० ७५४ पं० २ ) । एकस्मिन् गोचरे सम्भवन्ति बहूनि विज्ञानानि न त्वनेकाकाराणीत्युक्तम्—"अनेकरूपाणि" । (२)रूपमाकारः । समाधत्ते "उच्यते । सगुणेति" । तत्तद्गुणोपाधानब्रह्मविषया उपासनाः प्राणादिविषयाश्च दृष्टादृष्टक्रममुक्तिफला विषयभेदाद्भिद्यन्त इत्यर्थः । तत उपपन्नो विमर्श इत्याह—"तेष्वेषा चिन्ता" । पूर्वपक्षं गृह्णाति—"तत्रे"ति । "नाम्नस्ताव"दिति । 'अथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेते'ति । तत्र संशयः—किं यजेतेति सन्निहितज्योतिष्टोमानुवादेन सहस्रदक्षिणालक्षणगुणविधानम्, उतैतद्गुणविशिष्टकर्मान्तरविधानमिति । किं तावत्प्राप्तम्, ज्योतिष्टोमस्य प्रकृतत्वाद्यजेतेति तदनुवादाज्ज्योतिरिति(३) प्रातिपदिकमात्रं पठित्वा एतेनेत्यनुकृष्य कर्मसामानाधिकरण्येन कर्मनामव्यवस्थापनात् कर्मणश्चानुवाद्यत्वेन तत्तन्त्रस्य नाम्नोऽपि तथैव व्यवस्थापनात् ज्योतिःशब्दस्य वसन्ते वसन्ते ज्योतिषेति च ज्योतिष्टोमे योगदर्शनात् नामैकदेशेन च नामोपलक्षणस्य लोकसिद्धत्वात् भीमसेनोपलक्षणभीमपदवद्, अथशब्दस्य चानन्तर्यार्थस्यासम्बन्धित्वेऽनुपपत्तेर्गुणविशिष्टकर्मान्तरविधेश्च गुणमात्रविधानस्य लाघवाद् द्वादशशतदक्षिणायाश्चोत्पत्त्यशिष्टतया समाप्तितया सहस्रदक्षिणया सह विकल्पोपपत्तेः प्रकृतस्यैव ज्योतिष्टोमस्य सहस्रदक्षिणालक्षणगुणविधानार्थमयमनुवादो न तु कर्मान्तरमिति प्राप्तम् (४) ।

एवं प्राप्त उच्यते—भवेत्पूर्वस्मिन् गुणविधिर्यदि तदेव प्रकरणं स्यात्, विच्छिन्नं तु तत्, तथाहि—सन्निधावपि पूर्वासम्बद्धार्थं संज्ञान्तरं प्रतीयमानमन्यायश्चानेकार्थत्वमिति न्यायाद् उत्सर्गतोऽर्थान्तरार्थत्वात् पूर्वबुद्धिं व्यवच्छिनत्त्यपूर्वबुद्धिं च प्रसूत इति लोकसिद्धम् । न जातु देहि देवदत्ताय गामथ देवाय वाजिनामिति देवशब्दाद्देवदत्तं वाजिभाजमवस्यन्ति लौकिकाः । तथा चोपरिष्टाद् यजेतेति श्रूयमाणमसम्बद्धार्थपदव्यवायात्(५) तत्कर्मबुद्धिमनादधत् तत्र गुणविधानमात्रासमर्थं कर्मान्तरमेव विधत्ते । न चैकत्रानुपपत्त्या लक्षणया ज्योतिःशब्दो ज्योतिष्टोमे प्रवृत्त इत्यन्यस्यामनुपपत्तौ लाक्षणिको युक्तः(६), नहि गङ्गायां घोष इत्यत्र गङ्गापदं लाक्षणिकमिति मीनो गङ्गायामित्यत्रापि लाक्षणिकं भवति । भेदेऽपि च प्रथमं संज्ञा-

---

(१) एवमवयवभेदं धर्मभेदं च निरस्यापेक्षिकभेदमाशङ्क्य तन्निषेध एकरूपत्वविशेषणेन क्रियत इत्याह नन्विति । (२) ननु ज्ञानस्य गुणस्य कथमनेकरूपत्वप्राप्तिरत आह रूपमिति ।

(३) ननु यजेतेति प्रकृतज्योतिष्टोमानुवादोऽनुपपन्नः नाम्नैव तद्बुद्धिविच्छेदादत आह ज्योतिरितीति । ज्योतिरिति प्रातिपदिकमात्रं न नामत्वमेतेनेत्यमुमनुकृष्य यजेतेत्याख्यातवाच्यकर्मसामानाधिकरण्यान्नामत्वाभिव्यक्तिस्तथा चाख्याताधीनत्वाद्यथाख्यातं कर्म कुर्यात् तर्हि नामापि तद्वदेव यद्यनुवदेत्तर्हि नामापि तदनुवदिष्यतीत्यप्रयोजकमिह नाम भेदाभेदयोस्ततश्चाख्यातार्थ एव चिन्त्य इत्यर्थः ।

(४) पूर्वतन्त्रे शाखान्तराधिकरणपूर्वपक्षसूत्रं 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदः स्यात् ( जै० २।४।८ सू० ) इति। तत्रोक्ता हेतवः नामादयो विद्याभेदार्थमिहोच्यन्ते 'अथैष ज्योति'रित्यादिना । अत्र प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणाख्यगुणविधिरिति पूर्वपक्षसङ्क्षेपार्थः । (५) पूर्वेणासम्बद्धार्थवता ज्योतिःपदेन व्यवधानादित्यर्थः ।

(६) वसन्तादिवाक्ये तु ज्योतिषा यजेतेत्याख्याताधीनासंज्ञाऽऽख्यातं च कालादिविधिसंक्रान्तमिति पूर्वकर्मानुवदेन, एषा तु प्रथमान्तत्वादतन्त्रेति प्रकृतकर्मबुद्धिं विच्छिनत्तीत्यर्थः ।

न्तरेणोल्लिखिते यजिशब्दसामानाधिकरण्यं कर्मनामधेयतामात्रतामावहति न तु संज्ञान्तरोपजनितां भेदधियमपनेतुमुत्सहते। तथा चाथशब्दोऽधिकारार्थः प्रकरणान्तरतामवद्योतयति। एषशब्दश्चाधिक्रियमाणपरामर्शक इति सोऽयं संज्ञान्तराद्भेद इति। भवतु संज्ञान्तरात्कर्मभेदः प्रस्तुते तु किमायातमित्यत आह—"अस्ति चात्र वेदान्तान्तराविहितेष्वि"ति। यथैव काठकादिसमाख्या ग्रन्थे प्रयुज्यते एवं ज्ञानेपि लौकिकैः। न चास्ति विशेषो यतो ग्रन्थे मुख्या विज्ञाने गौणी भवेत्। प्रणयनं च ग्रन्थज्ञानयोरभिन्नं प्रवृत्तिनिमित्तं तस्माज्ज्ञानस्यापि वाचिका समाख्या। तथा च यदा ज्योतिष्टोमसन्निधौ श्रूयमाणं समाख्यान्तरं तत्प्रतीकमपि कर्मणो भेदकं तदा कैव कथा शाखान्तरीये विप्रकृष्टतमेऽतत्प्रतीकभूतसमाख्यान्तराभिधेये ज्ञात इति। तथा रूपभेदोपि कर्मभेदस्य प्रतिपादकः प्रसिद्धो, यथा 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्येवमादिषु। (१)इदमाम्नायते—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'ति। अत्र हि द्रव्यदेवतासम्बन्धानुमितो यागो विधीयते तदनन्तरं चेदमाम्नायते—'वाजिभ्यो वाजिनमि'ति। अत्रेदं सन्दिह्यते—किं पूर्वस्मिन्नेव कर्मणि वाजिनं गुणो विधीयते, उत कर्मान्तरं द्रव्यदेवतान्तरविशिष्टमपूर्वं विधीयत इति। किं तावत्प्राप्तम्? द्रव्यदेवतान्तरविशिष्टकर्मान्तरं विधौ विधिगौरवप्रसङ्गात् कर्मान्तरापूर्वान्तरकल्पनागौरवप्रसङ्गाच्च न कर्मान्तरविधानमपि तु पूर्वस्मिन्नेव कर्मणि वाजिनद्रव्यविधिः। (२)न चोत्पत्तिशिष्टामिक्षागुणावरोधात्तत्र वाजिनमलब्धावकाशं कर्मान्तरं गोचरयतीति युक्तम्। उभयोरपि वाक्ययोः समसमयप्रवृत्तेरामिक्षावाजिनयोरुत्पत्तौ समं शिष्यमाणत्वेन नामिक्षायाः शिष्टत्वम्। तत्कथमनयावरुद्धं कर्म न वाजिनं निविशेत। न च वैश्वदेवीत्यत्र श्रौत आमिक्षासम्बन्धो विश्वेषां देवानां येन वाजिनसम्बन्धात् वाक्यगम्याद्बलवान् भवेदुभयोरपि पदान्तरापेक्षप्रतीतितया वाक्यगम्यत्वाविशेषात्। नो खलु वैश्वदेवीत्युक्ते आमिक्षापदानपेक्षामामिक्षामध्यवस्यामः। (३)अस्तु वा श्रौतत्वं तथापि वाजिभ्य इति पदं वाजमन्नमामिक्षा तदेषामस्तीति व्युत्पत्त्या तत्सम्बन्धिनो विश्वान्देवानुपलक्षयति। यद्यपि विश्वेदेवशब्दाद्वाजिपदं भिन्नं येन च शब्देन चोदना (४)तेनैवोद्देशे देवतात्वं न शब्दान्तरेण, अन्यथाऽर्थैकत्वेन सूर्यादित्यपदयोः सूर्यादित्यचर्वोरेकदेवत्य-

---

(१) तथा रूपभेदपीत्यादिभाष्यं व्याचष्टे इदमिति।

(२) ननु वैश्वदेव्यामिक्षेत्यत्र यागविधिसमय एवामिक्षा यागसम्बद्धा प्रतीयते वाजिनन्तु वाक्यान्तरेणात उत्पत्तिविशिष्टामिक्षावरुद्धे कर्मणि वाजिनन्दुर्बलमवकाशमलभमानं कर्मान्तरं गमयतीत्याशङ्क्याह न चेति। अयुक्तत्वे हेतुः उभयोरिति। वैश्वदेवीवाक्ये आमिक्षाविश्वेदेवसम्बन्धः प्रतीयते वाजिनवाक्ये तु वाजिनान्तेषामेव विश्वेषां देवानां वाजिनस्य च सम्बन्धः, तत्र देवतैक्याद्द्रव्यद्वयस्य सहत्यागकल्पनया द्रव्यद्वययुक्तैकयागविधिरनुमीयतेऽतस्तत्र कुत उत्पत्तिशिष्टत्वमामिक्षायाः कुतो वा वाजिनस्योत्पन्नशिष्टत्वमिति भावः।

(३) ननु विश्वेदेवा देवता अस्य इति व्युत्पत्त्या श्रौतत्वमामिक्षासम्बन्धे स्यादत आह अस्तुवेति।

(४) विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना (जै–१०–४–२३ सू०) दर्शपूर्णमासयोर्देवतापदान्याग्नेयादीनि सन्ति, तत्र हविःप्रदानसमये येन केनचिदग्निवाचकपदेनाग्निरुद्देश्यो विधिगताग्निपदेनैव वेति सन्देहेऽर्थरूपत्वाद्देवतात्वस्य केनचिद्वाचकेन निर्देशसम्भवादनियम इति पूर्वपक्षे राद्धान्तः प्रादर्शि देवतात्वस्यार्थात्मकत्वेपि त्यज्यमानहविरुद्देश्यत्वमेव देवतात्वमुद्देशश्च हविः प्रति प्राधान्येन निर्देशः, स च तद्धितश्रुत्यैग्निशब्देनैव न शब्दान्तरेणेति भावः।

प्रसङ्गात् । तथापि वाजिभिरितीनैः सर्वनामार्थे स्मरणात् सन्निहितस्य च सर्वनामार्थत्वाद्विश्वेषां देवानां च विश्वदेवपदेन सन्निधापनात्तत्पदपुरःसरा एवैते वाजिपदेनोपस्थाप्या न तु सूर्यादित्यपदवत्स्वतन्त्रास्तथा च तदुपलक्षणार्थं वाजिपदं विश्वदेवोपहितामेव देवतामुपलक्षयतीति न शब्दान्तरादेवताभेदस्त(१)त्रामिक्षासम्बन्धोपजीवनेन विश्वेभ्यो वाजिनं विधीयमानं नामिक्षया बाध्यते किन्तु तया सह समुच्चीयत इति न कर्मान्तरमपि तु वाक्याभ्यां द्रव्ययुक्तमेकं कर्म विधीयत इति प्राप्ते,

(२)उच्यते—स्यादेतदेवं यदि वैश्वदेवीति तद्धितश्रुत्यामिक्षा नोच्येत, तद्धितस्य तस्येति सर्वनामार्थे स्मरणात् सन्निहितस्य च विशेषस्य सर्वनामार्थत्वात् तत्रैव तद्धितस्यापि वृत्तिः,(३)न तु विश्वेषु देवेषु न तत्सम्बन्धेनापि तत्सम्बन्धिमात्रे । नन्वेवंसति कस्माद्वैश्वदेवीशब्दमात्रादेव नामिक्षां प्रतीमः किमिति चामिक्षापदमपेक्षामहे , तद्धितान्तस्य पदस्याभिधानापर्यवसानान्न प्रतीमस्तत्पर्यवसानाय चापेक्षामहे। अवसिताभिधानं हि पदं समर्थमर्थधियमाधातुमिदं तु सन्निहितविशेषाभिधायि तत्सन्निधिमपेक्षमाणं सन्निधापकमामिक्षापदमपेक्षत इति कुत आमिक्षापदानपेक्ष आमिक्षाप्रत्ययप्रसङ्गः, कुतो वा तत्रानपेक्षा । अतश्च सत्यामपि पदान्तरापेक्षायां यत्पदं पदान्तरापेक्षमभिधत्ते तत्प्रमाणभूतप्रथमभाविपदावगम्यत्वात् श्रौतं बलीयश्च । (४)यत्तु पर्यवसिताभिधानपदाभिहितपदार्थावगम्यं तत्चरमप्रतीतिवाक्यगम्यं दुर्बलं चेति तद्धितश्रुत्यवगतामिक्षालक्षणगुणावरोधात् पूर्वकर्मासंयोगिवाजिनद्रव्यं ससम्बन्धि पूर्वस्माद् भिनत्ति । (५)एवं च सति नित्यवदवगतानपेक्षसाधनभावामिक्षा न वाजिनद्रव्येण सह विकल्पसमुच्चयौ प्राप्स्यति । न(६) चाश्वरे निरूढत्वादनपेक्षवृत्ति वाजिपदं कथंचिद्यौगिकं सापेक्षवृत्ति विश्वदेवशब्दो देवतां वैश्वदेवीपदादामिक्षाद्रव्यं प्रत्युपसर्जनीभूतामवगतामुपलक्षयिष्यति । (७)प्रकृतं हि सर्वनामपदगोचरः प्रधानं च प्रकृतमुच्यते नोपसर्जनम् । प्रामाणिके च विधिकल्पनागौरवे ऽभ्युपेतव्य एव, प्रमाणस्य तत्त्वविषयत्वात्तस्मादयेह पूर्वकर्मासम्भाविनो गुणात्कर्मभेद एवमिहापि पञ्चाग्निविद्यायाः षडग्निविद्या भिन्ना एवं प्राणसंवादेषूनाधिकभावेन विद्याभेद इति । तथा धर्मविशेषोपि कर्मभेदस्य प्रतिपादक इति । तथाहि—कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति नाचरन्त्यन्ये । तथाग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भमाहरन्ति नाहरन्त्यन्ये । तथाश्वमेधमधीयानाः केचिदश्वस्य घासमानयन्ति नानयन्त्यन्ये । केचिच्चाचरन्त्यन्यमेव धर्मम् । न च तान्येव कर्माणि भूमिभो-

(१) यदुक्तमामिक्षासम्बद्धविश्वेदेवोपलक्षणं फलं वक्ष्यतीति, तत्राह तत्रेति ।

(२) श्रुतिबलीयस्त्वेन सिद्धान्तयति उच्यत इति ।

(३) ननु तद्धित आमिक्षाविशिष्टान्विश्वान्देवानभिधत्तामथवा तेषामामिक्षासम्बन्धं, तथाच कुत आमिक्षावाचकत्वमस्योच्यत आह नन्विति ।

(४) उक्तप्रकारवैपरीत्यं वाजिनवैश्वदेवसम्बन्धे दर्शयंस्तस्य बाधनीयतामाह यत्त्विति ।

(५) कर्मान्तरविधौ हेत्वन्तरमाहैवं चेति ।

(६) वचनेनैव श्रुतिबलीयस्त्वन्यायबाध इति यदुक्तं तत्राह नचेति ।

(७) ननूपसर्जनभूता अपि विश्वेदेवा वाजिन इति तद्धितान्तर्वर्तिसर्वनाम्ना परामृश्यन्तां सर्वनाम्नः सन्निहितविषयत्वादत आह प्रकृतमिति ।

जनादिजनितमुपकारमाकाङ्क्षन्ति नाकाङ्क्षन्ति चेति युज्यते । अतोऽवगम्यते भिन्नानि तासुतासु शाखासु कर्माणीति । अस्तु प्रस्तुते किमायातमित्यत आह "अस्ति चात्रे"ति ( पृ० ७५५ पं० ३ ) । अन्येषां शाखिनां नास्तीति शेषः । "एवं पुनरुक्तादयोपी"ति । समिधो यजतीत्यादिषु पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः । तत्र किमेका कर्मभावना किं वा पञ्चेति । किं तावत्प्राप्तम्? धात्वर्थानुबन्धभेदेन(१)शब्दान्तराधिकरणे भावनाभेदाभिधानाद्धात्वर्थस्य च धातुभेदमन्तरेण भेदानुपपत्तेः समिधो यजतीति प्रथमभाविना(२) वाक्येन विहिता कर्मभावना विपरिवर्तमानोपरितनैर्वाक्यैरनूद्यते । न च प्रयोजनाभावादननुवादः प्रमाणसिद्धस्याप्रयोजनस्याननुयोज्यत्वात्कर्मभावनाभेदे चानेकापूर्वकल्पनाप्रसङ्गादेकापूर्वावान्तरव्यापारमेकं कर्मेति प्राप्तम् । एवं प्राप्त उच्यते । (३)परस्परानपेक्षाणि हि समिदादिवाक्यानीति सर्वाण्येव प्राथम्यार्हाण्यपि युगपदध्ययनानुपपत्तेः क्रमेणाधीतानीति । न त्वयमेषां प्रयोजकः क्रमः।(४)परस्परापेक्षाणामेकवाक्यत्वे हि प्रयोजकः स्यात् तेन प्राथम्याभावात् प्राप्तमित्येव नास्तीति कस्य कोऽनुवादः।कथंचिद्विपरिवृत्तिमात्रस्यौत्सर्गिकाप्रवृत्तप्रवर्तनालक्षणविधित्वापवादसामर्थ्याभावात् । गुणश्रवणे हि गुणविशिष्टकर्मविधाने विधिगौरवभिया गुणमात्रविधानलाघवाय कर्मानुवादापेक्षायां विपरिवृत्तेरुपकारो यथा दध्ना जुहोतीति दधिविधिपरे वाक्ये विपरिवृत्त्यपेक्षायामग्निहोत्रं जुहोतीति विहितस्य होमस्य विपरिवर्तमानस्यानुवादः । (५)न चात्र गुणाद्भेदः समिदादिपदानां कर्मनामधेयानां गुणवचनत्वाभावात्, अगृह्यमाणविशेषणतया च किंचनविहितं किं कर्मानुवादेन कस्य गुणविधित्वमिति न विनिगम्यते । (६)न चापूर्वं नाम ज्योतिरादिवद्विधानाद्यनन्धं प्रथममवगतं यतः पूर्वबुद्धिविच्छेदेन विधीयमानं कर्म पूर्वस्मात् संज्ञातो व्यवच्छिन्द्यात् । किन्तु प्रथमत एव कर्मसामानाधिकरण्येनावगताः समिदादयस्तद्वशात् कर्मनामधेयतां प्रतिपद्यमाना आख्यातस्यानुवादत्वे ऽनुवादा विधित्वे विधयो न तु स्वातन्त्र्येण कस्यचिदीशते । तस्मात्स्वरससिद्धाप्राप्तकर्मविधिपरत्वात् कर्मण्ययमभ्यासो भावनानुबन्धभूतानि भिन्दानो भावनां भिनत्ति यथा तथा शाखान्तरविहिता अपि विधाः शाखान्तरविहिताभ्यो विधाभ्योऽभ्यासो भेत्स्यतीति ।

---

( १ ) शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् (२–२–१ सू० ) इति सूत्रे यजति ददाति इत्यादौ एका भावना धात्वर्थभेदेन भावनाभेदो वा इति संशये, भावनायाः प्रधानत्वात्तत्र गुणभूतधात्वर्थानां समुच्चय इत्येका भावनेति पूर्वपक्षे, नियमेन धातुप्रत्यययोरन्विताभिधायित्वात् प्रत्ययस्य चैकस्मादेव धातोर्विधानादेकधात्वर्थानुरक्ता भावना न धात्वर्थान्तरसम्बद्धा तत्सम्बन्धस्योत्पत्तिविशिष्टत्वात्तस्मादपुनरुक्तधात्वात्मकशब्दान्तरे कर्मभेदो भावनाभेद इत्यर्थः ।

( २ ) नन्वेकभावनाविधाने एकत्र विधिरन्यत्रानुवादो वक्तव्यस्तत्र को विधिरिति न ज्ञायते अत आह प्रथमेति ।

( ३ ) विध्यनुवादाविनिगमेन सिद्धान्तमाह परस्परेति । एषां बोधकत्वे क्रमो न प्रयोजक इत्यर्थः ।

( ४ ) ननु पाठक्रमानादरणे कथं प्रयाजादीनां पाठानुष्ठानक्रमाविशिष्टस्तत्राह परस्परापेक्षाणामिति । प्रयाजानामेककरणोपकारजनकतयैकवाक्यत्वे सम्भूय कारित्वे सति पाठक्रमोऽनुष्ठाने प्रयोजकः स्यादित्यर्थः ।

( ५ ) ननु समिदादिवाक्यं नाभ्यासात्कर्मभेदे उदाहरणं समिदादिगुणाद्भेदप्रतीतेरत आह न चात्रेति ।

( ६ ) समिदादीनि यदि नामधेयानि तदा नाम्न एव भेदो नाभ्यासादत आह नचेति । पूर्वकर्मानन्वयीत्यर्थः ।

अशक्येव । नह्येकः पुरुषः सर्ववेदान्तप्रत्ययात्मिकामुपासनामुपसंहर्तुं शक्नोति सर्ववेदान्ताध्ययनासामर्थ्यादनधीतार्थोपसंहारेऽध्ययनविधानवैयर्थ्यप्रसङ्गात् । प्रतिशाखं भेदे तूपासनानां नायं दोषः । समाप्तिभेदाच्च । केषांचित् शाखिनामोङ्कारसार्वात्म्यकथने समाप्तिः । केषांचिदन्यत्र तस्मादप्युपासनाभेदः । अन्यार्थदर्शनादपि भेदः । तथाहि–नैतदचीर्णव्रतोऽधीत इति अचीर्णव्रतस्याध्ययनाभावदर्शनादुपासनाभावः । क्वचिदचीर्णव्रतस्याप्यध्ययनदर्शनादुपासनावगम्यते, तस्मादुपासनाभेद इति । अत्र सिद्धान्तमाह–**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** । तद्व्याचष्टे–**सर्ववेदान्तप्रत्ययानि** सर्ववेदान्तप्रमाणानि **विज्ञानानि तस्मिंस्तस्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति** । यान्येकस्मिन् वेदान्ते तान्येव वेदान्तान्तरेष्वपीत्यर्थः । **चोदनाद्यविशेषात्**–आदिशब्देन संयोगरूपाख्याः संगृह्यन्ते । अत्र च चोद्यत इति चोदना पुरुषप्रयत्नः । स हि पुरुषस्य व्यापारः । तत्र खल्वयं होमादिधात्वर्थावच्छिन्ने प्रवर्तते । (१)तस्य देवतोद्देशेन त्यागस्यासेचनादिकस्यावच्छेद्यः पुरुषप्रयत्नः स एव शाखान्तरे यथैवमिहापि प्राणज्येष्ठत्वश्रेष्ठत्ववेदनाविषयः पुरुषप्रयत्नः स एव शाखान्तरेष्वपीति । एवं फलसंयोगोऽपि ज्येष्ठश्रेष्ठभवनलक्षणः स एव । रूपमपि तदेव । यथा यागस्य यदेकस्यां शाखायां द्रव्यदेवतारूपं तदेव शाखान्तरेष्वपीति । एवं वेदनस्यापि यदेकत्र प्राणज्येष्ठत्वश्रेष्ठत्वरूपं विषयस्तच्छाखान्तरेष्वपीति ॥ १ ॥

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

“कांचिद्विशेष”मिति ( पृ०५५७ पं०६ ) (२)युक्तं यदग्नीषोमीयस्योत्पन्नस्य पश्चादेकादशकपालत्वादिसम्बन्धेऽप्यभेद इति । यथोत्पन्नस्य तस्य सर्वत्र प्रत्यभिज्ञायमानत्वादिह त्वग्निषूत्पत्तिगत एव गुणभेद इति कथं वैश्वदेवीवन्न भेदक इति विशेषस्तमिमं विशेषमभिप्रेत्याशङ्कते सूत्रकारः–“**भेदान्नेति चे**”दिति । परिहारः सूत्रावयवः–“**न एकस्यामपीति**” । (३)पञ्चैव साम्पादिका अग्नयो वाजसनेयिनामपि छान्दोग्यानामिव विधीयन्ते । षष्ठस्त्वग्निः सम्पद्व्यतिरेकाया(४)नूद्यते न तु विधीयते वैश्वदेव्यां तूत्पत्तौ गुणो विधीयत इति भवतु भेदः । (५)अथ वा छान्दोग्यानामपि षष्ठोऽग्निः पठ्यत एव । (६)अथ वा भवतु वाजसनेयिनां षष्ठाग्निविधानं मा च भूच्छान्दोग्यानां तथापि पञ्चत्वसंख्याया आविधानान्नोत्पत्तिशिष्टत्वं संख्यायाः किन्तूत्पन्नेष्वग्निषु प्रचयशिष्टा संख्याऽनूद्यते (७)साम्पादिकानग्नीनवच्छेत्तुं

---

( १ ) तस्येति । तस्य पुरुषकृतस्य कृते त्यागस्यासेचनाधिकस्य प्रक्षेपाधिकस्य होमस्यावच्छेद्यो यः पुरुषप्रयत्न एकस्यां शाखायां चोद्यते स एव शाखान्तरे चोद्यते यथेत्यर्थः । दार्ष्टान्तिकमाहैवमिति ।

( २ ) सूत्रभाष्याभ्यामुक्तं शाखान्तराधिकरणेनास्यापौनरुक्त्यं परिहरति युक्तमिति ।

( ३ ) उत्पत्तिशिष्टा पञ्चसंख्या न षट्संख्या षष्ठस्याग्नेरनूद्यमानत्वादिति परिहरति पञ्चैवेति ।

( ४ ) उपास्तिव्यतिरेकाय । अग्निरेवाग्निरित्यादिना मुख्याग्निसमिदादेरनुवादादुपास्यत्वव्यावृत्तिर्बोध्यत इत्यर्थः ।

( ५ ) एवं षष्ठाग्नेरनुवाद्यत्वेन परिहारमभिधायेदानीं षडप्यग्नयः शाखाद्वयेऽप्युपास्याः, पञ्चसंख्या त्वद्ध्याग्नीन् योषिदादीनवच्छेत्तुमित्याहाथवेति ।

( ६ ) पञ्चसंख्योपास्याग्निविशेषणत्वेन न विधीयते किन्त्वनूद्यतेऽग्नयस्तु शाखाद्वयेऽप्यविशेषेणोपास्यतया विधीयन्ते षष्ठस्त्वग्निर्विकल्प्यत इति परिहरति अथवा भवतु इति । ( ७ ) समारोप्याग्निभावान् ।

तेन येषामुत्पत्तिस्तेषां प्रत्यभिज्ञानाद् अप्रत्यभिज्ञायमानायाश्च संख्याया अनुवादत्वेनानुत्पत्ते- र्विधीयमानस्य चाधिकस्य षोडशिग्रहणवद्विकल्पसम्भवाद् न शाखान्तरे ज्ञानभेदः । उत्पत्ति- शिष्टत्वेऽसिद्धे प्राणसंवादादयोऽपि भवन्ति प्रत्यभिज्ञानादभिन्नास्तासुतासु शाखास्विति ॥२॥

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

यैराथर्वणिकग्रन्थोपाया विद्या वेदितव्या तेषामेव शिरोव्रतपूर्वाध्ययनप्राप्तग्रन्थबोधिता फलं प्रयच्छति नान्यथा । अन्येषां तु छान्दोग्यादीनां सैव विद्या नाचीर्णशिरोव्रतानां फल- देत्याथर्वणग्रन्थाध्ययनसम्बन्धादवगम्यते । तत्सम्बन्धश्च वेदव्रतेनेति नैतदचीर्णव्रतोऽधीत इति समाम्नानादवगम्यते । तेषामेवैतां ब्रह्मविद्यां वदेतेति विद्यासंयोगेप्येतामिति प्रकृतपरा- मर्शिना सर्वनाम्ना ऽध्ययनसम्बन्धाविरोधायाथर्वविहितैव विद्योच्यत इति । सवा होमाः सप्त सौर्यादयः शतौदनान्ता आथर्वणिकानां त एकस्मिन्नेवाथर्वणिके ऽग्नौ क्रियन्ते न त्रेतायाम्॥३॥

(१)विद्यैकत्वम्—

## दर्शयति च ॥ ४ ॥

भूयोभूयो विद्यैकत्वस्य वेददर्शनात् । (२)यत्रापि सगुणब्रह्मविद्यानां न साक्षाद्वेद एकत्व- माह तासामपि तत्प्रायपठितानां तद्विधानां प्रायदर्शनादेकत्वमेव, तथा ह्यम्रप्राये लिखितं दृष्ट्वा अभेदयमम्र इति बुद्धिरिति । यच्च काठकादिसमाख्ययोपासनाभेद इति । तदयुक्तम् । एता हि पौरुषेय्यः समाख्याः काठकादिप्रवचनयोगात्तासां शाखानां न तूपासनानाम् । नह्येताः कठादि- भिः प्रोक्ताः । (३)न च कठाद्यनुष्ठानमासामितरानुष्ठानेभ्यो विशेष्यते । न च कठप्रोक्तत्वनि- मित्तमात्रेण ग्रन्थे प्रवृत्तौ तद्योगाच्च कथंचिल्लक्षणयोपासनासु प्रवृत्तौ सम्भवन्त्यामुपासनाभि- धानमप्यासां शक्यं कल्पयितुम् । (४)न च तद्भेदाभेदौ ज्ञानभेदाभेदप्रयोजकौ, मा भूदन्य- त्वमासामभेदाज्ज्ञानानामेकशाखागतानामैक्यम् । कठादिपुरुषप्रवचननिमित्ताश्चैताः समाख्याः कठादिभ्यः प्राक् नासन्निति तन्निबन्धनो ज्ञानभेदो नासीदिदानीं चास्तीति दुर्घटमापद्येत । तस्मान्न समाख्यातो भेदः । अभ्यासोऽपि नात्र भेदकः, युक्तं यदेकशाखागतो यजत्यभ्यासः समिदादीनां भेदक इति, तत्र हि विधित्वमौत्सर्गिकमज्ञातज्ञापनमप्रवृत्तप्रवर्त्तनं च कुप्येयाताम् । शाखान्तरे त्वध्येतृपुरुषभेदादेकत्वेऽपि नौत्सर्गिकविधित्वव्याकोप इति । अशक्तिरपि न भेदहेतुः, स्वाध्यायोऽध्येतव्य इति स्वशाखायामध्ययननियमः, ततश्च शाखान्तरीयानर्थानन्येभ्यस्त-

---

(१) दर्शयति चेति सूत्रं पूरयति विद्यैकत्वमिति ।

(२) ननु सर्वे वेदा यत्पदमामनन्ति इति वाक्यं वेदैक्यद्वारेण विद्यैक्यदर्शकं निर्गुणब्रह्मविषयं, कथ- मनेन सगुणविद्यैक्यसिद्धिरत आह यत्रापीति ।

(३) ननु विद्यानां शब्दात्मकत्वाभावात् कठादिप्रोक्तत्वाभावेपि कठाद्यनुष्ठितत्वात् काठकादिसंज्ञा किं न स्यादत आह नचेति ।

(४) काठकादिसंज्ञानां विद्याभिधायकत्वेप्यप्रयोजकत्वमाह न च तद्भेदेति । यदि काठकादिसंज्ञाना भेदाद्विद्याभेदस्तदैकशाखागतदहरादिविद्यानामैक्यं स्यात्तथायुक्तं नानाशब्दादित्यत्र (३-३-५८) सूत्रे तन्नि- षेधादित्यर्थः ।

द्विषेभ्योऽधिगम्योपसंहरिष्यति । (१)समाप्तिश्चैकस्मिन्नपि तत्सम्बन्धिनि समाप्ते तस्य व्यपदिश्यते, यथाऽऽध्वर्यवे कर्मणि ज्योतिष्टोमस्य समाप्तिं व्यपदिशन्ति—'ज्योतिष्टोमः समाप्त' इति । तस्मात्समाप्तिभेदोऽपि न साधनमुपासनाभेदस्य । तदेवमसति बाधके चोदनाद्यविशेषात्सर्ववेदान्तप्रत्ययानि कर्माणि तानि तान्येवेति सिद्धम् ।

(२)कंचिद्विशेषमाशङ्क्य पूर्वतन्त्रप्रसाधितम् ।
वक्ष्यमाणार्थसिद्ध्यर्थमर्थमाह स्म सूत्रकृत् ॥ ४ ॥

चिन्ताप्रयोजनप्रदर्शनार्थं सूत्रम्—

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

अत्रेदमाशङ्क्यते—भवतु सर्वशाखाप्रत्ययमेकं विज्ञानं तथापि शाखान्तरोक्तानां तदङ्गान्तराणां न शाखान्तरोक्ते तस्मिन्नुपसंहारो भवितुमर्हति । तस्यैकस्य कर्मणो यावन्मात्रमङ्गजातमेकस्यां शाखायां विहितं तावन्मात्रेणैवोपकारसिद्धेरधिकारानपेक्षणात् । अपेक्षणे चाधिकमपि तत्र विधीयेत, न च विहितं, तस्माद्यथा नैमित्तिकं कर्म सकलाङ्गवद्विहितमपि अशक्तो यावच्छक्यमङ्गमनुष्ठातुं तावन्मात्रजन्येनोपकारेणोपकृतं भवत्येवमिहाप्यङ्गान्तराविधानादेव भविष्यतीति ।

एवं प्राप्ते उच्यते—सर्वत्रैकत्वे कर्मणः स्थिते (३)गृहमेधीयन्यायेन नोपकारावच्छेदो युज्यते । नहि तदेव कर्म सत्तदङ्गमपेक्षते नापेक्षते चेति युज्यते, नैमित्तिके तु निमित्तानुरोधादवश्यकर्तव्ये सर्वाङ्गोपसंहारस्य सदातनत्वासम्भवादुपकारावच्छेदः कल्प्यते, प्रकृतोपकारपिण्डे चोदकप्राप्ते आज्यभागविधानात् । गृहमेधीयेऽप्युपकारावच्छेदः स्यादिह तु शाखान्तरे कतिपयाङ्गविधानं तानि विधत्ते नेतराणि परिसंचष्टे । न च तदुपकारपिण्डे चोदकप्राप्ते आज्यभागवत्तन्मात्रविधानम् । तस्मात्तत्त्वेन कर्मणा सर्वाङ्गग्रहणम औत्सर्गिकोऽसति बलवति बाधके नापवदितुं युक्त इति ॥ ५ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

(४)द्वया द्विप्रकाराः प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायस असुराः, शास्त्रजन्यया सात्त्विक्या बुद्ध्या सम्पन्ना देवास्ते हि दीव्यन्त इति देवाः शास्त्रयुक्त्य-

---

(१) तत्तच्छाखास्वोङ्कारसार्वात्म्यादौ ब्रह्मविद्यासमाप्तिव्यवहारोऽध्येतॄणान्तु तत्तदंशसमाप्त्यभिप्रायोऽतो न शाखान्तरे विद्याया भेदक इत्याह समाप्तिश्चेति ।

(२) शाखान्तराधिकरणेनास्य पौनरुक्त्यं निराकरोति कञ्चिदिति । पञ्चाग्निविद्यायामग्निगतपञ्चत्वषट्त्वसंख्ययोरुत्पत्तिशिष्टत्वं विशेषः स च प्रागेव परिहृत इत्यर्थः ।

(३) गृहमेधीयेति । चातुर्मास्येषु गृहमेधीयो वर्णितः—'मरुद्भ्यो गृहमेधिभ्यो सर्वासां दुग्धे सायमोदन' इति । तत्रेदमामनन्त्याज्यभागौ यजतीति । तत्र किमयमतिदिष्टयोराज्यभागयोरनुवादः, अङ्गान्तरपरिसंख्या, सर्वाङ्गेभ्यो य उपकारः स आज्यभागाभ्यामेव भवतीत्युपकारावच्छेदो वेति सन्देहेऽनुवादमात्रस्य वैफल्यात्परिसंख्यायाश्च प्रतिषेधविषयत्वादङ्गान्तरप्रतिषेधस्य च वाक्यादप्रतीतेरुपकारावच्छेद एवेति सिद्धान्तितम् तद्वन्नात्रेति भावः । कुत इत्यत आह नहीति । गृहमेधीये विकृतिकर्मैव गृहमेधीयः आज्यभागातिरिक्तमङ्गजातं स्वोपकाराय नापेक्षते, प्रकृतिस्त्वपेक्षते, अत्र त्वेकमेव विज्ञानं शाखान्तरीयाङ्गमेतच्छाखिभिरनुष्ठीयमानं नापेक्षते शाखान्तरिभिरनुष्ठीयमानं सदपेक्षते इति विरुद्धमिति भावः ।

(४) भाष्यस्थं वाजसनेयिशाखागतउद्गीथब्राह्मणं व्याचष्टे द्वया इति ।

परिकल्पितमतयः। तामसवृत्तिप्रधाना असुरा असुभिः प्राणैरनिन्द्रियैरगृहीतैस्तेषुतेषु विषयेषु रमन्त इत्यसुरा अत एव ते ज्यायांसो, (१)यतोऽमी तत्त्वज्ञानवन्तः कानीनसास्तु देवाः, अज्ञानपूर्वकत्वात्तत्त्वज्ञानस्य। प्राणस्य प्रजापतेः सात्विकवृत्त्युद्भवस्तामसवृत्त्याभिभवः कदाचित्। कदाचित्तामसवृत्त्युद्भवोऽभिभवश्च सात्विकया वृत्तेः सेयं स्पर्धा। 'ते ह देवा ऊचुः, हन्तासुरान्यज्ञ उद्गीथेनात्ययाम असुरान् जयामास्मिन्नाभिचारिके यज्ञे उद्गीथलक्षणसामभक्त्युपलक्षितेनौद्गात्रेण कर्मणेति, ते ह वाचमूचुरि'त्यादिना सन्दर्भेण वाक्प्राणचक्षुःश्रोत्रमनसामासुरपाप्मविद्धतया निन्दित्वा अथ हेममासन्यमास्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यं प्राणं प्राणाभिमानवतीं देवतामूचुस्त्वन्न उद्गायेति। तथेत्यभ्युपगम्य तेभ्य एव प्राण उदगायत् ते सुरा विदुरनेन प्राणेनोद्गात्रा नोऽस्मान् देवा अत्येष्यन्तीति। तमभिद्रुत्य (२)पाप्मनाऽविध्यन्नसुराः। यथाऽश्मानमृत्वा प्राप्य मृद्वा लोष्टो वा विध्वंसत एवं विध्वंसमाना विष्वञ्चोऽसुरा विनेशुः। तदेतत्संक्षिप्याह—"वाजसनेयक" इति। (पृ० ७६१ पं० १२) तथा छान्दोग्येप्येतदुक्तमित्याह—"तथा छान्दोग्येपी"ति। (पृ० ७६२ पं १) विषयं दर्शयित्वा विमृशति "तत्र संशय" इति। पूर्वपक्षं गृह्णाति "विद्यैकत्वमिति"। पूर्वपक्षमाक्षिपति "ननु न युक्तमिति"। एकत्रोद्गातृत्वेनोच्यते प्राणः एकत्र चोद्गानत्वेन क्रियाकर्त्रोश्च स्फुटो भेद इत्यर्थः। समाधत्ते "नैष दोष" इति। बहुतररूपप्रत्यभिज्ञानाद प्रत्यभिज्ञायमानं किञ्चिल्लक्षणया नेतव्यम्। (३)न केवलं शाखान्तरे, एकस्यामपि शाखायां दृष्टमेतन्न च तत्र विद्याभेद इत्याह—"वाजसनेयकेऽपि चे"ति। (४)बहुतररूपप्रत्यभिज्ञानानुग्रहाय चोमित्यनेनापि उद्गीथावयवेन उद्गीथ एव लक्षणीय इति पूर्वपक्षः ॥ ६ ॥

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

बहुतरप्रत्यभिज्ञानेऽपि उपक्रमभेदात्तदनुरोधेन चोपसंहारवर्णनादेकस्मिन्वाक्ये तस्यैव चोद्गीथस्य पुनःपुनः सङ्कीर्तनात् लक्षणायां च छान्दोग्ये वाजसनेयके प्रमाणाभावाद् विद्याभेद इति राद्धान्तः। "ॐकारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यान-(पृ० ७६३ पं० ९) मोङ्कारस्य। तथाहि—भूतपृथिव्योषधिपुरुषवाकृग्ऋक्सामना पूर्वस्योत्तरमुत्तरं रसतया सारतयोक्तम्। तेषां सर्वेषां रसतम ओंकार उक्तः छान्दोग्ये। "न च विवक्षितार्थभेद" इति (पृ० ७६४ पं० १०)। एकत्रोद्गीथोद्गातारवुपास्यत्वेन विवक्षितावेकत्र तदवयव ओङ्कार इति। "तथा ह्यभ्युदयवाक्य" इति।

एवं हि श्रूयते "ऽवि वा एतं प्रजया पशुभिरर्द्धयति वर्द्धयति अस्य भ्रातृव्यं यस्य (५)

---

(१) असुराणां ज्यायस्त्वं वृद्धत्वं श्रुत्युक्तमुपपादयति यत इति। कानीनसः—कनीयांसः। तत्र हेतुरज्ञानपूर्वकत्वादिति। अनादि ह्यज्ञानं तत्त्वज्ञानं चरमभावि अतस्तज्जन्यवृत्तिरूपाणां देवानां कनिष्ठत्वमित्यर्थः।

(२) अभिगम्य, अविध्यंस्ताडितवन्तः।

(३) उद्गीथकर्तृत्वमुद्गानक्रियारूपत्वं च शाखाभेदेन श्रूयमाणं न विद्याभेदकमेकस्यां शाखायां विद्यैक्यसम्प्रतिपत्तावपि तद्दर्शनादित्याह न केवलमिति।

(४) सकलैकभक्तिनिर्देशरूपवैषम्यमपि वाजसनेयछान्दोग्ययोः परिहरति बहुतरेति।

(५) यस्य यजमानस्य पुरस्तात् पूर्वं हविरुप्तं देवतार्थं सङ्कल्पितं भवति चन्द्रमाश्च पश्चादभ्युदेति स चतुर्दश्याममावास्याभ्रमवान् मध्यमादिभावेन त्रेधाभूतांस्तण्डुलानग्न्यादिभ्यो दर्शदेवताभ्यः सकाशाद्विभजेत्,

हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमि"ति। तत्र सन्देहः—किं कालापराधे यागान्तरमिदं चोद्यते उत तेष्वेव कर्मसु प्रकृतेषु कालापराधे निमित्ते देवतापनय इति। एष तावदत्र विषयः। अमावास्यायामेव दर्शकर्मार्थं वेदिक्रियाग्निप्रणयनक्रिया व्रतादिश्च यजमानसंस्कारः। दध्यर्थश्च दोहः। प्रतिपदि च दर्शकर्मप्रवृत्तिरित्यनुष्ठानक्रमस्तात्त्विकः। यस्य तु यजमानस्य कृतश्चिद्भ्रमनिबन्धनाच्चतुर्दश्यामेवामावास्याबुद्धौ प्रवृत्तप्रयोगस्य चन्द्रमा अभ्युदीयते। तत्रेदं श्रूयते 'यस्य हविर्निरुप्तमि'ति, तेन यजमानेनाभ्युदितेनामावास्यायामेव निमित्ताधिकारं परिसमाप्य पुनस्तदहरेव वेद्युद्धरणादिकर्म कृत्वा प्रतिपदि दर्शः प्रवर्तयितव्यः। तत्राभ्युदये किं नैमित्तिकमिदं कर्मान्तरं दर्शाच्चोद्यते उत तस्मिन्नेव दर्शकर्मणि पूर्वदेवतापनयनेन देवतान्तरं विधीयत इति। (१)तत्र हविर्भागमात्रश्रवणाच्चरुविधानसामर्थ्याच्च कर्मान्तरम्। यदि हि पूर्वदेवताभ्यो हवींषि विभजेदिति श्रूयेत ततस्तान्येव हवींषि देवतान्तरेण युज्यमानानि न कर्मान्तरं गमयितुमर्हन्ति, किन्तु प्रकृतमेव कर्म तद्धविष्कमपनीतपूर्वदेवताकं देवतान्तरयुक्तं स्यात्। अत्र पुनस्त्रेधा तण्डुलान् विभजेदिति हविष एव मध्यमादिक्रमेण विभागश्रवणात्, अनपनीता हविषि पूर्वदेवता इति पूर्वदेवतावरुद्धे हविषि देवतान्तरमलब्धावकाशं श्रूयमाणं कर्मान्तरमेव गोचरयेत्(२)। अपि च प्राप्ते पूर्वास्मिन्कर्मणि दध्नस्तण्डुलानां पयसस्तण्डुलानां चेन्द्रादिदेवतासम्बन्धश्च विधातव्यः। चरुत्वं चात्र विहितं नास्तीति तदपि विधातव्यम्। तथाप्राप्ते कर्मणि अनेकगुणविधानात् वाक्यं भिद्येत। कर्मान्तरं त्वपूर्वं शक्यमेकेनैव प्रयत्नेनानेकगुणविशिष्टं विधातुमिति निमित्ते कर्मान्तरमेव विधीयते। (३)दर्शस्तु लुप्यते कालापराधादिति प्राप्त, उच्यते—न कर्मान्तरम्, पूर्वदेवतातो हविषो विभागपूर्वं निमित्ते देवतान्तरविधानात्। (४)चर्वर्थस्य चार्थप्राप्तेः। भवेदेतदेवं यदा त्रेधा तण्डुलान् विभजेदिति तण्डुलानां त्रेधा विभागविधानपरमेतद्वाक्यं स्यादपि तु वाक्यान्तरप्राप्त(५)न्तण्डुलानां त्रेधात्वमनूद्य विभजेदित्येतावद्विधत्ते तत्र वाक्यान्तरालोचनया पूर्वदेवताभ्य इति गम्यते। तण्डुलानिति त्वविवक्षितं(६)हविरुभयत्ववत्तया च ये मध्यमा इत्यादीनि वाक्यान्यपनीते पूर्ववद्देवतासम्बन्धे हविषस्तस्मिन्नेव कर्मणि अप्रत्यूहं देवतान्तरसम्बन्धं विधातुं शक्नुवन्ति। तथा च द्रव्यमुखेन प्रकृतमुखप्रत्यभिज्ञानाद्देवतान्तरसम्बन्धेऽपि न कर्मान्तरकल्पना भवितुमर्हति। ततश्च समा-

---

विभज्य च दात्रग्न्यादिदेवताभ्यो निर्वपेदित्यर्थः। (१) पूर्वपक्षमाह तत्रेति।

(२) अयम्भावः—पूर्वदेवताभ्योऽग्न्यादिभ्यो हवींषि विभजेत् इत्यनेन वाक्येन विहिते उत्पत्तिशिष्टदेवतावरोधस्य वाक्येनैव कारितत्वात् पूर्वकर्मणि देवतान्तरनिवेशसम्भवे सति न कर्मान्तरत्वं स्यात्, हविर्भागविभागविधाने तूत्पत्तिशिष्टदेवतावरोधाद्वाजिनेज्यावत् कर्मान्तरत्वमित्यर्थः।

(३) कर्मान्तरविधानपक्षे प्रारब्धदर्शप्रयोगस्य गतिमाह दर्शस्त्विति।

(४) उत्पत्तिशिष्टदेवतावरोधं परिहृत्य वाक्यभेदं परिहरति चर्वर्थस्येति।

(५) ये मध्यमा इत्यादिवाक्यैः प्राप्तामित्यर्थः।

(६) दर्शपूर्णमासयोर्यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति आम्नातम्। उभयं दधिपयः। तत्र श्रुतत्वाद्धविषदुभयत्वमपि निमित्तान्तर्भूतमिति भाष्योभयत्वमविवक्षितमिति सिद्धान्तितन्तद्दित्यर्थः।

तेऽपि नैमित्तिकाधिकारे नित्याधिकारासिद्ध्यर्थं तान्येव पुनः कर्माण्यनुष्ठेयानि । न च दधनि चरुमिति चरुसत्म्यर्थयोर्विधानं तयोरप्यर्थप्राप्तत्वात् । प्रकृते हि कर्मणि तण्डुलपेषणप्रथनं पुरोडाशपाकादि दधिपयसी च प्राप्तानि, तत्राभ्युदयानिमित्ते दधियुक्तानाम्पयोयुक्तानाञ्च तण्डुलानां विभजेदिति वाक्येन पूर्वदेवतापनयं कृत्वा ये मध्यमा इत्यादिभिर्वाक्यैर्देवतान्तरसम्बन्धः कृतः । (१)न च प्रभूतदधिपयसंसक्तैरल्पैस्तण्डुलैः पुरोडाशक्रिया सम्भवति, इति पुरोडाशनिवृत्तौ तदर्थस्य प्रथनस्यापि निवृत्तिरनिवृत्तस्तु पाकोऽपवादभावात्तथा चार्थप्राप्तश्चोच्यते । भवतु वा अनेकवाक्यकल्पनम् , (२)प्रकृताधिकारावगमबलादस्यापि न्याय्यत्वादिति । तस्मात्तदेवेदं कर्म न तु कर्मान्तरमिति सिद्धम् । पशुकामवाक्ये स्वपूर्वकर्मविधिरभ्युदयवाक्यसारूप्येऽपि यः पशुकामः स्यात्सोमावास्यायामिष्ट्वा वत्सानपाकुर्यात्,ये स्थविष्ठास्तानग्नये सनिमतेष्टाकपालं निर्वपेत् , ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम् । ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति । अत्र हि अमावास्यायामिष्ट्वेति समाप्ते यागे पशुकामेष्टिविधानं नात्र पूर्वस्य कर्मणोऽनुवृत्तेर्यागान्तरविधिरिति युक्तम् , परोवरीयस्त्वादिवद् ,यथोद्गीथोपासनासाम्येऽपि आदित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनातः परोवरीयस्त्वगुणविशिष्टोद्गीथोपासना भिन्ना तद्वदिदमपीति । परस्मात्परश्च वराच्च वरीयानिति परोवरीयानुद्गीथः परमात्मरूपः (३)सम्पन्नः । अत एव अनन्तः परमात्मदृष्टिमुद्गीथे भावयितु'माकाशो ह्येवैभ्यो भूतेभ्यो ज्यायानि'त्याकाशशब्देन परमात्मानं निर्दिशति ॥ ७ ॥

## सञ्ज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

स्फुटतरे भेदावगमे सञ्ज्ञैकत्वं नाभेदसाधनमतिप्रसङ्गापातात् । अपिच श्रुत्यक्षरालोचनयाभेदप्रत्ययोऽन्तरङ्गश्चानपेक्षश्च । सञ्ज्ञैकत्वं तु श्रुतिबाह्यतया बहिरङ्गं च पौरुषेयतया सापेक्षञ्च । तस्माद्दुर्बलं नाभेदसाधनायालमिति ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

"अध्यासो नामे"ति ( पृ० ७६६ पं० १६ )। गौणी (४)बुद्धिरध्यासः । यथा माणवकेऽनिवृत्तायामेव माणवकबुद्धिव्यपदेशवृत्तौ सिंहबुद्धिव्यपदेशावृत्तिः सिंहो माणवक इति । एवं प्रतिमायां वासुदेवबुद्धिर्नाम्नि च ब्रह्मबुद्धिस्तथोंकार उद्गीथबुद्धिव्यपदेशाविति । अपवादैकत्वं विशेषणानि चोक्तानि । (५)एकार्थेपि च शब्दद्वयप्रयोगो दृश्यते । यथा वैश्वदेव्यामिक्षा विज्ञानमानन्दम् । व्याख्यायाञ्च पर्यायाणामपि सहप्रयोगो यथा सिन्धुरः करी

---

( १ ) नन्वेवमपि दधिपयसोस्तण्डुलानां च मिश्रणमेव भवति कथमाधिकरणार्थलाभस्तत्राह नचेति । ऽ्यधिकगवां दोहविधानाद्दधिपयसोः प्रभूतत्वम् ।

( २ ) प्रकृतेति । प्रकृतस्य दर्शपूर्णमासकर्मणो द्रव्यद्वारेणाधिकारावगमात् सम्बन्धावगमादगत्या वाक्यभेदस्य न्याय्यत्वादित्यर्थः ।

( ३ ) भवतु परस्मात्स्वरमाणादेः परोवराच्च तस्मादेव वरीयान् वरतर उद्गीथः कथमनन्तस्तत्राह परमात्मरूप इति । परमात्मदृष्ट्यध्यासात्तद्रूपसम्पत्तिरित्यर्थः ।

( ४ ) भाष्योक्तस्य भेदबुद्धावनुवर्तमानायामन्यतरबुद्धिरूपस्याध्यासलक्षणस्य स्मृतिरूप इत्यत्राविवेकपूर्वकत्वस्य वर्णितत्वादयुक्तत्वमत आह गौणीति ।

( ५ ) उद्गीथोङ्कारशब्दयोरैक्यार्थे पर्यायत्वात्सहप्रयोगादेकत्वपक्षानुत्थानमाशङ्क्याहैकार्थेपीति ।

पिकः कोकिल इति । विमृश्यानध्यवसायलक्षणं पक्षं गृह्णाति "तत्रान्यतमे"ति ( पृ० ७६७ पं० १० )। सिद्धान्तमाह । "इदमुच्यते व्याप्तेश्च" (१)प्रत्यनुवाकम्प्रत्यृचमुपक्रमे च समाप्तौ चोङ्कारः सर्ववेदव्यापीति किन्तोऽयमोंकारस्तत्तदाप्त्यादिगुणविशिष्टस्तस्मैतस्मै कामावाप्त्यादिफलायोपास्यत्वेनाधिक्रियत इत्यपेक्षायामुद्गीथपदेनेति विशिष्यते । उद्गीथपदेनोंकाराद्यवयवघटितसामभक्तिभेदाभिधायिना समुदायस्यावयवभावानुपपत्तेस्तत्सम्बन्ध्यवयव ओङ्कारो लक्ष्यते, न पुनरोङ्कारेणावयविन उद्गीथस्य लक्षणा । ओंकारस्यैवोपरिष्टात्तु तत्तद्गुणविशिष्टस्य तत्तत्फलविशिष्टस्य चोपव्याख्यास्यमानत्वात् । दृष्टश्च समुदायशब्दोऽवयवे लक्षणया यथा ग्रामो दग्धः पटो दग्ध इति, तदेकदेशदाहे अध्यासे तु लक्षणा फलकल्पना च । तथा (२)ह्याप्त्यादिगुणकप्रणवोपासनादिदमुद्गीथतोपासनम्प्रणवस्यान्यत्र चात्राप्त्यादि उपासनेष्विव फलं श्रूयते । तस्मात्कल्पनीयम् (३)उद्गीथसम्बन्धिप्रणवोपासनाधिकारपरे वाक्ये परार्थे नायं दोषः । अपि च गौण्या वृत्तेर्लक्षणावृत्तिर्बलीयसी लाघवात् । लक्षणया हि लक्षणीयपरत्वं पदस्य तस्यैव वाक्यार्थान्तरभावात् । यथा गङ्गायां घोष इति लक्ष्यमाणस्य तीरस्य वाक्यार्थेन्तर्भावो ऽधिकरणतया । गौर्वाहीक इत्यत्र तु गोसम्बन्धितिष्ठन्मूत्रपुरीषादिलक्षणया न तत्परत्वं गोशब्दस्य, अपि तु तत्कक्षाध्यवसिततद्गुणयुक्तवाहीकपरत्वमिति गौण्या वृत्तेर्दुर्बलत्वम्, (४)तदिदमुक्तं "लक्षणायामपि त्वि"ति (पृ० ७६८ पं० १०)। गौण्यपि वृत्तिर्लक्षणावयवत्वाल्लक्षणोक्ता । (५)यद्यपि वैश्वदेवीपदमामिक्षायाम्प्रवर्तते तथाप्यर्थभेदः स्फुटतरः । आमिक्षापदं हि रूपेणामिक्षायाम्प्रवर्तते । वैश्वदेवीपदन्तु तस्यामेव विश्वदेवविशिष्टायाम् । एवं हि विज्ञानानन्दयोरपि स्फुटतरः प्रवृत्तिनिमित्तभेदः सत्यपि ब्रह्मण्यैकार्थ्ये । न च व्याख्यानमुभयोरपि प्रसिद्धार्थत्वात्भिन्नार्थत्वाच्च । शेषमतिरोहितार्थम् ॥ ९ ॥

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

एवं शब्दस्य सन्निहितप्रकारभेदपरामर्शार्थत्वात्साक्षाच्छब्दोपस्थापितस्य च सन्निधानात् शाखान्तरगतस्य चानुक्तमतथा सन्निधानाभावान्न कौषीतकिप्राणसम्वादवाक्ये प्राणस्य वसिष्ठत्वादिभिर्गुणैरुपास्यत्वमपि तु ज्येष्ठश्रेष्ठत्वमात्रेणेति पूर्वः पक्षः ।

सिद्धान्तस्तु सत्यं सन्निहितं परामृशति एवङ्कारो न तु शब्दोपात्तमात्रं सन्निहितम्, किन्तु यच्छब्दाभिहितार्थनान्तरीयकतया प्राप्तं तदपि हि बुद्धौ सन्निहितं सन्निहितमेव । यथा

---

( १ ) ओङ्कारस्य शब्दाविशेषात्मकस्य निखिलवेदव्याप्तिमाह प्रत्यनुवाकमिति । तद्विशेषज्ञानार्थमुद्गीथदृष्टेर्विशेषणमित्याह किन्तोयामिति ।

( २ ) ननु किमिति फलकल्पना, आप्त्यादिफलस्य श्रुतत्वादत आह आप्त्यादिगुणकेति । ओङ्कार उद्गीथस्तस्मिन्नाप्त्यादिगुणदृष्टेस्तस्मिन्नाप्त्यादिदृष्टेश्चोपास्यरूपभेदाद्भेद इत्यर्थः ।

( ३ ) सिद्धान्ते फलकल्पनां वारयति उद्गीथसम्बन्धीति । उद्गीथभक्तिसम्बन्धिनः प्रणवस्योपासनायाः अधिकारप्रतिपादनं, तत्परवाक्ये तु न फलकल्पनादोषः, आप्त्यादिदृष्टिविधानायोमित्येतदक्षरमिति वाक्येन विशिष्टप्रणवसमर्पणेन पृथगुपासनविध्यभावात् । आप्त्यादिगुणविशिष्टप्रणवोपासनायाश्च 'आपयिता ह वै कामानां भवती'त्यादिना फलश्रवणाचेत्यर्थः ।

( ४ ) वाच्यार्थं विहाय यल्लक्ष्यते तन्मात्रपरत्वमिति लक्षणायामव्यवधानं गौण्यां तु लक्षणीयार्थद्वाराऽर्थान्तरे शब्दस्य वृत्त्या व्यवधानमिति तयोर्भेदो बोध्यः ।

( ५ ) एवमध्यासपक्षं दूषयित्वैकत्वपक्षं दूषयति यद्यपीति ।

यस्य पर्णमयी जुहूर्भवति इत्यव्यभिचारितक्रतुसमन्वया जुह्वोपस्थापितः क्रतुः । तस्मादुपास्यफलप्रत्यभिज्ञाना(१)तदव्यभिचारिणः प्रकारभेदस्येहानुक्तस्यापि बुद्धौ सन्निधानात्प्रकृतपरामर्शिनैवङ्कारेण परामर्शो युक्त इति सिद्धं कौषीतकिब्राह्मणगतेन तावदेवङ्कारेण शक्यते परामृष्टुम् । तथाभ्युपेत्यापि ब्रूम इत्याशयवता भाष्यकृतोक्तं "तथापि तस्मिन्नेव विज्ञाने वाजसनेयेऽपि ब्राह्मणगतेनैति श्रुतहानि"रिति । (पृ० ७७० पं० ७) (२)केवलस्य श्रुतस्य हानिरितरसहितस्य चाश्रुतस्य कल्पना न चेत्यर्थः । अतिरोहितमन्यत् ॥ १० ॥

## आनन्दादयः प्रधानस्य ॥ ११ ॥
## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥
## इतरे त्वर्थसामान्यात् ॥ १३ ॥

(३)गुणवदुपासनाविधानस्य वास्तवगुणव्याख्यानाद्विवेकार्थमिदमधिकरणम् । यथैकस्य ब्रह्मणः सम्पद्वामत्वादयः सत्यकामादयश्च गुणा न सङ्कीर्येरन् एवमानन्दविज्ञानत्वाश्रयो विभुत्वनित्यत्वादिभिर्गुणैः प्रदेशान्तरोक्तैर्न सङ्कीर्येरन् , तत्सङ्करे वा सम्पद्वामत्वादयोऽपि सत्यकामादिभिः सङ्कीर्येरन् नहि ब्रह्मणो धर्मिणः सत्वे कश्चिद्विशेष इति पूर्वः पक्षः ।

राद्धान्तस्तु वास्तवविधेययोर्वस्तुधर्मतया चानुष्ठेयतया चाव्यवस्थाव्यवस्थे व्यवतिष्ठेते । वस्तुधर्मो हि यावद्वस्तु व्यवतिष्ठते, नासावेकत्रोक्तोऽन्यत्रानुक्तो नास्तीति शक्यं वक्तुम् । विधेयस्तु पुरुषप्रयत्नतन्त्रः, पुरुषप्रयत्नश्च यत्र यावद्गुणविशिष्टे ब्रह्मणि चोदितः स तावत्येवावतिष्ठते नाविहितमपि गुणं गोचरीकर्तुमर्हति, तस्य विधितन्त्रत्वाद्विधेश्च व्यवस्थानात् । तस्मादानन्दविज्ञानादयो ब्रह्मतात्त्वात्मतयोक्ता यत्रयत्र ब्रह्म श्रूयते तत्रतत्रानुक्ता अपि लभ्यन्ते । सम्पद्वामादयश्चोपासनाप्रयत्नविधिविषया यथाविध्यवतिष्ठन्ते न तु यथावस्त्विति सिद्धम् । प्रियशिरस्त्वादीनां तूपास्यत्वमारोप्य न्यायो दर्शितः । तस्य तु विषयः सम्पद्वामादिरुक्तः । मोदनमात्रं मोदः, प्रमोदः प्रकृष्टो मोदः ताविमौ परस्परापेक्षावुपचयापचयौ ॥११—१३॥

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

(४)'इन्द्रियेभ्यः परा ह्यर्था' इति किमत्र सर्वेषामेवार्थादीनां परत्वं प्रतिपिपादयिषितम् , आहो पुरुषस्यैव तत्प्रतिपादनार्थं चेतरेषां परत्वप्रतिपादनम् । तत्र प्रत्येकमर्थादिपरत्वप्रति-

---

( १ ) उपास्यप्राणस्य प्रत्यभिज्ञानात्तदातिलक्षणफलस्य प्रत्यभिज्ञानाच्चेत्यर्थः ।

( २ ) ननु शाखान्तरीयगुणोपसंहारेऽपि स्वशाखागतगुणस्वीकारात्कथं श्रुतहानिप्रसक्तिर्यतो भाष्ये निषिध्यतेऽत आह केवलस्येति । केवला हि स्वशाखायां श्रुतास्तेषां कैवल्यहानिरश्रुतोपसंहारे सतीति शङ्केत्यर्थः ।

( ३ ) ननु वेद्यब्रह्मैक्याद्गुणोपसंहार उत्सर्गप्राप्तः, न चात्रापवादकमेवंशब्दवत् किञ्चिदुपलभ्यते तत्किमर्थमधिकरणमिदमारभ्यतेऽत आह गुणेति । यद्यानन्दादयो ब्रह्मैक्यात्सर्वशाखासूपसंह्रियेरन् तर्हि संयद्वामत्वादयः किमिति नोपसंहृता इति प्रतिबन्द्याशङ्कायां संयद्वामत्वादय उपासनार्थं विधेया, सत्यज्ञानादयस्तु वस्तुतत्त्वप्रमित्यर्था इति विशेषप्रदर्शनेन प्रतिबन्दीपरिहारार्थमयमारम्भ इत्यर्थः ।

( ४ ) ब्रह्मस्वभावभूतोपसंहार्यधर्मचिन्तनानन्तरमस्वभावस्यानुपसंहार्यस्याप्यर्थादिपरत्वरूपधर्मस्य ब्रह्मप्रतिपत्त्युपायत्वचिन्तनादानन्दाधिकरणाध्यानाधिकरणयोरवान्तरसंगतिरत्र बोध्या ।

पादनश्रुतेः श्रूयमाणतत्तत्परत्वे च सम्भवति न तत्तदातिक्रमणे सर्वेषामेकपरत्वाध्यवसानं न्याय्यम् । न च प्रयोजनाभावादसम्भवः, सर्वेषामेव प्रत्येकं परत्वाभिधानस्याध्यानप्रयोजनत्वात् । तत्तदाध्यानानां च प्रयोजनवत्त्वस्मृतेः । तथा हि स्मृतिः—

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं (१)शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते । इति ॥

प्रामाणिकस्य वाक्यभेदस्याभ्युपेयत्वात् प्रत्येकं तेषामर्थादीनां परत्वपराण्येतानि वाक्यानीति प्राप्ते, उच्यते—इन्द्रियेभ्यः परा ह्यर्था इत्येष तावत्सन्दर्भो वस्तुतत्त्वप्रतिपादनपरः प्रतीयते नाध्यानविधिपरः । तदश्रुतेः, तदत्र यत्प्रत्ययस्य साक्षात्प्रयोजनवत्त्वं दृश्यते तत्प्रत्ययपरत्वं सर्वेषाम् । दृष्टं च विष्णोः परमपदज्ञानस्य निखिलानर्थसंसारकारणाविद्योपशमः, तत्त्वज्ञानोदयस्य विपर्यासोपशमलक्षणत्वेन तत्रतत्र दर्शनात् । अर्थादिपरत्वप्रत्ययस्य तु न दृष्टमस्ति प्रयोजनम् । न च दृष्टे सम्भवति अदृष्टकल्पना न्याय्या । न च परमपुरुषार्थहेतुपरत्वे सम्भवति अवान्तरपुरुषार्थतोचिता । तस्माद्दृष्टप्रयोजनवत्त्वात्पुरुषपरत्वप्रतिपादनार्थोऽयं सन्दर्भ इति गम्यते । किं चादरादप्ययमेवास्यार्थ इत्याह **"अपि च तत्प्रतिषेधेने"**ति । नन्वत्राध्यानविधिर्नास्ति तत्कथमुच्यते आध्यानायेत्यत आह—**"आध्यानाये"**ति ॥ १४ ॥

## आत्मशब्दाच्च ॥ १५ ॥

अनधिगतार्थप्रतिपादनस्वभावत्वात्प्रमाणानां विशेषतश्चागमस्य पुरुषशब्दवाच्यस्य चात्मनः स्वयं श्रुत्यैव दुरधिगमत्वावधारणात् , वस्तुतश्च दुरधिगमत्वात् । अर्थादीनां च सुगमत्वात् तत्परत्वमेवार्थादिपरत्वाभिधानस्येत्यर्थः । श्रुतेराशयातिशय(२)इवाशयातिशयः । तत्तात्पर्यतेति यावत् । किञ्च श्रुत्यन्तरापेक्षिताभिधानादप्येवमेवार्थादिपरत्वे तु स्वरूपेण विवक्षितेनापेक्षितं श्रुतिराचष्टे इत्याह—**"अपि च सोऽध्वनः पारमाप्नोति"**इति ॥१५॥

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

(३)श्रुतिस्मृत्योर्हि लोकसृष्टिः परमेश्वराधिष्ठिता । परमेश्वराद्धिरण्यगर्भकर्तृको-

---

( १ ) इदमपि मन्वन्तरविशेषणम् । तत्र भूतसूक्ष्मशब्दादिध्यायिनो भौतिकाः । करणाभिमान्यादित्यादिदेवताध्यायिन आभिमानिकाः । अन्तःकरणध्यायिनो बौद्धाः ।

( २ ) अचेतनायाः श्रुतेरभिप्रायायोगाल्लाध्ये आशयशब्दो गौण इत्याहाशयातिशय इवेति । किञ्चार्थादिपरत्वे वाक्यभेदेन प्रतिपादिते प्रकरणोत्कर्षः स्यान्निर्गुणविद्यायान्तदनुयोगात्पुरुषपरत्वमात्रप्रतिपादने चैकवाक्यत्वं लभ्यते इत्याह किञ्चेति । एतत्प्रकरणस्थं सोऽध्वन इत्यादिवाक्यमेव श्रुत्यन्तरं बोध्यम् ।

( ३ ) ननु एक एवाग्र आसीदिति प्रागुत्पत्तेरात्मैकत्वावधारणात् ऐक्षतेतीक्षितृत्वश्रवणाच्च परमेश्वरे गम्यमाने कथं हिरण्यगर्भशङ्केत्यत आह श्रुतिस्मृत्योरिति । आत्मा वेति वाक्यं हिरण्यगर्भपरं महाभूतसृष्ट्यविषयत्वे सति लोकसृष्टिविषयत्वात् , आत्मैवेदमग्र आसीत्पुरुषविधः, स वै शरीरी प्रथम इति च वाक्यवदिति अनुमानात्तु लिङ्गद्वयमन्यथा नेयमित्यर्थः ।

पलब्धा सेयमिह महाभूतसर्गमनभिधाय प्राथमिकी लोकसृष्टिरुपलभ्यमानावान्तरेश्वरकार्यो प्रागुत्पत्तेरात्मैकत्वावधारणं चावान्तरेश्वरसम्बन्धितया गमयति । पारमेश्वरसर्गस्य महाभूताकाशादित्वादस्य च तद्विपरीत्यात् । (१)अस्ति हि तस्यैवैकस्य विकारान्तरापेक्षयाग्रत्वमस्ति चेक्षणम् । (२)अपि चैतस्मिन्नैतरेयके पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकैव लोकसृष्टिरुक्ता । तदनुसारादप्येतदेव विज्ञायते । अपि च ताभ्यो गामानयेदित्यादयश्च व्यवहाराः श्रुत्योक्ता विशेषवत्परमात्मसु प्रसिद्धाः । ततोप्यवान्तरेश्वर एव विज्ञायते । आत्मशब्दप्रयोगश्चात्रापि(३) दृष्टस्तस्मादपरात्माभिलापोऽयमिति प्राप्ते—

उच्यते—परमात्मनो गृहीतिरिह यथा इतरेषु सृष्टिश्रवणेषु 'एतस्मादात्मन आकाशः सम्भूत' इत्यादिषु । तस्मादुत्तरास ऐक्षतेतीक्षणपूर्वकस्रष्टृत्वश्रवणादात्मेत्यवधारणाच्च । एतदभिसंहितम् । मुख्यं तावत्सर्गात्प्राक्केवलत्वमात्मपदत्वं स्रष्टृत्वं च परमेश्वरस्यात्र भवतः । तदसत्यामनुपपत्तौ नान्यत्र व्याख्यातुमुचितम् । न च महाभूतसृष्ट्यनभिधानेन लोकसृष्ट्यभिधानमनुपपत्तिबीजम् । आकाशपूर्विकायां वस्तुतो ब्रह्मणः सृष्टौ यथा क्वचित्तेजःपूर्वकसृष्ट्यभिधानं न विरुध्यते 'एतस्मादात्मन आकाशः सम्भूत' इति दर्शनात् । आकाशं वायुं सृष्ट्वेति हि तत्र पूरयितव्यमेवमिहापि महाभूतानि सृष्ट्वेति कल्पनीयम् । सर्वशाखाप्रत्ययत्वेन ज्ञानस्य श्रुतिसिद्ध्यर्थम् श्रुतोपलब्धौ यत्नवता भवितव्यं न पुनः श्रुते महाभूतादित्वे सर्गस्य शैथिल्यमादरणीयम् । अपि च स्वाध्यायविध्यधीनग्रहणो वेदराशिरध्ययनविध्यापादितप्रयोजनवदर्थाभिधानो यथायथा प्रयोजनाधिक्यमाप्नोति तथातथानुमन्यतेतराम् । यथा चास्य ब्रह्मगोचरत्वे परमपुरुषार्थौपयिकत्वं नैवमन्यगोचरत्वे, तदिदमुक्तम्—**"योऽप्ययं व्यापारविशेषानुगम" इति** । (४)न च लोकसर्गोपि हिरण्यगर्भव्यापारोऽपि तु तदनुप्रविष्टस्य परमात्मन इत्यत्रैवो(५)क्तम् । तस्मादात्मैवाग्र इत्युपक्रमात्तद्व्यापारेण चेक्षणेन मध्ये परामर्शादुपरिष्टाच्च (६)भेदजातं महाभूतैः सहानुक्रम्य ब्रह्मप्रतिष्ठत्वेन ब्रह्मण उपसंहाराद्ब्रह्माभिलापत्वमेवास्येति निश्चीयते । यत्र तु पुरुषविध्यादिश्रवणं तस्य भवेत्त्वन्यपरत्वं गत्यन्तराभावादिति सर्वमवदातम् ।

अपरः(७) कल्पः । सदुपक्रमस्य सन्दर्भस्यात्मोपक्रमस्य च किमैकार्थ्यमाहो स्विदर्थभेदः । (८)तत्र सच्छब्दस्याविशेषेणात्मनि चात्मनि च प्रवृत्तेनात्मार्थत्वं किन्तु समस्तवस्त्व-

---

(१) पारमेश्वरलिङ्गस्यस्यान्यथानयनप्रकारं दर्शयति अस्ति हीत्यादिना ।

(२) सन्दंशन्यायं वक्तुं पूर्ववाक्यमनुसन्धत्ते अपि चैतस्मिन्निति । अथातो रेतसः सृष्टिः प्रजापते रेतो देवा इत्यादिना प्रजापतिकर्तृका सृष्टिरुक्तेत्यर्थः ।

(३) आत्मैवेदमग्र आसीत्पुरुषविध इति वाक्ये ।

(४) महाभूतानुपसंहारेऽपि परमात्मा प्रत्येतुं शक्य इत्याह नचेति ।

(५) संज्ञामूर्तिक्लृप्त्यायाधिकरणे ( २ अ० ४ पा० २०. सू० ) एव ।

(६) एष ब्रह्मैष इन्द्र इत्यादिवाक्ये च ।

(७) पूर्ववर्णके वियैक्यगुणोपसंहारानिरूपणात्पादसङ्गतिसिध्यर्थं वर्णकान्तरमारभते अपर इति । कल्पः—प्रकारः ।

(८) पूर्वं वाक्यैक्यबलादर्थाद्भिपरत्वमविवक्षित्वा वियैक्यमुक्तं अत्र तु भिन्नार्थोपक्रमेण वाक्यभेदाद्वियाभेद इति पूर्वपक्षयति तत्रेति ।

-नुगतसत्तासामान्यार्थत्वं तथा चोपक्रमभेदाद्भिन्नार्थत्वम् । स आत्मा तत्त्वमसीति चोपसंहार उपक्रमानुरोधेन सम्पत्त्यर्थतया व्याख्येयः । तद्धि सत्सामान्यं परमात्मतया सम्पादनीयम् । तद्विज्ञानेन च सर्वविज्ञानं महासामान्यस्य सत्तायाः समस्तवस्तुविस्तारव्यापित्वादित्येवं प्राप्ते,

उच्यते—आत्मगृहीतिर्वाजसनेयिनामिव छान्दोग्यानामप्युत्तरात्स आत्मा तत्त्वमसीति तादात्म्योपदेशात् । अस्तु तावदात्मव्यतिरिक्तस्य प्रपञ्चस्य सदसत्त्वाभ्यामनिर्वाच्यतया न सत्त्वं, सत्त्वं त्वात्मधातोरेव तत्त्वेन निर्वाच्यत्वात्तस्मादात्मैव सदिति । अभ्युपेत्याह (१)सच्छब्दस्य सत्तासामान्याभिधायित्वात्प्रतिव्यक्ति च तस्य प्रवृत्तेरात्मनि चान्यत्र च सच्छब्दप्रवृत्तेः संशये सत्युपसंहारानुरोधेन सदेवेत्यात्मन्येवावस्थाप्यते । निर्णीतार्थोपक्रमानुरोधेन ह्युपसंहारवर्णना न पुनः संदिग्धार्थेनोपक्रमेणोपसंहारो वर्णनीयः । (२)अपि च सम्पत्तौ फलं कल्पनीयम् । न च सामान्यमात्रे ज्ञाते विशेषज्ञानसम्भवः । न खल्वाराद्वृक्षे ज्ञाते शिंशपादयस्तद्विशेषा ज्ञाता भवन्ति । तदेवमवधारणादि सर्वमनात्मार्थत्वे स्यादनुपपन्नमिति छान्दोग्यस्यात्मार्थत्वमेवेति सिद्धम् । (३)अत्र च पूर्वस्मिन्पूर्वपक्षे हिरण्यगर्भोपासना सिद्धान्ते तु ब्रह्मभावनेति ॥ १६ ॥ १७ ॥

## कार्याख्यानादपूर्वम् ॥ १८ ॥

विषयमाह "छान्दोगा वाजसनेयिनश्चे"ति । (४)अननं प्राणनं अनः प्राणः तं प्राणमनग्नं कुर्वन्तः अनग्नताचिन्तनमिति मन्यन्त इति मननं ज्ञानं तद्ध्यानपर्यन्तमिति चिन्तनमुक्तम् । संशयमाह "तत्किमि"ति । खुररवमात्रेण(५)पातत उभयविधानपक्षं गृहीत्वा मध्यमं पक्षमालम्बते पूर्वपक्षी "अथ वाचमनमेवे"ति । यद्येवमनग्नतासङ्कीर्तनस्य किं प्रयोजनमित्यत आह—"तस्यैव तु स्तुत्यर्थमि"ति । अयमभिसन्धिः । यद्यपि स्मार्तं प्रायत्यार्थमाचमनविधानमस्ति तथापि प्राणोपासनप्रकरणे विधानात्तदङ्गत्वेनाप्राप्तमिति विधानमर्थवद्भवति अनृतवदनप्रतिषेध इव स्मार्ते ज्योतिष्टोमप्रकरणे समाम्नातो नानृतं वदेदिति प्रतिषेधो ज्योतिष्टोमाङ्गतयार्थवानिति ।

राद्धान्तमाह "एवं प्राप्त" इति । चोदयति "नन्वियं श्रुति"रिति । परिहरति "ने"ति । तुल्यार्थयोर्मूलमूलिभावो नातुल्यार्थयोरित्यर्थः । अभिप्रायस्थं] पूर्वपक्षबीजं निराकरोति "न चेयंश्रुति"रिति । (६)क्रत्वर्थपुरुषार्थयोरनृतवदनप्रतिषेधयोर्युक्तमपौ-

---

(१) सच्छब्दस्य सामान्यवचनत्वेऽभ्युपेते वाक्यशेषस्य निर्णायकत्वमाह सच्छब्दस्येति । सदेवेत्येतद्वाक्यमात्मन्येव व्यवस्थाप्यत इत्यर्थः ।

(२) अदृष्टफलकल्पनाप्रसङ्गाच्च न सत्तायामात्मसम्पत्तिरित्याहापि चेति ।

(३) वर्णकद्वयप्रयोजनं विभजते अत्र चेति । पूर्ववर्णकस्य–पूर्वपक्षे ऐतरेयकवाक्यं हिरण्यगर्भोपासितपरं, तत्सिद्धान्ते तु तद्वाक्ये ब्रह्मभावनापरं ब्रह्मत्वप्रतिपादनद्वारेणार्थात् तद्भावनायां पुरुषप्रवृत्तिहेतुरित्यर्थः । अस्मिंस्तु वर्णके पूर्वपक्षे छान्दोग्यवाक्यं सत्तासामान्ये ब्रह्मत्वसम्पत्त्यर्थं वाजसनेयिवाक्यं त्वात्मनो ब्रह्मत्वगोचरमिति विद्याभेदः । सिद्धान्ते द्वे अपि वाक्ये प्रत्यग्ब्रह्मैक्यगोचरे इति भेदोऽनन्तरोक्तत्वाद ज्ञायत एवेति नोक्तः ।

(४) अनशब्दस्य प्राणवृत्तौ योगमाहाननमिति । अननं चेष्टां करोतीत्यन इत्यर्थः ।

(५) यथा ध्वनिर्णीयैव खुरशब्दमात्रेणाश्वो धावतीत्युच्यते एवमेतदपीत्यर्थः ।

(६) स्मार्तोऽनृतवदनप्रतिषेधः पुरुषार्थत्वाज्ज्योतिःष्टोमेन प्राप्नोतीति ज्योतिष्टोमे पृथक्प्रतिषेधोऽर्थवान् , आचमनविधिस्तु स्मार्तो 'द्विजो नित्यमुपस्पृशेत्' इत्यादिः सकलकर्मगोचरः प्राणोपासनेपि प्राप्नोतीति तदङ्गाचमनविषयत्वे श्रुतेरनुवादकत्वं स्यादित्याह क्रत्वर्थेति ।

नरुक्त्यम् , इह तु स्मार्तमाचमनं सकलकर्माङ्गतया विहितं प्राणोपासनाङ्गमपीति व्यापकेन स्मार्तेनाचमनविधिना पुनरुक्तत्वादनर्थकम् । न च स्मार्तस्यानेन पौनरुक्त्यं तस्य च व्यापकत्वादेतस्य च प्रतिनियतविषयत्वादिति । मध्यमं पक्षमपाकृत्य प्रथमपक्षमपाकरोति—**"अत एव नोभयविधानम्"** । युक्त्यन्तरमाह **"उभयविधाने चे"ति** । उपसंहरति **"तस्मात्प्राप्तमेवे"ति** । **"न चायमनग्नतावाद"**इति । स्तोतव्याभावे स्तुतिर्नोपपद्यत इत्यर्थः । अपि च मानान्तरप्राप्तेनाप्राप्तं विधेयं स्तूयेत । न चानग्नतासङ्कल्पोऽन्यतः प्राप्तो यतः स्तावको भवेत् । न चाचमनमन्यतोप्राप्तं येन विधेयं सत्स्तूयेतेत्याह **"स्वयं चानग्नतासङ्कल्पस्ये"ति** । अपि चैकस्य कर्मण एकार्थतैवेत्युचितन्तस्य बलवत्प्रमाणवशादनन्यगतित्वे सत्यनेकार्थता कल्प्यते, सङ्कल्पे तु कर्मान्तरे विधीयमाने नायं दोष इत्याह नचैवं सत्येकस्याचमनस्येति । अपि च दृष्टिचोदनासाहचर्यादृष्टिचोदनैव न्याय्या न चाचमनचोदनेत्याह **"अपि च यदिदं किञ्चे"ति** । यथा हि श्वादिमर्यादस्यान्नस्यात्तुमशक्यत्वादन्नदृष्टिश्चोद्यते एवमिहाप्यपां परिधानासम्भवाद्दृष्टिरेव चोद्यत इत्यन्नदृष्टिविधिसाहचर्याद्गम्यते । (१)अशब्दत्वं च यद्यपि दृष्ट्यभ्यवहारयोस्तुल्यं तथापि दृष्टिः शब्ददृश्यनान्तरीयकतया साक्षाच्छब्देन क्रियमाणोपलभ्यते । अभ्यवहारस्त्वध्याहरणीयः कथञ्चियोग्यतामात्रेणेति (२)विशेषः । किं च छान्दोग्यानां वाजसनेयिनां चाचमने प्रायेणाचामन्तीति वर्तमानापदेशः । एवं यत्रापि विधिविभक्तिस्तत्रापि जर्तिलयवाग्वा वा जुहुयादितिवद्विधित्वमविवक्षितम् । मन्यन्त इति त्वप्राप्तार्थत्वात्समिधो यजतीत्यादिवद्विधिरेवेत्याह—**"अपि चाचमन्ती"ति** । शेषमतिरोहितार्थम् ॥ १८ ॥

## समान एवं चाभेदात् ॥ १९ ॥

(३)इहाभ्यासाधिकरणन्यायेन पूर्वः पक्षः । द्वयोर्विद्याविध्योरेकशाखागतयोरगृह्यमाणविशेषतया कस्य को मुख्योऽनुवाद इति विनिश्चयाभावादज्ञातज्ञापनाप्रवृत्तप्रवर्तनारूपस्य च विधित्वस्य स्वरससिद्धेरुभयत्रोपासनाभेदः । (४)न च गुणान्तरविधानायैकत्रानुवाद, उभयत्रापि गुणान्तरविधानोपलब्धेर्विनिगमनाहेत्वभावात्समानगुणानभिधानप्रसङ्गाच्च । तस्मात्समिधो यजतीत्यादिवदभ्यासादुपासनाभेद इति प्राप्ते, उच्यते (५)नैककर्म्यमेकत्वेन प्रत्यभिज्ञा-

---

( १ ) अशब्दत्वान्न सर्वान्नाभ्यवहारश्चोद्यते इति भाष्योक्तमसङ्गतं सर्वान्नदृष्टेरपि सिद्धान्तसम्मताया अश्रुतत्वादित्याशङ्क्याहाशब्दत्वं चेति । तथापीति शब्ददृश्यं शब्दप्रकाशितं ज्ञेयं प्राणस्य सर्वान्नत्वं, तन्नान्तरीयकत्वेन दृष्टिर्वर्तिशब्देन क्रियामाणोपलभ्यते अभ्यवहारस्तु न क्रियतेऽपीति न बुद्धिस्थ इति वैषम्यमित्यर्थः ।

( २ ) प्राणस्य समस्तमन्नं श्रुतं प्राणविच्च तदात्मनि, तेनापि सर्वमन्नमभ्यवहर्तव्यमिति योग्यतामात्रेणेत्यर्थः ।

( ३ ) पूर्वाधिकरणे प्राप्ताचमनानुवादेनानग्नताचिन्तनं विधेयमित्युक्तमिह तु वाक्ययोः कस्य विधित्वं कस्य वाऽनुवादत्वमित्यनिर्णयाद्द्वयोरपि विद्याविधित्वमिति पूर्वपक्षमाहेहेति ।

( ४ ) निर्गुणे कर्मणि विहिते तदनुगुणो विधीयते यथाग्निहोत्रं जुहोतीति विहितनिर्गुणकर्मानुवादेन दध्ना जुहोतीति दधिगुणः, शाण्डिल्यविद्याविध्योस्तूभयोरपि सगुणत्वान्नान्यतरस्यानुवादतेत्याह नचेति ।

( ५ ) एकविद्यमित्यर्थः, तत्र हेतुरेकत्वेनेति । उभयत्र मनोमयत्वादिगुणविशिष्टपुरुषप्रत्यभिज्ञानादिति तदर्थः ।

नात् । न चागृह्यमाणविशेषता, यत्र भूयांसो गुणा यस्य कर्मणो विधीयन्ते तत्र तस्य प्रधानस्य विधिरितरत्र तु तदनुवादेन कतिपयगुणविधिः । यथा यत्र च्छत्रचामरपताकाहास्तिकाश्वीयशाक्तीकयाष्टीकधानुष्ककार्पाणिकप्रासिकपदातिप्रचयस्तत्रास्ति राजेति गम्यते न तु कतिपयगजवाजिपदातिभाजि तदमात्ये, तथेहापि । न चैकत्र विहितानां गुणानामितरत्रोक्तिरनर्थिका प्रत्यभिज्ञानदाढर्यार्थत्वात् । अस्तु वा ऽस्मिन्नित्यनुवादो न ह्यनुवादानामवश्यं सर्वत्र प्रयोजनवत्त्वम्, अनुवादमात्रस्यापि(१) तत्रतत्रोपलब्धेः । तस्मात्तदेव बृहदारण्यके ऽप्युपासनं तद्गुणेनोपसंहारादिवदिति सिद्धम् ॥ १९ ॥

**सम्बन्धादेवमन्यत्रापि ॥ २० ॥**

(२)यथैकस्यामपि शाखायां तत्त्वेन प्रत्यभिज्ञानादुपासनस्य तत्र विहितानां धर्माणां सङ्करः, तथा सति सत्यस्यैकस्याभेदान्मण्डलद्वयवर्तिन उपनिषदोरपि सङ्करप्रसङ्गात्तस्येति च प्रकृतपरामर्शत्वाच्छेदः सत्यस्य च प्रधानस्य प्रकृतत्वात् अधिदैवमित्यस्य विशेषणतयोपसर्जनत्वेनाप्रस्तुतत्वात् प्रस्तुतस्य च सत्यस्याभेदात्पूर्ववद्(३)गुणसङ्करः ॥ २० ॥

इति प्राप्त उच्यते—

**न वा विशेषात् ॥ २१ ॥**

(४)सत्यं यत्र स्वरूपमात्रसम्बन्धो धर्माणां श्रूयते तत्रैवंस्वरूपस्य सर्वत्र प्रत्यभिज्ञायमानत्वात्तन्मात्रसम्बन्धित्वाच्च धर्माणाम् । यत्र तु सविशेषणं प्रधानमवगम्यते तत्र सविशेषणस्यैव तस्य धर्माभिसम्बन्धो न निर्विशेषणस्य नाप्यन्यविशेषणसहितस्य । नहि दण्डिनं पुरुषमानयेत्युक्ते दण्डरहितः कमण्डलुमानानीयते । तस्मादधिदैवं सत्यस्योपनिषदुक्ता न तस्यैवाध्यात्मं भवितुमर्हति । यथा चाचार्यस्य गच्छतो ऽनुगमनं विहितं न तिष्ठतो भवति, तस्मान्नोपनिषदोः सङ्करः किन्तु व्यवस्थितिः । तदिदमुक्तं स्वरूपानपायादिति ॥२१॥

**दर्शयति च ॥ २२ ॥**

अतिदेशादप्येकमेव, तत्त्वे हि नातिदेशः स्यादिति(५) ॥ २२ ॥

**सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥**

ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ।
(६)ब्रह्मभूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥

ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठा जज्ञे आस । (७)यद्यपि तासुतासु शाण्डिल्यादिविद्या-

(१) आग्नेयैककालत्वादिविषयस्येत्यर्थः ।

(२) भाष्योक्ते उपनिषदो सत्यस्य ब्रह्मणः स्थानभेदेन व्यवस्थयाऽनुचिन्तनीये उत द्वे अप्युभयत्रेति स्थानभेदात्सत्यब्रह्मैक्याच्च संशये सङ्गतिगर्भं पूर्वपक्षमाह यथैकस्यामिति ।

(३) शाण्डिल्यविद्यावत् ।

(४) सत्यं न गुणभूतं स्थानमात्रं तच्छब्देन परामृश्यते, नापि तद्विशिष्टं धर्मः किन्तु स्थानविशिष्टं ब्रह्मैव, य एष एतस्मिन्मण्डले पुरुष इति तथैव प्रकृतत्वात्, तथाच विशिष्टस्य विशिष्टान्तरेऽननुगमान्नोभयत्रोभयनामचिन्तनमित्यभिप्रायेण सिद्धान्ताशयमाह सत्यमिति ।

(५) भिन्नाधिष्ठानत्वादिति शेषः । (६) देशतोऽपरिच्छेदमुक्त्वा कालतस्तमाह ब्रह्मभूतानामिति ।

(७) पूर्वाधिकरणे स्थानविशेषेणानुपसंहार उक्तः, तस्यातिदेशोऽयं अस्याधिकाशङ्कामाह यद्यपीति ।

स्वायतनभेदपरिग्रहेणाध्यात्मिकायतनत्वं सम्भूत्यादीनां गुणानामाधिदैविकत्वमित्यायतनभेदः प्रतिभाति । तथापि 'ज्यायान् दिव' इत्यादिना सन्दर्भेणाधिदैविकविभूतिप्रत्यभिज्ञानात् षोडशकलाद्यासु च विद्यास्वायतनाश्रवणाद् अन्ततो ब्रह्माश्रयतया साम्येन प्रत्यभिज्ञासम्भवात् । सम्भृत्यादीनां गुणानां शाण्डिल्यादिविद्यासु षोडशकलादिविद्यासु चोपसंहार इति पूर्वः पक्षः ।

राद्धान्तस्तु (१)मिथः समानगुणश्रवणं प्रत्यभिज्ञाय यद्विद्या अपूर्वानपि तत्राश्रुतान् गुणानुपसंहारयति न त्विह सम्भृत्यादिगुणकब्रह्मविद्यायां शाण्डिल्यादिविद्यागतगुणश्रवणमस्ति । (२)या तु काचिदाधिदैविकी विभूतिः शाण्डिल्यादिविद्यायां श्रूयते, तस्यास्तत्प्रकरणाधीनत्वात्तावन्मात्रं प्रहीष्यते नैतावन्मात्रेण सम्भृत्यादीननुकष्टुमर्हति , तत्रैतरप्रत्यभिज्ञानाभावादित्युक्तम् । ब्रह्माश्रयत्वेन तु प्रत्यभिज्ञानसमर्थनमतिप्रसक्तम् , भूयसीनामैक्यप्रसङ्गात् । तदिदमुक्तं "सम्भृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्चे"ति । तस्मात्सम्भृतिश्च द्युव्याप्तिश्च तदिदं सम्भृतिद्युव्याप्त्यपि चातः प्रत्यभिज्ञानाभावान्न शाण्डिल्यादिविद्यासूपसंह्रियत इति सिद्धम् ॥ २३ ॥

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

(३)पुरुषयज्ञत्वमुभयत्राप्यविशिष्टम् । (४)न च विदुषो यज्ञस्येति न सामानाधिकरण्यसम्भवः, यज्ञस्यात्मेत्यात्मशब्दस्य स्वरूपवचनत्वात् । यज्ञस्य स्वरूपं यजमानस्तस्य च चेतनत्वाद् विदुष इति सामानाधिकरण्यसम्भवः । तस्मात् पुरुषयज्ञत्वाविशेषान्मरणावभृथत्वादिसामान्याच्चैकविद्याध्यवसाने उभयत्र उभयधर्मोपसंहार इति प्राप्तम् ।

एवं प्राप्त उच्यते—यादृशं ताण्डिनां पैङ्गिनां च पुरुषयज्ञसम्पादनं तदायुषश्च त्रेधा व्यवस्थितस्य सवनत्रयसम्पादनम् । अशिशिषादीनां च दीक्षादिभावसम्पादनं नैवं तैत्तिरीयाणाम् , तेषां न तावत् पुरुषे यज्ञसम्पत्तिः । नह्यात्मा यजमान इत्यत्रायमात्मशब्दः स्वरूपवचनः न हि यज्ञस्वरूपं यजमानो भवति, कर्तृकर्मणोरभेदाभावात् । (५)चेतनाचेतनयोश्चैक्यानुपपत्तेः यज्ञकर्मणोश्चाचेतनत्वात् , यजमानस्य चेतनत्वात् । आत्मनस्तु चेतनस्य यजमानत्वं च विद्वत्वं चोपपद्यते । तथा चायमर्थः—एवंविदुषः पुरुषस्य यः सम्बन्धी

---

( १ ) तत्र किं सम्भृत्यादिविद्यायाः शाण्डिल्यादिविद्यानां चासाधारणगुणसाम्यादेकत्वमुत साधारणगुणसाम्यादथवोभयत्र ब्रह्ममात्रप्रत्यभिज्ञानादिति विकल्प्य नाद्य इत्याह मिथ इति ।

( २ ) द्वितीय आह या त्विति । द्युव्याप्त्यादिगुणा यद्यपि सम्भृत्यादिविद्यायां शाण्डिल्यादिविद्यायां च तुल्याः, तथापि तेषां वैश्वानरषोडशकलादिविद्यास्वपि साधारण्येन तासामपीतरेतरमैक्यापादकत्वेनातिप्रसक्तित्वान्न विद्यैक्यबोधनद्वारा सम्भृत्यादिगुणकर्षकत्वं किन्तु शाण्डिल्यविद्याप्रकरणपाठात्तावन्मात्रं शाण्डिल्यविद्यास्वङ्गीकर्तव्यम् ।

( ३ ) असाधारणगुणप्रत्यभिज्ञानाभावात्सम्भृत्यादौ विद्याभेदः उक्तः इह त्वसाधारणगुणप्रत्यभिज्ञानाद्विद्यैक्यमित्यभिप्रायेण पूर्वपक्षयति पुरुषयज्ञत्वमिति । पुरुषे यज्ञत्वसम्पत्तेराविशेषादित्यर्थः ।

( ४ ) तैत्तिरीयके पुरुषयज्ञत्वसम्पत्तिरसिद्धा विदुषो यज्ञस्येति विद्वत्सम्बन्धियज्ञप्रतीतेः, न चैते षष्ठ्यौ समानाधिकरणे, आत्मा यजमान इति विदुषो आत्मनो यजमानत्वनिर्देशात् , एकस्य च यज्ञत्वयजमानत्वविरोधादत आह न च विदुष इति ।

( ५ ) न केवलं यज्ञस्वरूपस्य मुख्ययजमानत्वासम्भवः विदुषो यज्ञस्येति षष्ठ्योश्च न मुख्यसामानाधिकरण्यसम्भव इत्याह चेतनाचेतनयोरिति । विद्वान् चेतनस्तस्याचेतनयज्ञैक्यासम्भव इत्यर्थः ।

यज्ञः तस्य सम्बन्धितया यजमान आत्मा, तथा चात्मनो यजमानत्वं च विद्वत्सम्बन्धिता च यज्ञस्य मुख्ये स्यातामितरथाऽऽत्मशब्दस्य स्वरूपवाचित्वे विदुषो यज्ञस्येति च यजमानो यज्ञस्वरूपमिति च गौणे स्याताम् , न च सत्यां गतौ तद्युक्तम् । तस्माद् पुरुषयज्ञता तैत्तिरीये नास्तीति तया तावन्न साम्यम् । न च पत्नीयजमानवेदविद्यादिसम्पादनं तैत्तिरीयाणामिव ताण्डिनां पैङ्गिनां वा विद्यते सवनसम्पत्तिरप्येषां विलक्षणैव । तस्माद्भूयो वैलक्षण्ये सति न किञ्चिन्मात्रसालक्षण्याद्विद्यैकत्वमुचितमतिप्रसङ्गात् । (१)अपि च तस्यैव विदुष इत्यनुवादश्रुतौ सत्यामनेकार्थविधाने वाक्यभेददोषप्रसक्तिरित्यर्थः । अपि चेयं पैङ्गिनां ताण्डिनां च पुरुषयज्ञविद्या फलान्तरयुक्ता स्वतन्त्रा प्रतीयते । तैत्तरीयाणां तु एवंविदुष इति श्रवणाद् पूर्वोक्तपरामर्शात् तत्फलत्वश्रुतेश्च पारतन्त्र्यम् । न च स्वतन्त्रपरतन्त्रयोरैक्यमुचितमित्याह—"अपि च ससंन्यासामात्मविद्यामि"ति । उपसंहरति "तस्मादि"ति ॥ २४ ॥

## वेधाद्यर्थभेदात् ॥ २५ ॥

विचारविषयं दर्शयति—"आथर्वणिकानामि"ति । आथर्वणिकाद्युपनिषदारम्भे ते ते मन्त्रास्तानि तानि च प्रवर्ग्यादीनि कर्माणि समाम्नातानि । संशयमाह—"किमिम" इति । पूर्वपक्षं गृह्णाति—"उपसंहार एषां विद्यास्वि"ति । (२)सफला हि सर्वा विद्या आम्नातास्तत्सन्निधौ मन्त्राः कर्माणि च समाम्नातानि 'फलवत्सन्निधावफलं तदङ्गमि'ति न्यायाद्विद्याङ्गभावेन विज्ञायन्ते । चोदयति—"नन्वेषामि"ति । नह्यत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि सन्ति विनियोजकानि प्रमाणानि, नहि यथा दर्शपूर्णमासावारभ्य समिदादयः समाम्नातास्तथा काञ्चिद्विद्यामारभ्य मन्त्रा वा कर्माणि वा समाम्नातानि । (३)न चासति सामान्यसम्बन्धे सम्बन्धिसन्निधानमात्रात्तादर्थ्यसम्भवः । न च श्रुतस्वाङ्गपरिपूर्णा विद्या एतानाकाङ्क्षितुमर्हति येन प्रकरणापादितसामान्यसम्बन्धानां सन्निधिर्विशेषसम्बन्धाय भवेदित्यर्थः । समाधत्ते—"बाढमनुपलभमाना अपी"ति । (४)मा नामभूत् फलवतीनां विद्यानां परिपूर्णाङ्गानामाकाङ्क्षा, मन्त्राणां तु स्वाध्यायविध्यापादितपुरुषार्थभावानां कर्मणां च प्रवर्ग्यादीनां स्वविध्यापादितपुरुषार्थभावानां पुरुषाभिलषितमाकाङ्क्षतां सन्निधानादन्यतराकाङ्क्षानिबन्धनो रक्तपटन्यायेन सम्बन्धः । (५)तत्रापि च विद्यानां फलवत्त्वात्ता-

---

(१) अपि च तस्यैवं विदुष इति भाष्यमुपादाय व्याचष्टे अपिचेति । विद्वत्सम्बन्धियज्ञानुवादेन तस्य विद्वदङ्गैरङ्गकल्पनादेकवाक्यता न प्रतीयते तत्र तु विद्वान् यज्ञस्तस्य चात्मादयो यजमानादय इति विध्यावृत्त्या वाक्यभेदप्रसङ्ग इत्यर्थः ।

(२) पूर्वाधिकरणे आत्मविद्यासन्निधौ श्रवणात्तैत्तिरीयशाखागतः पुरुषयज्ञो विद्याङ्गमित्यङ्गीकृत्यायुर्वृद्धिफलविद्याया भेदः उक्तः, तदा प्रवर्ग्यादीनामपि विद्यासान्निध्याविशेषाद्विद्याङ्गत्वमिति पूर्वपक्षयति सफला हीति।

(३) आकाङ्क्षाभावेपि सन्निधिरूपप्रकरणं स्यादित्याशङ्क्याह नचेति ।

(४) अङ्गप्रधानयोरितरेतराकाङ्क्षास्वरूपप्रकरणानुपलम्भेऽपि अङ्गाकाङ्क्षया प्रधानाकाङ्क्षामुत्थाप्य प्रकरणस्य सामान्यसम्बन्धसिद्धौ सन्निधेर्विद्याविशेषाङ्गत्वं मन्त्रकर्मविशेषाणामिति पूर्वपक्षमुपपादयति मानामेति । रक्तपटेति । यथा पटो भवतीति वाक्यानाकाङ्क्षत्वेऽपि सहोच्चारितरक्तपदस्याकाङ्क्षयेतरस्याकाङ्क्षामुत्थाप्य रक्तः पटो भवतीति वाक्यपर्यवसानमेवमिहापीति भावः । (५) ननूभयसम्बन्धेपि कस्याङ्गत्वमत आह तत्रापीति ।

दर्थ्यमफलानां मन्त्राणां कर्मणां च। न च प्रवर्ग्यादीनां पिण्डपितृयज्ञवत्स्वर्गः कल्पनास्पदं फलवत्सन्निधानेन तदवरोधात्(१)। "अनुमास्यामहे सन्निधिसामर्थ्यादि"ति। इदं खलु निवृत्ताकाङ्क्षाया विद्यायाः सन्निधाने श्रुतमनाकाङ्क्षया साकाङ्क्षस्यापि सम्बन्धुमसामर्थ्यात्, तस्या अप्याकाङ्क्षामुत्थापयति। उत्थाप्य चैकवाक्यतामुपैति, असमर्थस्य चोपकारकत्वानुपपत्तेः। प्रकरणिनं प्रति उपकारसामर्थ्यमात्मनः कल्पयति। (२)न च सत्यपि सामर्थ्ये तत्र श्रुत्या अविनियुक्तं तदङ्गतामुपगन्तुमर्हतीत्यनया परम्परया सन्निधिः श्रुतिमर्थापत्त्या कल्पयति। आक्षिपति—"ननु नैषां मन्त्राणामि"ति। प्रयोगसमवेतार्थप्रकाशनेन हि मन्त्राणामुपयोगो वर्णितोऽ'विशिष्टस्तु वाक्यार्थ' इत्यत्र। न च विद्यासम्बद्धं कञ्चनार्थं मन्त्रेषु प्रतीमः। यद्यपि च प्रवर्ग्यो न किञ्चिदारभ्य श्रूयते, तथापि वाक्यसंयोगेन क्रतुसम्बन्धं प्रतिपद्यते—पुरस्ता(३)दुपसदां प्रवर्ग्येण प्रचरन्तीति, उपसदां जुहूवदव्यभिचरितक्रतुसम्बन्धत्वात्। यद्यपि ज्योतिष्टोमविकृतावपि सन्त्युपसदः, तथापि तत्रानुमानिक्यो ज्योतिष्टोमे तु प्रत्यक्षविहितास्तेन शीघ्रप्रवृत्तितया ज्योतिष्टोमाङ्गतैव वाक्येनावगम्यते। (४)अपि च प्रकृतौ विहितस्य प्रवर्ग्यस्य चोदकेनोपसद्वद्विकृतावपि प्राप्तिः, प्रकृतौ वा अद्विरुक्तत्वादिति न्यायाज्ज्योतिष्टोमे एव विधानमुपसदा सह युक्तं, तदेतदाह—"कथं च प्रवर्ग्यादीनी"ति ( पृ० ७९२ पं० १३ )। सन्निधानाद्दर्थविप्रकर्षेण वाक्यं बलीय इति भावः। समाधत्ते—"नैष दोषः, सामर्थ्यं तावदि"ति ( पृ० ७९३ पं० १ )। यथा 'अग्नये त्वा जुष्टं निर्वपामी'ति मन्त्रे अग्नये-निर्वपामि-पदे परं कर्मसमवेतार्थप्रकाशके शिष्टानां तु पदानां तदेकवाक्यतया यथाकथञ्चिद्व्याख्यानमेवमिहाऽपि हृदयपदस्योपासनायां समवेतार्थत्वात्तदनुसारेण तदेकवाक्यतापन्नानि पदान्तराणि गौण्या लक्षणया च वृत्त्या कथञ्चिन्नेयानीति नासमवेतार्थता मन्त्राणाम्। न च मन्त्रविनियोगो नोपासनेषु दृष्टो येनात्यन्तादृष्टं कल्प्यत इत्याह—"दृष्टश्चोपासनेष्वि"ति। यद्यपि वाक्येन बलीयसा सन्निधिर्दुर्बलो बाध्यते तथापि विरोधे सति, न चेहाऽस्ति विरोधः, वाक्येन

(१) उत्तराग्निवर्तनात्।

(२) सामर्थ्यमात्रेणाप्यशाब्दस्यान्वयानुपपत्त्या लिङ्गबलाच्छ्रुतिकल्पनामाह नचेति।

(३) ननु तथापि उपसत्सम्बन्धोऽस्तु प्रवर्ग्यस्य कथं कर्मसम्बन्धस्तत्राह उपसदामिति।

(४) उपसदां प्रत्यक्षत्वाप्रत्यक्षत्वचिन्ता तावदास्तामनारभ्याधीतत्वादेव प्रवर्ग्यस्य प्रकृतावेव निवेशः सिद्ध्यतीत्याहापि चेति। शेषलक्षणे 'तत्सर्वार्थमविशेषादि'ति ( ३ अ० ३ पा० सू० ३९ ) स्थितम्। अनारभ्य कञ्चित्क्रतुमधीयते 'यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति यस्य पर्णमयी जुहूरि'त्यादि। तत्र किं खादिरत्वादि प्रकृतौ विकृतौ च निविशत उत प्रकृतावेवेति संशये खादिरत्वादि सर्वार्थं प्रकृत्यर्थं अप्रकरणान्नहि कस्यचित्प्रकरणे इदं श्रुतम्, तत्र क्रतुमात्रनियतस्रुवादिद्वारेण वाक्यात्सर्वार्थमिति पूर्वपक्षे, प्रकृतौ वाऽद्विरुक्तत्वात् ( अ० ३ पा० ३ सू० ३९ ) प्रकृतिविकृतिगामित्वे हि खादिरतादेर्विकृतावतिदेशतोऽनारभ्याधीतादप्यस्मादुपदेशात्प्राप्ते द्विरुक्तत्वं स्यात्तदयुक्तमतिदेशतः प्राप्तौ प्राप्तप्रापणवैयर्थ्यात्, नचातिदेशेन विना विकृतौ स्रुवादिप्राप्तिस्तस्माद्द्विरुक्तत्वालाभाय प्रकृतावेव निवेश इति यथासिद्धान्तस्तथेहाप्यनारभ्याधीतत्वात्प्रवर्ग्यस्य प्रकृतौ विहितस्य सतोऽतिदेशेन विकृतावप्युपसदां प्राप्तिसिद्धेरद्विरुक्तत्वलाभाय प्रकृतौ वेति न्यायाज्ज्योतिष्टोमे एवोपसदा सह विधानं युक्तमित्यर्थः।

विनियुक्तस्यापि ज्योतिष्टोमे प्रवर्ग्यस्य सन्निधिना विद्यायामपि विनियोगसम्भवात्, यथा 'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेते'ति ब्रह्मवर्चसफलोऽपि बृहस्पतिसवो वाजपेयाङ्गत्वेन चोद्यते—वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति । अत्र हि क्त्वः समानकर्तृकत्वमवगम्यते धातु-सम्बन्धे प्रत्ययविधानात् । धात्वर्थान्तरसम्बन्धश्च कथं च समानः कर्ता स्यात्(१), यद्येकः प्रयोगो भवेत् । प्रयोगाविष्टं हि कर्तृत्वम् । तच्च प्रयोगभेदे कथमेकम् । तस्मात्समानकर्तृक-क्त्वादेकप्रयोगत्वं वाजपेयबृहस्पतिसवयोर्धात्वर्थान्तरसम्बन्धाच्च । न च गुणप्रधानभावमन्त-रेणैकप्रयोगता सम्बन्धश्च । (२)तत्राऽपि वाजपेयस्य प्रकरणे समाम्नानाद्वाजपेयः प्रधानम्, अङ्गं बृहस्पतिसवः । (३)न च 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यत्राङ्गप्रधानभावप्रसङ्गः, नह्येतद्वचनं कस्यचिद्दर्शपूर्णमासस्य सोमस्य वा प्रकरणे समाम्नातम् । तथा च द्वयोः साधि-कारतया अगृह्यमाणविशेषतया गुणप्रधानभावं प्रति विनिगमनाभावेनाधिष्ठानमात्रविवक्षया लाक्षणिकं समानकर्तृकत्वमित्यदोषः । (४)यदि तु कस्यांचिच्छाखायामारभ्याधीतं 'दर्शपूर्ण-मासाभ्यामिष्ट्वे'ति, तथाप्यनारभ्याधीतस्यैवारभ्याधीते प्रत्यभिज्ञानमिति युक्तम् । तथा सति द्वयोरपि पृथगधिकारतया प्रतीतं समप्रधानत्वमत्यक्तं भवेदितरथा तु गुणप्रधानभावेन तत्त्या-गो भवेत् । तस्मात्कालार्थो ऽयं संयोग इति सिद्धम् ।

सिद्धान्तमुपक्रमते "एवं प्राप्त" इति ( पृ० ७९४ पं० १ ) । 'हृदयं प्रविध्ये'त्ययं मन्त्रः स्वरसतस्तावदाभिचारिककर्मसमवेतं सकलैरेव पदैरर्थमभिदधदुपलभ्यते । तदस्याभिधानसामर्थ्यलक्षणं लिङ्गं वाक्यप्रकरणाभ्यां क्रमाद्बलीयोभ्यामपि बलवत् किमङ्ग पुनः क्रमात्, तस्माल्लिङ्गेन सन्निधिमपोह्याभिचारिककर्मशेषत्वमेवापाद्यते । यद्यपि चोपा-सनासु हृदयपदमात्रस्य समवेतार्थत्वम्, तथापि तदितरेषां सर्वेषामेव पदानामसमवेतार्थ-त्वम् । आभिचारिके तु कर्मणि सर्वेषामर्थसमवाय इति किमेकपदसमवेतार्थता करिष्यति । (५)न च सन्निध्युपगृहीतासूपासनासु मन्त्रमवस्थापयतीति युक्तम् । हृदयपदस्याभिचारेऽपि समवेतार्थस्येतरपदैकवाक्यतापन्नस्य वाक्यप्रमाणसहितस्याभिचारिकात्कर्मणः सन्निधिना चाल-यितुमशक्यत्वादेवं 'देवसवितः प्रसवयज्ञमि'त्यादेरपि यज्ञप्रसवलिङ्गस्य यज्ञाङ्गत्वे सिद्धे कथन्नो विद्यासन्निधिः किं करिष्यति । एवमन्येषामपि श्वेताश्व इत्येवमादीनां केषांचिल्लिङ्गेन केषां

---

( १ ) एकप्रयोगतामन्तरेणेति शेषः । व्यतिरेकमुक्त्वाऽन्वयमाह यदीति । यद्येकः प्रयोगो भवेत्तर्ह्येव समानः कर्ता स्यादित्यनुषङ्गः । ननु भिन्नप्रयोगत्वेऽपि क्रिययोः कर्तृत्वाधिष्ठानपुरुषैक्यात् क्त्वाप्रत्ययोपपत्तिरित-त्राह प्रयोगाविष्टं हीति । करोतीति हि कर्ता भवति अधिष्ठानलक्षणायां तु स एव दोष इत्यर्थः ।

( २ ) ननु भवत्वङ्गाङ्गित्वं वाजपेयबृहस्पतिसवयोः, कस्याङ्गत्वं कस्य वाऽङ्गित्वं तत्राह तत्रापीति

( ३ ) यदि साधिकारयोरपि कर्मणोः क्त्वाश्रुत्याऽङ्गाङ्गिभावः तर्ह्यतिप्रसङ्ग इत्याशङ्क्य विशेषप्रदर्शनेन परिहरति नचेति । वाजपेयप्रकरणे समाम्नानाद्बृहस्पतिसवस्याङ्गत्वमिदन्तु वाक्यमनारभ्याधीतमिति नाङ्गा-ङ्गित्वबोधकमित्यर्थः ।

( ४ ) ननु क्वचित्सोमप्रकरणे इदं वाक्यं श्रुतमतः सोमाङ्गता दर्शपूर्णमासयोरिति, नेत्याह यदि त्विति । अनारभ्याधीतवाक्यार्थ एवानूद्यते तत्रेत्यर्थः ।

( ५ ) बहुपदसमवेतार्थताया एकपदसमवेतार्थता यद्यपि दुर्बला तथापि विद्यासन्निध्यनुगृहीता हृदय-मित्येकपदसमवेतार्थता मन्त्रस्य विद्याङ्गत्वं गमयेदत आह नचेति ।

चिच्छ्रुत्या केषांचित्प्रमाणान्तरेण प्रकरणेनेति। (१)कस्मात्पुनः सन्निधिर्लिङ्गादिभिर्बाध्यते इत्यत आह—"दुर्बलो हि सन्निधि"रिति प्रथमतन्त्रगतोऽर्थः स्मार्यते । तत्र तु श्रुतिलिङ्गयोः(२) समवाये समानविषयत्वलक्षणे विरोधे किं बलीय इति चिन्ता ।

अत्रोदाहरणम्—अस्त्यैन्द्री ऋक् 'कदा चन स्तरीरसि नेन्द्र' इत्यादिका। श्रुतिर्विनियोक्त्री 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति । अत्र हि सामर्थ्यलक्षणाल्लिङ्गादिन्द्रे विनियोगः प्रतिभाति । श्रुतेश्च गार्हपत्यमिति द्वितीयातो गार्हपत्यस्य शेषित्वं ऐन्द्र्येति च तृतीयाश्रुतेरैन्द्र्या ऋचः शेषत्वमवगम्यते । यद्यपि गार्हपत्यमिति द्वितीयाश्रुतेराग्नेयीमृचं प्रति गार्हपत्यस्य शेषित्वेनोपपत्तेः, यद्यपि चैन्द्र्येति च तृतीयाश्रुतेरैन्द्र्या इन्द्रं प्रति शेषत्वेनोपपत्तेरविरोधः, पदान्तरसम्बन्धे तु वाक्यस्यैव लिङ्गेन विरोधो न तु श्रुतेः, तत्र च विपरीतं बलाबलम् । तथापि श्रुतिवाक्ययो रूपतो व्यापारभेदाददोषः, द्वितीयातृतीयाश्रुती हि कारकविभक्तितया क्रियां प्रति प्रकृत्यर्थस्य कर्मकरणभावमवगमयत इति विनियोजिके क्रियां प्रति हि कर्मणः शेषित्वं करणस्य च शेषत्वमिति हि विनियोगः पदान्तरानपेक्षे च क्रियां प्रति शेषशेषित्वे श्रुतिमात्रात्प्रतीयेते इति श्रौते । (३)सोऽयं श्रुतितः सामान्यावगतो विनियोगः पदान्तरवद्वाक्यशेषेऽवस्थाप्यते । सोऽयं विशेषणविशेष्यभावलक्षणः सम्बन्धो वाक्यगोचरः शेषशेषिभावस्तु श्रौतः, (४)तस्माद्वाक्यलभ्यं विशेषमपेक्ष्य श्रौतः शेषशेषिभावो लिङ्गेन विरुध्यत इति श्रुतिलिङ्गविरोधे (५)किं लिङ्गानुगुणेन गार्हपत्यमिति द्वितीयाश्रुतिः सप्तम्यर्थे व्याख्यायतां गार्हपत्यसमीपे ऐन्द्रयेन्द्र उपस्थेय इति, आहो श्रुत्यनुगुणतया लिङ्गं व्याख्यायताम् । प्रभवति हि स्वोचितायां क्रियायां गार्हपत्यइतीन्द्र इन्दतेरैश्वर्यवचनत्वादिति। किं तावत्प्राप्तम्? श्रुतेर्लिङ्गं बलीय इति । नो खलु यत्रासमर्थं तच्छ्रुतिसहस्रेणापि तत्र विनियोक्तुं शक्यते, यथा अग्निना सिञ्चेत् पाथसा दहेदिति । तस्मात्सामर्थ्यं पुरोधाय श्रुत्या विनियोक्तव्यम् । तच्चास्या ऋचः प्रमाणान्तरतः शब्दतश्च इन्द्रे प्रतीयते । तथाहि—विदितपदतदर्थः (६)कदाचनेत्यृचः स्पष्टमिन्द्रमवगच्छति, शब्दाच्चैन्द्र्येत्यतः, तस्माद्दारुदहनस्येव दहनस्य सलिलदहने विनियोगो गार्हपत्ये विनियोग ऐन्द्र्याः । न च श्रुत्यनुरोधाज्जघन्यामास्थाय वृत्तिं सामर्थ्यकल्पनेति साम्प्र-

---

(१) यत्तु वाक्यलिङ्गाभ्यामन्यत्र विनियुक्तयोरपि मन्त्रकर्मणोः सन्निधानाद्विधायामपि तदविरोधेन विनियोगसम्भवादुभयार्थत्वमिति उक्तं, तदनूद्य परिहरति कस्मात्पुनरित्यादिना ।

(२) श्रुतिलिङ्गयोरिति । यत्रैक एव शेष एकेन प्रमाणेनैकशेषिणा सम्बद्धत्वेन बोधितः स एव प्रमाणान्तरेण शेष्यन्तरार्थत्वेन बोध्यते तत्रैकेनैव सम्बन्धे शेषस्य निराकाङ्क्षत्वादपरसम्बन्धो विरुध्यते तदनयोः प्रमाणयोः परस्परविषयापहारेण भवितव्यम् , अत एकशेषविषययोर्भिन्नशेषिसम्बन्धबोधिनोः प्रमाणयोर्बाध्यबाधकत्वे स्थिते तदर्थे किं बलीय इति चिन्ता क्रियते श्रुतिलिङ्गसूत्रेणेत्यर्थः ।

(३) श्रुतौ विनियोगे निरपेक्षे चेत्तर्हि वाक्येन किं बोध्यतेऽत आह सोऽयमिति ।

(४) ननु श्रुतिमात्रमपि लिङ्गेन न विरुध्यते इत्युक्तम् , अत आह तस्मादिति । वैयर्थ्यान्नैकं पदं कदाचित्प्रयुज्यतेऽतः प्रातिनियतौ श्रुतिवाक्यसम्बन्धौ, तत्र वाक्यगम्यस्य विशेषणविशेष्यभावस्यैवंविधं शेषशेषित्वमिति श्रुतिर्वदति । एवं च श्रौतेन शेषशेषिभावेन लिङ्गस्य विरोध इत्यर्थः ।

(५) एवमुदाहरणं परिशोध्याधिकरणमारचयति किं लिङ्गेत्यादिना ।

(६) अनेन वृद्धव्यवहारस्य प्रामाण्यं सूचितम् ।

लम् , सामर्थ्यस्य पूर्वभावितया तदनुरोधेनैव श्रुतिव्यवस्थापनात् । तस्मादैन्द्र्येन्द्र एव गार्ह-पत्यसमीपे उपस्थातव्य(१)इति प्राप्ते, अभिधीयते—

लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता । श्रुतिज्ञानं पुरोधाय लिङ्गं तु विनियोजकम् ॥

यदि हि सामर्थ्यमवगम्य श्रुतेर्विनियोगमवधारयेत् प्रमाता, ततः श्रुतेर्विनियोगं प्रति लिङ्गज्ञानापेक्षत्वाद्दुर्बलत्वं भवेत्, न त्वेतदस्ति । श्रुतिर्विनियोगाय सामर्थ्यमपेक्षते नापेक्षते सामर्थ्यविज्ञानम् । (२)अवगते तु ततो विनियोगे नासमर्थस्य स इति तन्निर्वाहाय सामर्थ्यं कल्प्यते । तच्छ्रुतिविनियोगात्पूर्वमस्ति सामर्थ्यम् , न तु पूर्वमवगम्यते । विनियोगे तु सिद्धे तदन्यथानुपपत्त्या पश्चात्प्रतीयत इति श्रुतिविनियोगात्पराचीना सामर्थ्यप्रतीतिस्तदनुरोधेनाव-स्थापनीया । (३)लिङ्गं तु न स्वतो विनियोजकमपि तु विनियोक्त्रीं कल्पयित्वा श्रुतिम् । तथाहि—न स्वरसतो लिङ्गादनेनेन्द्र उपस्थातव्य इति प्रतीयते, किन्त्वीदृगिन्द्र इति, (४)तस्य तु प्रकरणाम्नानसामर्थ्यात् सामान्यतः प्रकरणापादितैदमर्थ्यस्य तदन्यथानुपपत्त्या विनियोग-कल्पनायामपि श्रौताद्विनियोगात्कल्पनीयस्य विनियोगस्यार्थविप्रकर्षाच्छ्रुतिरेव कल्पयितुमुचिता न तु तदर्थो विनियोगः । नहि श्रुतमनुपपन्नं शक्यमर्थेनोपपादयितुम् । नहि त्रयोऽत्र ब्राह्मणाः कठकौण्डिन्याविति वाक्यं प्रमाणान्तरोपस्थापितेन माठरेणोपपादयन्ति उपपादयतो वा न नोपहसन्ति शाब्दाः, माठरश्चेति तु श्रावयन्तमनुमन्यन्ते । तस्माच्छ्रुतार्थसमुत्थानानुप-पत्तिः श्रुतेनैवार्थान्तरेणोपपादनीया, नार्थान्तरमात्रेण प्रमाणान्तरोपनीतेनेति लोकसिद्धम् । न च लोकसिद्धस्य नियोगानुयोगौ (५)युज्येते शब्दार्थज्ञानोपायभूतलोकविरोधात् । तस्माद्विनि-योजिका श्रुतिः कल्पनीया । तथा च यावल्लिङ्गाद्विनियोजिकां श्रुतिं कल्पयितुं प्रक्रान्तव्यापार-(६)स्तावत्प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध इति निवृत्ताकाङ्क्षं प्रकरणमिति कल्प्या-नुपपत्त्या लिङ्गं विनियोक्त्रीं श्रुतिमुपकल्पयेत्, मन्त्रसमाम्नानस्य प्रत्यक्षयैव विनियोगश्रुत्योप-पादितत्वात् । यथाहुः—

यावदज्ञातसन्दिग्धं ज्ञेयं तावत्प्रमित्स्यते । प्रमिते तु प्रमातॄणां प्रमौत्सुक्यं विहन्यते ॥ इति ।

तस्मात्प्रतीतश्रौतविनियोगोपपत्त्यै मन्त्रस्य सामर्थ्यं तदनुगुणत्वेन नीयमानं (७)प्रथमां वृत्तिमजहज्जघन्ययाऽपि नेयमिति सिद्धम् । लिङ्गवाक्ययोरिह विरोधो, यथा 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्य-

---

( १ ) प्रकाशयितव्यः ।

( २ ) यदि श्रुतिः सामर्थ्यज्ञानं नापेक्षते तदा योग्यतावधारणं व्यर्थं स्यादित्यग्निना सिञ्चेदित्यपि प्रमाणं स्यादत आह अवगते त्विति । यथा स्फोटे जाते वह्नेर्दाहशक्तिर्ज्ञायते न तु दाहकत्वं वह्नेः शक्तिज्ञानापेक्षमेवं श्रुतेः शेषत्वे ज्ञातेऽनन्तरमर्थे तादृशी शक्तिः कल्प्यतेऽतो नार्थगतसामर्थ्यज्ञानं विनियोगकारणमित्यर्थः ।

( ३ ) एवं श्रुत्यनपेक्षत्वपरं श्लोकस्य पूर्वार्धं व्याख्याय लिङ्गस्य सापेक्षत्वेन दौर्बल्यप्रतिपादकं द्वितीयार्धं व्याचष्टे लिङ्गं त्विति ।

( ४ ) तस्य तु—मन्त्रस्येत्यर्थः । प्रकरणाम्नानसामर्थ्यात्—अग्निचयनप्रकरणाम्नानसामर्थ्यात् । तदन्य-थानुपपत्त्या—इन्द्रस्वरूपाभिधानान्यथानुपपत्त्या । श्रुतिरेव—ऐन्द्र्येन्द्रं प्रकाशयेदित्येवंरूपा श्रुतिरेव ।

( ५ ) नियोग—आज्ञा, अनुयोग—आक्षेपः ।  ( ६ ) प्रतिपत्तेति शेषः ।

( ७ ) प्रथमामिति । प्रथमां मुख्यवृत्तिं यदजहात्तिष्ठेत्तर्हि प्रसह्य जघन्ययापि वृत्त्या नेयमित्यर्थः ।

माव' इति । किमयं कृत्स्न एव मन्त्रः सदनकरणे पुरोडाशासादने च प्रयोक्तव्य, उत कल्पयाम्यन्त उपस्तरणे तस्मिन्सीदेत्येवमादिस्तु पुरोडाशासादन इति । यदि वाक्यं बलीयः कृत्स्नो मन्त्र उभयत्र सुशेवं कल्पयामीत्येतदपेक्षो हि तस्मिन्सीदेत्यादिः पूर्वेणैकवाक्यतामुपैति यत्तत्कल्पयामि तस्मिन् सीदेति । अथ लिङ्गं बलीयस्ततः कल्पयाम्यन्तः सदनकरणे तत्प्रकाशने हि तत्समर्थं तस्मिन्सीदेति पुरोडाशासादने तत्र हि तत्समर्थमिति, किं तावत्प्राप्तम् ? लिङ्गाद्वाक्यं बलीय इति, उभयत्र कृत्स्नस्य विनियोग इति । (१)इह हि यत्तत्पदसमभिव्याहारेण विभज्यमानसाकाङ्क्षत्वात् एकवाक्यतायां सिद्धायां तदनुरोधेन पश्चात्तदभिधानसामर्थ्यं कल्पनीयम् , यथा देवस्यत्वेतिमन्त्रे ऽग्नये–निर्वपामी-तिपदयोः समवेतार्थत्वेन तदेकवाक्यतया पदान्तराणां तत्परत्वेन तत्र सामर्थ्यकल्पना । तदेवं प्रतीतैकवाक्यतानिर्वाहाय तदनुगुणतया सामर्थ्यं क्लृप्तं सन्न तद्व्यापादयितुमर्हति, अपि तु विनियोजिकां श्रुतिं कल्पयत्तदनुगुणमेव कल्पयेत् । तथा च वाक्यस्य लिङ्गतो बलीयस्त्वात्सदनकरणे च पुरोडाशासादने च कृत्स्न एव मन्त्रः प्रयोक्तव्य इति प्राप्तम् ।

एवं प्राप्त उच्यते–(२)भवेदेतदेवं यद्येकवाक्यतावगमपूर्वं सामर्थ्यावधारणमपि तु अवधृतसामर्थ्यानां पदानां प्रश्लिष्टपठितानां सामर्थ्यवशेन प्रयोजनैकत्वेनैकवाक्यत्वावधारणम् । यावन्ति पदानि प्रधानमेकमर्थमवगमयितुं समर्थानि विभागे साकाङ्क्षाणि तान्येकं वाक्यम् । (३)अनुष्ठेयश्चार्थो मन्त्रेषु प्रकाश्यमानः प्रधानं सदनकरणपुरोडाशासादने चानुष्ठेयतया प्रधाने तयोश्च सदनकरणं कल्पयाम्यन्तो मन्त्रः समर्थः प्रकाशयितुं पुरोडाशासादनं च तस्मिन्सीदेत्यादिः । ततश्च यावदेकवाक्यतावशेन सामर्थ्यमनुमीयते, तावत्प्रतीतं सामर्थ्यमेकैकस्य भागस्यैकैकस्मिन्नर्थे विनियोजिकां श्रुतिं कल्पयति । तथाच श्रुत्यैवैकैकस्य भागस्यैकत्र विनियोगे सति प्रकरणपाठोपपत्तौ न वाक्यकल्पितं लिङ्गं विनियोजिकां श्रुतिमपरां कल्पयितुमर्हतीत्येकवाक्यताबुद्धिरुपजाताप्याभासो भवति लिङ्गेन बाधनात् । (४)यत्र तु विरोधकं लिङ्गं नास्ति तत्र समवेतार्थैकद्वित्रिपदैकवाक्यता पदान्तराणामपि सामर्थ्यं कल्पयतीति भवति वाक्यस्य विनियोजकत्वम् । यथाऽत्रैव स्योनन्त इत्यादीनाम् । तस्माद्वाक्याल्लिङ्गं बलीय इति सिद्धम् ।

वाक्यप्रकरणयोर्विरोधोदाहरणम् । (५)अत्र च पदानां परस्परापेक्षावशात्कस्मिंश्चिद्विशिष्ट एकस्मिन्नर्थे पर्यवसितानां वाक्यत्वं, लब्धवाक्यभावानां च पुनः कार्यान्तरापेक्षावशेन वाक्यान्तरेण सम्बन्धः प्रकरणम् । कर्तव्यायाः खलु फलभावनाया लब्धधात्वर्थकरणाया इति-

---

( १ ) एकवाक्यतापूर्वकं सामर्थ्यकल्पनाल्लिङ्गस्योपजीव्य वाक्यं लिङ्गाद्बलवदिति सोदाहरणमाह इहेत्यादिना ।

( २ ) मन्त्रभागयोस्त्वनयोरुपस्तरणासादनार्थयोः पृथगर्थाभिधानसामर्थ्यस्यैकवाक्यतामनपेक्ष्यैवार्थप्रतीतिकार्यवशेन सिद्धत्वान्न वाक्यपूर्वकं लिङ्गस्येति सिद्धान्तयति भवेदेतदेवमिति ।

( ३ ) ननु भावनैव प्रधानं कथमुपस्तरणादेः प्राधान्यमत आहानुष्ठेय इति ।

( ४ ) यदि लिङ्गाभ्यां मन्त्रभागयोरर्थभेदेन वाक्यं भङ्क्त्वा विनियोगस्तर्हि देवस्येत्यत्रापि लिङ्गाद्वाक्यं भङ्क्त्वा भेदेन विनियोगः, स्यात तथाचात्रापि समवेतार्थसदनादिपदातिरिक्तपदानां मन्त्रभागाभ्यामेकवाक्यता न स्यादत आह यत्र त्विति ।

( ५ ) प्रकरणवाक्ययोर्विरोधमुदाहर्तुं वाक्यलक्षणमाहात्र चेति । प्रकरणलक्षणमाह लब्धेति ।

कर्तव्यताकाङ्क्षाया वचनं प्रकरणमाचक्षते वृद्धाः(१)। यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । एतद्धि वचनं प्रकरणम् । तदेतस्मिन्स्वपदगणेन क्रियत्यप्यर्थे पर्यवसिते करणोपकारलक्षणकार्यान्तरापेक्षायां समिधो यजतीत्यादिवाक्यान्तरसम्बन्धः । (२)समिदादिभावना हि स्वविध्युपहिताः पुरुषे हितं भाव्यमपेक्षमाणा विश्वजिन्न्यायेन वानुषङ्गतो वा अर्थवादतो वा फलान्तराप्रतिलम्भेन दर्शपूर्णमासभावनां निर्वारयितु(३)मीशते । तस्मात्तदाकाङ्क्षायामुपनिपतितान्येतानि वाक्यानि स्वकार्यापेक्षाणि तदपेक्षितकरणोपकारलक्षणं कार्यमासाद्य निर्वृण्वन्ति (४)च निर्वारयन्ति च प्रधानम् । सोऽयमनयोर्नष्टाश्वदग्धरथवत्संयोगः । तदेवंलक्षणयोर्वाक्यप्रकरणयोर्विरोधोदाहरणं सूक्तवाकनिगदः । तत्र हि पौर्णमासीदेवताः अमावास्यादेवताः समाम्नाताः । ताश्च न मिथ एकवाक्यतां गन्तुमर्हन्तीति लिङ्गेन पौर्णमासीयागादिन्द्राग्निशब्द उत्क्रष्टव्यो अमावास्यायां च समवेतार्थत्वात्प्रयोक्तव्यः । अथेदानीं सन्दिह्यते किं यदिन्द्राग्निपदैकवाक्यतया प्रतीयते अवीवृधेतां महोज्यायोऽक्रातामिति तदुत्क्रष्टव्यमुतेन्द्राग्निशब्दाभ्यां सहोत्क्रष्टव्यमिति।(५)तत्र यदि प्रकरणं बलीयस्ततोऽपनीतदेवताकोऽपि शेषः प्रयोक्तव्यो ऽथ वाक्यं ततो यत्र देवताशब्दस्तत्रैव प्रयोक्तव्यः । किं तावत्प्राप्तमपनीतदेवताकोपि शेषः प्रयोक्तव्यः प्रकरणस्यैवाङ्गसम्बन्धप्रतिपादकत्वात् । फलवती हि भावना प्रधानेतिकर्तव्यतात्वमापादयति । तदुपजीवनेन श्रुत्यादीनां विशेषसम्बन्धापादकत्वात् । अतः प्रधानभावनावचनलक्षणप्रकरणविरोधे तदुपजीविवाक्यं बाध्यत इति प्राप्तम् ।

एवं प्राप्त उच्यते—(६)भवेदेतदेवं यदि विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य प्रकरणं विनियोजयेत् । अपि तु विनियोगाय तदपेक्षतेऽन्यथा पूषाद्यनुमन्त्रणमन्त्रस्य द्वादशोपसत्तायाश्च(७) नोत्कर्षः स्यात्तद्रूपालोचनायां च यदेव शीघ्रं प्रतीयते तत्तद्बलवद्विप्रकृष्टं तु दुर्बलम् । तत्र यदि तद्रूपं श्रुत्या लिङ्गेन वाक्येन वाऽन्यत्र विनियुक्तं ततः प्रकरणं भङ्क्त्वोत्क्रम्यते परिशिष्टैस्तु प्रकरणस्येतिकर्तव्यतापेक्षा पूर्यते । अथ स्वस्य शीघ्रप्रवृत्तं श्रुत्यादि नास्ति ततः प्रकरणं विनियोजकम् । यथा समिदादेः । तदिह प्रकरणाद्वाक्यस्य शीघ्रप्रवृत्तत्वमुच्यते ।

---

(१) शबरस्वामिनः ।

(२) प्रधानवाक्यस्याङ्गवाक्याकाङ्क्षामुक्त्वाङ्गवाक्यानां प्रधानवाक्याकाङ्क्षामाह समिदादीति ।

(३) चारितार्थीकर्तुम् ।

(४) कृतार्थीभवन्ति । निर्वारयन्ति—स्वकृतोपकारेण प्रधानं दर्शपूर्णमासादीत्यर्थः । उक्तामितरेतरापेक्षां सदृष्टान्तमुपसंहरति सोयमिति । 'अग्निरिदं हविरजुषतावीवृधत' इत्यादिः 'महोज्यायोऽकृत'इत्यन्तः सूक्तनिगदः । देवतासम्बोधनप्रधानत्वादस्य निगदत्वम् ।

(५) एकत्र सहपाठेपि लिङ्गादुत्कृष्टेनेन्द्राग्निपदेनैकवाक्यतापन्नोऽवीवृधेतामित्यादिमन्त्रशेषो यत्रामावास्यायामिन्द्राग्निपदं नीतं तत्र नीयेत उतेन्द्राग्निपदमात्रममावस्यां नीत्वा वाक्यशेष उभयत्र पौर्णमास्यमावस्ययोः प्रयोक्तव्य इति सन्देहस्य प्रापकमाह तत्र यदीति ।

(६) आकाङ्क्षात्मकं हि प्रकरणं न श्रुतिरिव विनियोगमभिधत्ते किन्तु विनियोज्यपदार्थशक्तिं प्रमाणान्तरप्रमितामपेक्षते, एवंसति विनियोज्यस्य मन्त्रवाक्यशेषस्य वाक्येनान्यत्र विनियुक्तत्वान्न प्रकरणेन कृत्स्नार्थत्वेन विनियोग इत्याह भवेदित्यादिना ।

(७) द्वादशोपसत्ताधिकरणं 'ज्योतिर्दर्शनात्' ( अ० १ पा० ३ सू० ४० ) इत्यत्रानुक्रान्तम् । पूषाद्यनुमन्त्राश्च तत्रैवोदाहृता द्रष्टव्याः ।

प्रकरणे हि स्वार्थपूर्णानां वाक्यानामुपकार्योपकारकाकाङ्क्षामात्रं दृश्यते । वाक्ये तु पदानां प्रत्यक्षसम्बन्धः । ततश्च सह प्रस्थितयोर्वाक्यप्रकरणयोर्यावत्प्रकरणेनैकवाक्यता कल्प्यते तावद्वाक्येनाभिधानसामर्थ्यम्, (१)यावदितरत्र वाक्येन सामर्थ्यं तावदितरत्र सामर्थ्येन श्रुतिर्यावदितरत्र सामर्थ्येन श्रुतिस्तावदिह श्रुत्या विनियोगस्तावता च विच्छिन्नायामाकाङ्क्षायां श्रुत्यनुमानविहिते प्रकरणेनान्तरा कल्पिते विलीयन्त इति वाक्यबलीयस्त्वात्तद्देवताशेषाणामपकर्ष एवेति सिद्धम् ॥

क्रमप्रकरणविरोधोदाहरणम् । राजसूयप्रकरणे प्रधानस्यैवाभिषेचनीयस्य सन्निधौ शौनःशेपोपाख्यानाद्याम्नातं तत्किं समस्तस्य राजसूयस्याङ्गमुताभिषेचनीयस्य । यदि प्रकरणं बलीयस्ततः समस्तस्य राजसूयस्य, अथ क्रमस्ततोऽभिषेचनीयस्यैवेति, किं तावत्प्राप्तम्? नाकाङ्क्षामात्रं हि सम्बन्धहेतुः । गामानय प्रासादं पश्येति गामित्यस्य क्रियामात्रापेक्षिणः पश्येत्यनेनापि सम्बन्धसम्भवाद्विनिगमनाभावप्रसङ्गात् । तस्मात्सन्निधानंसम्बन्धकारणम् । तथा चानयेत्यनेनैव गामित्यस्य सम्बन्धो विनिगम्यते । (२)न च सन्निधानमपि सम्बन्धकारणम् । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राज्ञ इत्यस्य पुत्रपुरुषपदसन्निधानाविशेषान्मा भूदविनिगमना । तस्मादाकाङ्क्षा निश्चयहेतुर्वक्तव्या । अत्र पुत्रशब्दस्य सम्बन्धिवचनतया समुत्थिताकाङ्क्षस्यान्तिके यदुपनिपतितं (३)सम्बन्ध्यन्तराकाङ्क्षं पदं तस्य तेनैवाकाङ्क्षापरिपूर्तेः पुरुषपदेन पुरुषरूपमात्राभिधायिना स्वतन्त्रेणैव न सम्बन्धः किं तु परेणापसार्यतामित्यनेनापसरणीयापेक्षेणेति । सत्यपि सन्निधाने आकाङ्क्षाभावादसम्बन्धः । तथा चाभाणकः । 'तप्तं तप्तेन सम्बध्यत'इति । तथा चाकाङ्क्षितमपि न यावत्सन्निधाप्यते तावन्न सम्बध्यत । तथा सन्निहितमपि यावन्नाकाङ्क्ष्यते न तावत्सम्बध्यत इति द्वयोः सम्बन्धं प्रति समानबलत्वात् क्रमप्रकरणयोः (४)समुच्चयासम्भवाच्च विकल्पेन राजसूयाभिषेचनीययोर्विनियोगः शौनःशेपोपाख्यानादीनामिति प्राप्तम् ।

एवं प्राप्त उच्यते—राजसूयके कथंभावापेक्षा हि पवित्रा(५)दारभ्य क्षत्रस्य धृतिं यावदनुवर्त्तते तथा च अविच्छिन्ने कथंभावे यत्प्रधानस्य पठ्यते अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गतेति न्यायात् राजसूयाङ्गता शौनःशेपोपाख्यानादीनाम् । (६)अभिषेचनीयस्य तु स्ववा-

---

(१) यावदितरत्र वाक्येन सामर्थ्यमिति । वाक्यद्वयैकवाक्यतायां कल्पितायामन्यथानुपपत्त्या वाक्यद्वयार्थयोरितरेतरोपकार्योपकारकत्वसामर्थ्यं कल्प्यत इत्यर्थः ।

(२) अत्र विकल्पेन पूर्वपक्षं वक्ष्यन् सन्निधेरपि केवलस्य न सम्बन्धे हेतुत्वमित्याह नचेति । सन्निधिमात्रस्य हेतुत्वे राज्ञ इत्यस्य पुत्रपदेन पुरुषपदेन वा सम्बन्ध इत्यनिश्चयः स्यादतो आकाङ्क्षाया अपि निश्चयहेतुत्वं वक्तव्यमित्यर्थः । (३) पितृसमर्पकं राजपदमित्यर्थः ।

(४) ननु प्रकरणाद्राजसूयार्थत्वं क्रमादभिषेचनीयार्थत्वं च किं न स्यादत आह समुच्चयेति । अभिषेचनीयस्यापि राजसूयमध्यपातित्वात्तदर्थमप्यनुष्ठितमाख्यानादि राजसूयाङ्गमपि भवति पृथक्प्रयोगानपेक्षणान्न समुच्चय इत्यर्थः ।

(५) सोमयागविशेषात्, क्षत्रस्य धृतिः—इष्टिः । कथम्भावे—कथम्प्रधानस्य भावना निष्पद्यत इत्यपेक्षायामितिकर्तव्यताकाङ्क्षायामित्यर्थः ।

(६) प्रधानाकाङ्क्षायामनुवर्तमानायामाम्नातस्याख्यानादेः पदैर्व्यवधानाभावाद्राजसूयाङ्गत्वमुक्त्वाऽभिषेचनीयं प्रति सन्निधेर्दुर्बलत्वादनङ्गत्वमाहाभिषेचनीयस्येति ।

क्येोपात्तपदार्थनिराकाङ्क्षस्य संनिधिपाठेनाकाङ्क्षोत्थापनीया यावत्तावत्सिद्धाकाङ्क्षेण राजसूयेनैकवाक्यता कल्प्यते । यावच्चाभिषेचनीयाकाङ्क्षया तदेकवाक्यता कल्प्यते तावत्क्लृप्तया राजसूयैकवाक्यतया तदुपकारकतया सामर्थ्यलक्षणं लिङ्गं यावच्चाभिषेचनीयैकवाक्यता लिङ्गं कल्प्यते तावत्क्लृप्तलिङ्गं विनियोक्त्रीं श्रुतिं कल्पयति यावद्वाक्यकल्पितेन लिङ्गेन श्रुतिरितरत्र कल्प्यते तावत्क्लृप्तया: श्रुत्या विनियोगे सति प्रकरणपाठोपपत्तौ सन्निधानपरिकल्पितमन्तरा विलीयते, प्रमाणाभावे ऽप्रतिभत्वात् । (१)प्रकरणिनश्च राजसूयस्य सर्वदा बुद्धिसान्निध्येन तत्सन्निधेरकल्पनीयत्वात् । तस्मात्प्रकरणविरोधे क्रमस्य बाध एव न च विकल्पो दुर्बलत्वादिति सिद्धम् ॥

क्रमसमाख्ययोर्विरोधोदाहरणम् । पौरोडाशिक इति समाख्याते काण्डे सान्नाय्यक्रमे च शुन्धध्वं दैव्याय कर्मणइति शुन्धनार्थो मन्त्रः समाम्नातः, तत्र सन्दिह्यते किं समाख्यानस्य बलीयस्त्वात्पुरोडाशपात्राणां शुन्धने विनियोक्तव्य, आहो सान्नाय्यपात्राणां शुन्धने क्रमो बलीयानिति । किं तावत्प्राप्तम् ? समाख्यानं बलीयइति । पौरोडाशिकशब्देन हि पुरोडाशसम्बन्धिनीत्युच्यन्ते तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकम् । ततश्च यावत्क्रमेण प्रकरणाद्यनुमानपरम्परया सम्बन्धः प्रतिपादनीयः तावत्समाख्यया श्रुत्यैव साक्षादेव स प्रतिपादित इति अर्थविप्रकर्षेण क्रमात्समाख्यैव बलीयसीति पुरोडाशपात्रशुन्धने मन्त्रः प्रयोक्तव्यः न सान्नाय्यपात्रशुन्धन इति प्राप्तम् ।

एवं प्राप्तेऽभिधीयते—समाख्यानात् क्रमो बलवानर्थविप्रकर्षादिति । तथाहि (२)समाख्या न तावत्सम्बन्धस्य वाचिका किन्तु पौरोडाशविशिष्टं काण्डमाह । तद्विशिष्टत्वान्यथानुपपत्त्या तु सम्बन्धः काण्डस्यानुमीयते न तु साक्षान्मन्त्रभेदस्य । तद्द्वारेण च तन्मध्यपातिनो मन्त्रभेदस्यापि तदनुमानम् । न चासौ सम्बन्धोऽपि श्रुत्यैव शेषशेषिभावः प्रतीयते अपि तु सम्बन्धमात्रम् । तस्माच्छ्रुतिसादृश्यमस्य दूरापेतमिति क्रमेण नास्य स्पर्द्धोचिता । (३)तत्रापि च सामान्यतो दर्शपूर्णमासप्रकरणपादितैदमर्थ्यस्य शौनःशेपोपाख्यानादिवद्द्वारादुपकारकतया प्रकृतमात्रसम्बन्धानुपपत्तिः । (४)मन्त्रस्य प्रयोगसमवेतार्थस्मारणेन सामवायिकाङ्गत्वात् । तथा च यं कंचित्प्रकृतप्रयोगगतमर्थं प्रकाशयतो ऽस्य प्रकरणाङ्गत्वमविरुद्धमिति विशेषापेक्षायां (५)सान्नाय्यक्रमः सान्नाय्यं प्रति प्रकरणाद्यनुमानद्वारेण विनियोगं कल्पयितुमुत्सहते न

---

(१) ननु सन्निधिवशादभिषेचनीयस्य प्रकरणकल्पनेवाविशेषाद्राजसूयस्यापि प्रकरणात्सन्निधिः कल्प्यतामत आह प्रकरणिनश्चेति ।

(२) समाख्याश्रुतिः साक्षात्पुरोडाशपात्रमन्त्रसम्बन्धबोधिनीति यदुक्तम्, तत्राह समाख्येति । यौगिकशब्देन हि विशिष्टं द्रव्यमुच्यते न सम्बन्धः, तद्वाचित्वे हि सम्बन्धिनौ सम्बन्धश्चेति त्रयो वाच्याः स्युरतः सम्बन्ध आनुमानिक इति भावः ।

(३) ननु यथा शौनःशेपोपाख्यानादिकमभिषेचनीयसन्निधिबाधेन प्रकरणात्समस्तराजसूयाङ्गमेवमत्रापि सान्नाय्यत्वयं बाधित्वा समस्तदर्शपूर्णमासार्थत्वमेव मन्त्रस्यास्तु, तथाच क्रमसमाख्ययोः प्राबल्यदौर्बल्यचिन्ता व्यर्था इत आह तत्रापीति । (४) दृष्टार्थतया मन्त्रस्य सन्निपत्योपकारकत्वमाह मन्त्रस्येति ।

(५) प्रकरणापेक्षितविशेषसम्बन्धः स्थानेन समाख्यया वा बोध्य इति संशये निर्णयमाह सान्नाय्येति। असन्निहितयोः सम्बन्धायोगात्तत्सिद्ध्यर्थं सन्निधिमुपकल्पयतीत्यर्थः ।

तु समाख्यानम् । तस्य दुर्बलत्वात् । तथाहि । सामाख्या सम्बन्धनिबन्धना सती तत्सि- द्ध्यर्थं सन्निधिमुपकल्पयति यावत्तावद्वैदिकेन प्रत्यक्षदृष्टेन सन्निधानेनाकाङ्क्षा कल्प्यते(१)। यावच्च क्लृप्तेन सन्निधानेनाकाङ्क्षा कल्प्यते तावदितरत्र क्लृप्तयाकाङ्क्षयैकवाक्यता । यावा क्लृप्तयाकाङ्क्षयैकवाक्यता तावदितरत्रैकवाक्यतया क्लृप्तयोपकारसामर्थ्यम् । यावत्रैकवा- क्यतयोपकारसामर्थ्यं तावदितरत्र लिङ्गेन विनियोजिका श्रुतिः । यावदत्र लिङ्गेन विनियोजिका श्रुतिस्तावदितरत्रक्लृप्तया श्रुत्या विनियोग इति तावतैव प्रकरणपाठोपपत्तेः सर्वं समाख्यान- कल्पितं विच्छिन्नमूलत्वाद् लूयमानसस्यमिव निर्बीजं भवति, पुरोडाशाभिधायकमन्त्रबाहु- ल्यात् काण्डस्य पौरोडाशिकसमाख्येति मन्तव्यम् ।

(२)एकद्वित्रिचतुष्पञ्चवस्त्वन्तरयकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥
इत्यर्थविप्रकर्ष उक्तः । तत्रापि च
(३)बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥

इति विशेष उक्तो वृद्धैः । तद्वयं विस्तराद्बिभ्यतोऽपि प्रथमतन्त्रानभिज्ञानुकम्पया निघ्रा- विस्तरे पतिताः स्म इत्युपरम्यते । (४)तस्माद्यथानुज्ञापनानुज्ञयोः प्रज्ञातक्रमयोरुपहूत उपहू- यस्वेत्येवं मन्त्रावाम्नातौ देशसामान्यात्तथैवाङ्गतया प्राप्नुतः । उपहुत इति लिङ्गतोनुज्ञामन्त्रो, नानुज्ञापने, उपहूयस्वेति च लिङ्गतो ऽनुज्ञापने च मन्त्रो नानुज्ञायाम् । तदिह लिङ्गेन क्रमं बाधित्वा विपरीतं शेषत्वमापाद्यते(५)। यावद्धि स्थानेन प्रकरणमुत्पाद्यैकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोग इति अकल्पितलिङ्गश्रुतेः क्रमस्य बाधः । तद्वदिहापि विनियोगे प्रत्येकान्तरितेन लिङ्गेन चतुरन्तरितस्य विद्याक्रमस्य बाध इति । यद्यपि प्रथमतन्त्र एवायमर्थ उपपादितस्तथापि विरोधे तदुपपादनमिह त्वविरोधो नहि लिङ्गे- नाभिचारिककर्मसम्बन्धो विद्यासम्बन्धेन क्रमकृतेन विरुध्यते । न च विनियुक्तविनियोगल- क्षणोऽत्र विरोधो बृहस्पतिसवेऽपि तत्प्रसङ्गात् । अथैष प्रतीतिविरोधो न च वस्तुविरोधः, स विद्यायां विनियोगेऽपि तुल्यः । तस्मादविरोधाद्वेधादिमन्त्रस्योपासनाङ्गत्वमित्यस्त्य- भ्यधिका शङ्का ।

---

(१) साम्नाय्यपात्रमन्त्रयोरित्यर्थः । यावच्च क्लृप्तेनेति । पुरोडाशपात्रमंत्रयोरित्यर्थः ।

(२) अधिकरणपञ्चकार्थं दृष्टान्तत्या सङ्कलयति एकेति । लिङ्गस्यैकया श्रुत्या वाक्यस्य द्वाभ्यां लिङ्ग- श्रुतिभ्यां प्रकरणस्य वाक्यलिङ्गश्रुतिभिस्तिसृभिः स्थानस्य प्रकरणवाक्यलिङ्गश्रुतिभिश्चतसृभिः समाख्यायाः स्थानप्रकरणवाक्यलिङ्गश्रुतिभिः पञ्चभिः श्रुत्यर्थं विनियोगं प्रति अन्तरयो व्यवधानं प्रतीयत इति प्रथम- श्लोकार्थः ।

(३) सौकर्यार्थं बाध्यबाधकभावमपि विभजते बाधिकैवेति । तत्र मध्यमानां लिङ्गं वाक्यस्य बाधकं श्रुत्या बाध्यमित्यादिरीत्या बाध्यबाधकभावो बोध्यः ।

(४) एवं श्रुत्यादिषु बलाबले निरूप्य प्रस्तुते लिङ्गात्सन्निधिबाधे उपयुक्तमुदाहरणमाह तस्मादिति ।

(५) आदौ ह्यनुज्ञापनं पश्चादनुज्ञेति लोकसिद्धम् । तत्रोपहूत इति मन्त्रो यद्यपि प्रथमपाठितत्वादनु- ज्ञापने प्राप्तस्तथापि लिङ्गादनुज्ञायां शेषत्वेन प्रतिपाद्यते, उपहूयस्वेति च मन्त्रो यद्यपि चरमपाठितत्वादनु- ज्ञायां प्राप्तस्तथापि अनुज्ञायाचनप्रकाशनसामर्थ्यात्तच्छेषत्वेन प्रतिपाद्यत इत्यर्थः ।

तत्रोच्यते—

(१)नहि लिङ्गविरोधेन क्रमबाधोऽभिधीयते ।
किन्तु लिङ्गपरिच्छिन्ने न क्रमः कल्पनाक्षमः ॥

प्रकरणपाठोपपत्त्या हि श्रुतिलिङ्गवाक्यप्रकरणैरविनियुक्तः क्रमेण प्रकरणवाक्यलिङ्गश्रुतिकल्पनाप्रणालिकया विनियुज्यते, तदविनियुक्तस्य प्रकरणपाठानर्थक्यप्रसङ्गात् । उपपादिते तु श्रुत्यादिभिः प्रकरणपाठे क्षीणत्वादर्थापत्तेः क्रमो न स्वोचितां प्रमामुत्पादयितुमर्हति प्रमित्साभावादिति । बृहस्पतिसवस्य तु क्त्वाश्रुतिरेव धातुसम्बन्धाधिकारात्समानकर्तृकतायां विहितासंयोगपृथक्त्वेन विनियुक्तमपि विनियोजयन्ती न शक्या श्रुत्यन्तरेण निरोद्धुं स्वप्रमामिति वैषम्यम् । तदिदमुक्तम् **"वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तर"मिति । "अपि चैकोऽयं प्रवर्ग्य"** इति ( पृ० १९७ पं० ४ ) (२)तुल्यबलतया बृहस्पतिसवस्य तुल्यताशङ्कापाकरणद्वारेण समुच्चयो न तु पृथग्युक्तितया परस्परापेक्षत्वादिति । सन्निधिपाठमुपपादयति **"अरण्यानुवचनादी"**ति ॥ २५ ॥

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

यत्र हानोपायने श्रूयेते तत्राविवादः सन्निपाते, यत्राप्युपायनमात्रश्रवणं तत्राऽपि नान्तरीयकतया हानमाक्षिप्तमित्यस्ति सन्निपातः । यत्र तु हानमात्रं सुकृतदुष्कृतयोः श्रुतं न श्रूयते उपायनं, तत्र किमुपायनमुपादानं सन्निपतेन्न वेति संशयः । अत्र पूर्वपक्षं गृह्णाति— **"असन्निपात"**इति ( पृ० ७९७ पं० ११ ) । स्यादेतत्, यथा श्रूयमाणमेकत्र शाखायामुपासनाङ्गं तस्मिन्नेव चोपासने शाखान्तरेऽश्रूयमाणमङ्गमुपसंह्रियते , एवं शाखान्तरश्रुतमुपायनमुपसंहरिष्यत इत्यत आह—**"विद्यान्तरगोचरत्वाच्चे"**ति । एकत्वे ह्युपासनकर्मणामन्यत्र श्रुतानामप्यन्यत्र समवायो घटते , न त्विहोपासनानामेकत्वं, सगुणनिर्गुणत्वेन भेदादित्यर्थः । (३)ननु यथोपायनं श्रुतं हानमुपस्थापयत्येवं हानमपि उपायनमित्यत आह— **"अपि चात्मकर्त्तृक"**मिति । ग्रहणं हि न स्वामिनोपगममन्तरेण भवतीति ग्रहणादपगमसिद्धिरवश्यंभाविनी, अपगमस्त्वसत्यप्यन्येन ग्रहणे दृष्टो, यथा प्रायश्चित्तेनापगतिरेनस इति । कर्तृभेदकथनं त्वेतदुपोद्बलनार्थं न पुनरनवश्यम्भावस्य प्रयोजकमुपायनेनानैकान्त्यादिति ।

---

( १ ) प्रथमतन्त्रे हि श्रुत्यादिभिर्लिङ्गादीनां बाध उक्तः, अत्र तु लिङ्गात्क्रमस्य बाधो नोच्यते किन्तु शीघ्रं लिङ्गेनान्यत्र विनियुक्ते मन्त्रे विलम्बेन क्रमस्य परिच्छेदकत्वमेव नास्तीति प्रतिपाद्यते, तत्र क्रमस्यापरिच्छेदकत्वे ज्ञाते कुतो विनियुक्तविनियोगशङ्केत्याह नहीति । श्लोकं विवृणोति प्रकरणेति ।

( २ ) भाष्ये बृहस्पतिसवस्य तुल्यबलप्रमाणद्वयादुभयार्थत्वे स्थिते प्रवर्ग्यस्यापि बृहस्पतिसवने तुल्यत्वाशङ्कायां सन्निधेर्दुर्बलत्वादतुल्यत्वं प्रतिपादितम्, तथासति अपिचशब्दानुपपत्तिरित्याशङ्क्य नाभ्युच्चयार्थः सः किन्त्वेतदुपपत्तिवाहित्यं पूर्वोक्तन्यायस्य वदतीत्याह तुल्यबलतयेति ।

( ३ ) यद्यपि सगुणविद्यायां हानसन्निधावुपायनं श्रुतन्तथापि निर्गुणविद्यास्थं हानन्तदाक्षिपति तदन्तरेण तदनुपपत्तेरिति शङ्कते ननु यथेति । कर्तृभेदो नाऽनावश्यकत्वे प्रयोजकः परकर्तृकहानानियतेनं स्वकर्तृकोपादानेनानैकान्तादित्यर्थः ।

सिद्धान्तमुपक्रमते—अस्यां प्राप्ताविति । अयमस्यार्थः कर्मान्तरे विहितं हि न कर्मान्तर(१) उपसंह्रियते प्रमाणाभावात् । यत्पुनर्नविधीयते किन्तु स्तुत्यर्थं सिद्धतया सङ्कीर्त्यते, तदसति बाधके देवताधिकरणन्यायेन शब्दतः प्रतीयमानं परित्यक्तुमशक्यम् । तथा च विधूतयोः सुकृतदुष्कृतयोर्निर्गुणायां विद्यायामश्वरोमादिवत्किं भवत्वित्यकाङ्क्षायां न तावत् प्रायश्चित्तेनेव तद्विलयसम्भवस्तथासत्यश्वरोमराहुदृष्टान्तानुपपत्तेः, न जात्वश्वरोमराहुमुखयोर्विलयनमस्ति, अपि त्वश्वचन्द्राभ्यांविभागः । न(२) च नष्टे विधूननप्रमोचनार्थसम्भवः । तस्मादर्थवादस्यापेक्षायां शब्दसन्निधिकृतोपि विशेष(३) उपायनं बुद्धौ सन्निधापयितुं शक्नोत्यपेक्षां पूरयितुमिति । निर्गुणापि विद्या हानोपायनाभ्यां स्तोतव्या । (४) स्तुतिप्रकर्षस्तु प्रयोजनं न प्रमाणम्, अप्रकर्षे ऽपि स्तुत्युपपत्तेः । न चार्थवादान्तरापेक्षार्थवादान्तराणां न दृष्टा, न च तैर्न पूरणमित्याह—"प्रसिद्धा चे"ति (पृ० ७९८ पं० ७)। "स्तुत्यर्थत्वाच्चास्योपायनवादस्ये"ति । यद्यप्यन्यदीये अपि सुकृतदुष्कृते अन्यस्य फलं प्रयच्छतो, यथा पुत्रस्य श्राद्धकर्म पितुः तृप्तिं, यथा च पितुर्वैश्वानरीयेष्टिः पुत्रस्य, नार्याश्च सुरापानं भर्तुर्नरकम्, तथाऽप्यन्यदीये अपि सुकृतदुष्कृते साक्षादन्यस्मिन्न सम्भवत इत्याशयेन शङ्का, फलतः प्राप्त्या स्तुतिरिति परिहारः। गुणोपसंहारविवक्षायामित्यपि न स्वरूपतः सुकृतदुष्कृतसञ्चाराभिप्रायम् । ननु विद्यागुणोपसंहाराधिकारे कोऽयमकाण्डेस्तुत्यर्थविचार इति शङ्कामुपसंहरन्नपाकरोति—"तस्माद्गुणोपसंहारविचारप्रसङ्गेने"ति । ( पृ० ७९९ पं० २ ) । विद्यागुणोपसंहारप्रसङ्गतः (५)स्तुतिगुणोपसंहारो विचारितः प्रयोजनं चोपासके सौहार्दमाचरितव्यम्, न त्वसौहार्दमिति । छन्द एवाच्छन्द (६)आ च्छादनादाच्छन्दो भवति । "यथैव चाविशेषेणोपगानमि"ति । ऋत्विज उप गायन्तीत्यविशेषेणोपगानमृत्विजाम् । भाल्लविनस्तु विशेषेण नाध्वर्युरुपगायतीति । (७)तदेतस्माद्भाल्लविनां वाक्यमृत्विज उपगायन्तीत्येतच्छेषं विज्ञायते । एतदुक्तं भवति—अध्वर्युवर्जिता ऋत्विज उपगायन्तीति । कस्मात्पुनरेवं व्याख्यायते ? ननु स्वतन्त्राण्येव सन्तु वाक्या-

---

( १ ) यदुक्तं विद्याभेदादनुपसंहार इति, तत्राह कर्मान्तर इति ।

(२) न केवलमश्वरोमदृष्टान्ताद् सुकृतादिविलयलाभः किन्तु विधूय प्रमुच्येति श्रुतिभ्यामपीत्याह नचेति।

( ३ ) हानोपायनशब्दयोः कौषीतकिशाखायां सन्निधिरस्ति तत्कृतो विशेष इत्यर्थः ।

( ४ ) यद्यश्वरोमदृष्टान्ताद्विधूतयोः सुकृतदुष्कृतयोः परत्रावस्थानसापेक्षत्वादन्यत्र हानसन्निधौ श्रुतमुपायनं केवलहानश्रवणेप्यपेक्षितत्वादायाति इति व्याख्यायते कथन्तर्हि भाष्यकारेण स्तुतिप्रकर्षलाभायेति स्तुतिप्रकर्षमुपायनोपसंहारकल्पकं प्रमाणमाचक्षितमत आह स्तुतिप्रकर्षस्त्विति । स्तुतिर्हि विद्यायाः कार्या सा च केवलश्रुतहानेनाप्युपपद्यते, एवं हि प्रकर्षोऽपिद्येत यद्यप्रकर्षे स्तुतिर्न स्यात्तन्नास्ति, तस्मात्प्रमाणासिद्धस्योपयनोपसंहारस्य प्रयोजनं भाष्ये उक्तमित्यर्थः ।

( ५ ) स्तुतिगुणेति । स्तुत्युपयोगी गुणः सुकृतदुष्कृतयोः परत्र सञ्चारः तदुपसंहारो विचारितो यद्यपि स नोपास्य इत्यर्थः ।

( ६ ) कुशशब्दोत्र न स्त्रीलिङ्गः सूत्रे, अस्त्रीकुशमिति कोशात्, अतस्तदविरोधेन सूत्रेण पदं छिनत्ति आच्छन्द इति । आच्छादनादिति आ उपसर्गार्थः । अनुष्ठातारं पापादाच्छादयतीति आच्छन्द इत्यर्थः । श्रूयते हि छादयन्ति हि वा एनं छन्दांसि पापात्कर्मण इति।

( ७ ) विकल्पपरिहाराय वाक्यस्य पर्युदासार्थत्वमाह तदेतदिति ।

नीत्यत आह–"श्रुत्यन्तरकृतमि"ति (पृ०८००पं०२)अष्टदोष(१)दुष्टविकल्पप्रसङ्गभयेन वाक्यान्तरस्य वाक्यान्तरशेषत्वमत्रभवतो जैमिनेरपि संमतमित्याह–"तदुक्तं" द्वादशलक्षण्याम् । अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादिति, एतदेव सूत्रमर्थद्वारेण पठति–**अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्** स चान्याय्य इति शेषः। (२)एवं किल श्रूयते 'एष वै सप्तदशः प्रजापतिर्यज्ञे यज्ञेऽन्वायत्त' इति । ततो नानुयाजेषु येयजामहं करोतीति, तदत्रानारभ्य कंचिद्यज्ञं यज्ञेषु येयजामहकरणमुपादिष्टम् , तदुपदिश्य चाम्नातं नानुयाजेष्विति । तत्र संशयः किं विधिप्रतिषेधयोर्विकल्प उत पर्युदासो अनुयाजवर्जितेषु येयजामहः कर्त्तव्य इति । (३)मा भूदर्थप्राप्तस्य शास्त्रीयेण निषेधेन विकल्पः, दृष्टं हि तादात्विकीमस्य सुन्दरतां गमयति नायतौ दोषवत्तां निषेधति, तस्य तत्रौदासीन्यात् । निषेधशास्त्रं तु तादात्विकं सौन्दर्यमबाधमानमेव प्रवृत्त्युन्मुखं नरं निवारयदायत्यामस्य दुःखफलत्वमवगमयति । यथाह 'अकर्त्तव्यो दुःखफल' इति । ततो रागतः प्रवृत्तमप्यायत्यां दुःखतो बिभ्यतं पुरुषं शक्नोति निवारयितुमिति, बलीयान् शास्त्रीयः प्रतिषेधो रागतः प्रवृत्तेरिति न तया विकल्पमर्हति । शास्त्रीयौ तु विधिनिषेधौ तुल्यबलतया षोडशिग्रहणाग्रहणवद्विकल्प्येते । (४) तत्र हि विधिदर्शनात्प्रधानस्योपकारभूयस्त्वं कल्प्यते, निषेधदर्शनाच्च वैगुण्ये ऽपि फलसिद्धिरवगम्यते । (५)यथाह–'अर्थप्राप्तवदिति चेन्न तुल्यत्वात् उभयं शब्दलक्षणमि'ति । (६)न च वाच्यं यावद्यजतिषु येयजामहकरणं यावद्यजतिसामान्यद्वारेणानुयाजं यजतिविशेषमुपसर्पति तावदनुयाजगतेन निषेधेन तन्निषिद्धमिति शीघ्रप्रवृत्तेः सामान्यशास्त्राद्विशेषनिषेधो बलवानिति, यतो भवत्वेवंविधिषु ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति, तत्र तक्रविधिर्न दधिविधिमपेक्षते प्रवर्त्तितुमिह तु प्राप्तिपूर्वकत्वात्प्रतिषेधस्य येयजामहस्य चान्यतोप्राप्तस्तन्निषेधेन निषेधाप्राप्त्यै तद्विधिरपेक्षणीयः । (७)न च सापेक्षतया निषेधाद्विधिरेव बलीयानित्यतुल्यशिष्टतया न विकल्पः किन्तु निषेधस्यैव बाधनमिति साम्प्रतम्, तथा सति निषेधशास्त्रं प्रमत्तगीतं स्यात् । न च

---

(१) तदभावो नाडीत्यित्यत्र सूत्रेऽष्टदोषा वर्णिताः ।

(२) पर्युदासाधिकरणविषयमाह एवमिति ।

(३) ननु प्रतिषेधेपि कथं विकल्पप्राप्तिः, प्रतिषेधस्य प्रतिषेध्यं प्रति प्रबलत्वात् भुजङ्गायाङ्गुलिर्न देयेतिवदिति शङ्कां निराकुर्वन्पूर्वपक्षमाह मा भूदित्यादिना । तत्र हेतुमाह दृष्टमिति । तात्कालिकश्रेयःसाधनत्वं प्रत्यक्षबोधितं, प्रतिषेधेन तु कालान्तरीयदुरितहेतुत्वं ज्ञाप्यत इति विषयभेदेन तुल्यार्थोपनिपाताभावान्न विकल्प इत्यर्थः ।

(४) ननु कथं षोडशिग्रहणाग्रहणयोर्विकल्पः, अकरणेऽपि क्रतूपकारसिद्धौ करणवैयर्थ्यादत आह तत्रहीति । उपकारभूमार्थिनोऽनुष्ठानमुपकारमात्रार्थिनोऽननुष्ठानमिति विकल्प इत्यर्थः ।

(५) शास्त्रीयविधिनिषेधयोस्तुल्यबलत्वमित्यत्र जैमिनीयं सूत्रमुदाहरति यथाहेति । प्रतिषेध्यप्राप्तेः प्रतिषेधस्य च तुल्यप्रमाणकत्वात्प्रवृत्तितत्प्रतिषेधरूपं शब्दप्रमाणकमिति तदर्थः ।

(६) विधिनिषेधयोः शास्त्रीयत्वेऽपि सामान्यविशेषविषयत्वेनातुल्यबलत्वं स्यादित्याशङ्कायामाह नचेति ।

(७) तर्हि विधिरेव निषेधेनोपजीव्यत्वात्प्रबलः स्यात् तथाच कथं विकल्पावकाशस्तत्राह न च सापेक्षतयेति । अनन्यगतिकत्वान्निषेधस्य विधिना तुल्यबलत्वं कल्प्यमित्यर्थः ।

तद्युक्तं तुल्यं हि सांप्रदायिकम्। (१)न च 'नतौ पशौ करोती'तिवदर्थवादता । असमवेतार्थत्वात्। पशौ हि नाज्यभागौ स्त इत्युपपद्यते। (२) न चात्र तथा येयजामहाभावो, यजतिषु येयजामहविधानात्, अनुयाजानां च तद्भावात्। न च पर्युदासस्तदा(३)ऽनुयाजेष्विति कात्यायनमतेन नियमप्रसक्तेः। तस्माद्विहितप्रतिषिद्धतया विकल्प इति प्राप्तम्।

एवं प्राप्त उच्यते—"उक्तं षोडशिग्रहणाग्रहणयोर्विकल्प" इति । नहि तत्रान्या गतिरस्ति। तेनाष्टदोषदुष्टोऽपि विकल्प आस्थीयते, पक्षेऽपि प्रामाण्यान्माभूत्प्रमत्तगीततेति, इह तु पर्युदासेनाप्युपपत्तौ सम्भवन्त्यामन्याय्यं विकल्पाश्रयणमयुक्तम्। एवं हि तदा नमः सम्बन्धो ऽननुयाजेषु यजतिष्वनुयाजवर्जितेषु येयजामहः कर्तव्य इति। किमतो ? (४) यद्येवमेतदतो भवति—नानुयाजेष्वित्येतद्वाक्यमपरिपूर्णं साकाङ्क्षं पूर्ववाक्यैकदेशेन सम्भन्त्स्यते यदेतद्येयजामहं करोतीति एतान्नानुयाजेषु यावदुक्तं स्यादनुयाजवर्जितेष्विति तावदुक्तं भवति नानुयाजेष्विति। तथा च यजतिविशेषणार्थत्वादननुयाजविधिरेवायमिति प्रतिषेधाभावान्न विकल्पः, न चाभियुक्ततरपाणिनिविरोधे कात्यायनस्य सह्यादित्वं नित्यसमासवादिनः सम्भवति, स हि विभाषाधिकारे समासं शास्ति । तस्मादनुयाजवर्जितेषु येयजामहविधानमिति सिद्धम्।

वर्णकान्तरमाह—"अथ वैतास्वि"ति । (५)यथा हि सुकृतदुष्कृतयोरमूर्तयोः कम्पनं नाञ्जसं मूर्त्यनुविधायित्वात् कम्पस्य। तथा ऽन्यदीययोरन्यत्र सञ्चारोऽप्यनुपपन्नो ऽमूर्तत्वादेव। तस्माद्यत्र विधूननमात्रं श्रुतं तत्र कम्पनेनं वरं स्वकार्यारम्भाच्चालनमात्रमेव लक्ष्यतां न तु ततोपगत्यान्यत्र संचारः कल्पनागौरवप्रसङ्गात् । तस्मात्स्वकार्यारम्भाच्चालनं विधूननमिति प्राप्तेऽभिधीयते। (६)यत्र तावदुपायनश्रुतिस्तत्रावश्यं त्यागो विधूननं वक्तव्यम्। क्व चिदपि चेद्विधूननं त्यागे वर्तते, तथा सत्यन्यत्रापि तत्रैव वर्तितुमर्हति। एवं हि न वर्तेत यदि विधूननमिह मुख्यं लभ्येत, न चैतदस्ति, तत्रापि स्वकार्याच्चालनस्य लक्ष्यमाणत्वात्। (७) न च प्रामाणिकं कल्पनागौरवं कोहगन्धितामाचरत्यपि चानेकार्थत्वाद् धातूनां त्यागे ऽपि विधूयेति मुख्यमेव भविष्यति—प्राचुर्येण त्यागेऽपि लोके प्रयोगदर्शनात्(८), विनिगमनाहेतोरभावात्। गणकारस्य चोपलक्षणत्वेनाप्यर्थनिर्देशस्य तत्र दर्श-

---

(१) नन्वर्थवादेन गतिसम्भवान्नानन्यगतिकत्वमत आह नचेति।

(२) अर्थवादतेति शेषः। असमवेतार्थत्वादिति विवृणोति नचेति।

(३) नानुयाजेष्विति अयं पर्युदासो यदि स्यात्तदा सुबन्तेन नञो योगात्समासः स्यात्कात्यायनेन समासनियमस्य स्मृतत्वादिति भावः ।

(४) ननु पर्युदासेऽपि कुतो न विकल्पः, अनुयाजवर्जितेष्वित्युक्ते ये यजामहस्यानुमानविच्छेदप्रतीतेः सामान्यविधिना च सम्बन्धप्रतीतेरिति शङ्कते कियत इति। परिहरति एतदिति।

(५) अमूर्तयोः सुकृतदुष्कृतयोश्चालनानुपपत्तेः पूर्वपक्षासम्भवमाशङ्क्य सिद्धान्तेऽपि साम्यमाह यथाहीति

(६) उपायनसन्निधौ श्रुतो विधूननशब्दस्तावत्त्यागं लक्षयति ततोऽन्यत्रापि केवलविधूननशब्दश्रुतौ प्रवृत्तत्वात् सैव लक्षणा बुद्धिस्था भवतीति न स्वफलाच्चालनलक्षणा तस्या निवृत्तत्वादित्याह यत्रेति।

(७) नन्वत्र कल्पनागौरवदोषोऽभिहितस्तत्राह नचेति।

(८) अवधूत इत्यादौ त्यागे धुनोतेः बहुलं प्रयोगदर्शनादित्यर्थः।

नात् । तस्माद्धानार्थं एवात्रेति युक्तम् ॥ २६ ॥

## साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

ननु पाठक्रमादर्द्धपथे सुकृतदुष्कृततरणे प्रतीयेते, विद्यासामर्थ्याच्च प्रागेवावगम्येते, तथा शाट्यायनिनां ताण्डिनां च श्रुतेः श्रुत्यर्थौ च पाठक्रमाद्बलीयांसौ, अग्निहोत्रं जुहोति यवागूं पचति इत्यत्र यथा । तस्मात्पूर्वपक्षाभावादनारम्भ्यमेतत् । अत्रोच्यते । नैतत्पाठक्रममात्रमपि तु श्रुतिस्तत्सुकृतदुष्कृते विधूनुत इति । तदिति हि सर्वनाम, तस्मादर्थे संनिहितपरामर्शकं तस्य हेतुभावमाह । संनिहितं च यदनन्तरं श्रुतम् । तच्चार्द्धपथवर्ति विरजानदीमनोऽभिगमनमित्यर्द्धपथ एव सुकृतदुष्कृतत्यागः । न च श्रुत्यन्तरविरोधः । (१) अर्द्धपथेऽपि पापविधूनने ब्रह्मलोकसम्भवात्प्राक्कालतोपपत्तेः । एवं शाट्यायनिनामप्यविरोधः । नहि तत्र जीवान्निति वा जीवत इति वा श्रुतम् । तथा चार्द्धपथ एव सुकृतदुष्कृतविमोकः । एवं च न पर्यङ्कविद्यातस्तत्प्रक्षय इति पूर्वः पक्षः ।

राद्धान्तस्तु (२)विद्यासामर्थ्यविधूतकल्मषस्य ज्ञानवत उत्तरेण पथा गच्छतो ब्रह्मप्राप्तिर्न चाप्रक्षीणकल्मषस्योत्तरमार्गगमनं सम्भवति । यथा यवागूपाकात्प्रागग्निहोत्रम् । यमनियमाद्यनुष्ठानसहिताया विद्याया उत्तरेण मार्गेण पर्यङ्कस्थब्रह्मप्राप्त्युपायत्वश्रवणात् । अप्रक्षीणपाप्मनश्च तदनुपपत्तेः, विद्यैव (३)तादृशी कल्मषं क्षपयति क्षपितकल्मषं चोत्तरमार्गं प्रापयति इति कथमर्द्धपथे कल्मषक्षयः । तस्मात्पाठक्रमबाधनार्थक्रमो ऽनुसर्तव्यः । (४)ननु न पाठक्रममात्रमत्र तदिति सर्वनामश्रुत्या सन्निहितपरामर्शादित्युक्तम् । तदयुक्तं, बुद्धिसन्निधानमात्रमत्रोपयुज्यते नान्यत्, तच्चानन्तरस्येव विद्याप्रकरणाद्विद्याया अपीति समाना श्रुतिरुभयत्रापीति । अर्थपाठौ परिशिष्येते तत्र चार्थो बलीयानिति । न च ताण्ड्यादिश्रुत्यविरोधः पूर्वपक्षे । अश्व इव रोमाणि विधूयेति हि स्वतन्त्रस्य पुरुषस्य व्यापारं ब्रूते न च परेतस्यास्ति स्वातन्त्र्यम्, तस्मात्तद्विरोधः ॥२७ ॥

## छन्दत उभयाविरोधात् ॥ २८ ॥

केभ्यश्चित्पदेभ्य इदं सूत्रम् । ननु यथा परेतस्योत्तरेण पथा ब्रह्मप्राप्तिर्भवतीति विद्याफलमेवं तस्यैवार्द्धपथे सुकृतदुष्कृतहानिरपि भविष्यतीति शङ्कापदानि तेभ्य उत्तरमिदं सूत्रम् । तथाचेह—"यदि च देहादपसृतस्ये"ति ( पृ० ८०३ पं० ७ ) । (५)विद्याफलमपि ब्रह्मप्राप्तिर्नापरेतस्य भवितुमर्हति शङ्कापदेभ्यः । यथाहुः–'नाजनित्वा (६) तत्र गच्छन्ती'ति । सुकृतदुष्कृतप्रक्षयस्तु सत्यपि नरशरीरे सम्भवतीति समर्थस्य हेतोर्यमनियमादिसहिताया

---

( १ ) ताण्डिनां श्रुतिविरोधं परिहरति अर्धपथेपीति । विधूय पापमिति हि ब्रह्मलोकप्राप्तेः प्राक्कालतोच्यते सा चार्धपथे विधूननेऽप्युपपद्यत इत्यर्थः ।

( २ ) सर्वनामश्रुतेरन्यथासिद्धिमभिधास्यन् पाठक्रमभञ्जकमर्थक्रमं तावदाह विद्यासामर्थ्येति । यवागूपाकस्याग्निहोत्रात्पूर्वकालत्वे सामर्थ्यं होमस्य द्रव्यापेक्षत्वेनावगतम् । विद्यायाः पापक्षयहेतुत्वे प्रमाणमाह यमनियमादीति । ( ३ ) यमादिसहिता ।

( ४ ) तच्छब्दश्रुतिविरोधमुक्तमनूद्य निराचष्टे ननु न पाठेत्यादिना ।

( ५ ) शङ्कामन्योक्तदृष्टान्तात्तैषम्यमाह विद्याफलमपीति । ( ६ ) देहभावेनानुत्पद्य ।

विद्यायाः कार्यक्षयायोगाद्युक्तो जीवत एव सुकृतदुष्कृतक्षय इति सिद्धम् । छन्दतः, स्वच्छन्दतः स्वेच्छयेति यावत् । स्वेच्छयानुष्ठानं यमनियमादिसहिताया विद्यायास्तस्य जीवतः पुरुषस्य स्यान्न मृतस्य, तत्पूर्वकञ्च सुकृतदुष्कृतहानं स्याज्जीवत एव, समर्थस्य क्षेपायोगात् । एवं कारणानन्तरङ्कार्योत्पादे सति निमित्तनैमित्तकयोस्तद्भावस्योपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च सङ्गतिरितरथा स्वातन्त्र्याभावेनासङ्गतिरुक्ता स्यात् । तदनेनोभयाविरोधो व्याख्यातः । ये तु परस्य विदुषः सुकृतदुष्कृते कथं परत्र सङ्क्रामत इति शङ्कोत्तरतया सूत्रं व्याचख्युः । छन्दतः सङ्कल्पत इति, श्रुतिस्मृत्योरविरोधादेव(१), न त्वत्रागमगम्येऽर्थे स्वातन्त्र्येण युक्तिर्निवेशनीयेति । (२)तेषामधिकरणशरीरानुप्रवेशे सम्भवत्यर्थान्तरोपवर्णनमसङ्गतमेवेति ॥२८॥

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

(३)यथा हानिसन्निधावुपायनमन्यत्र श्रुतमिति, यत्रापि केवला हानिः श्रूयते तत्रापि उपायनमुपस्थापयत्येवं तत्सन्निधावेव देवयानः पन्थाः श्रुत इति यत्रापि सुकृतदुष्कृतहानिः केवला श्रुता तत्रापि देवयानं पन्थानमुपस्थापयितुमर्हति । न च 'निरञ्जनः परमं साम्यमुपैती'त्यनेन विरोधः। देवयानेन पथा ब्रह्मलोकप्राप्तौ निरञ्जनस्य परमसाम्योपपत्तेः । तस्माद्धानिमात्रे देवयानः पन्थाः सम्बध्यत इति प्राप्तम् ।

एवं प्राप्त उच्यते—'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'ति हि विदुषो विधूतपुण्यपापस्य विद्यया क्षेमप्राप्तिमाह । भ्रमनिबन्धनोऽक्षेमो याथात्म्यज्ञानलक्षणया विद्यया विनिवर्तनीयः,नासौ देशविशेषमपेक्षते । नहि जातु रज्जौ सर्पभ्रमनिवृत्तये समुत्पन्नं रज्जुतत्त्वज्ञानं देशविशेषमपेक्षते,विद्योत्पादस्यैव स्वविरोध्यविद्यानिवृत्तिरूपत्वात् । न च विद्योत्पादाय ब्रह्मलोकप्राप्तिरपेक्षणीया, यमनियमादिविशुद्धसत्त्वस्येहैव श्रवणादिभिर्विद्योत्पादात् । यदि परमारब्धकार्यकर्मक्षपणाय शरीरपातावध्यपेक्षेति न देवयानेनास्तीहार्थ इति (४)श्रुतिदृष्टविरोधात् नापेक्षितव्य इति । अस्ति तु पर्यङ्कविद्यायां तस्यार्थ इत्युक्तं द्वितीयेन सूत्रेणेति । (५)ये तु यदि पुण्यमपि निवर्तते किमर्था तर्हि गतिरित्याशङ्क्य सूत्रमवतारयन्ति—गतेरर्थवत्त्वमुभयथा दुष्कृतनिवृत्त्या सुकृतनिवृत्त्या च, यदि पुनः पुण्यमनुवर्तेत ब्रह्मलोकगतस्यापीह पुण्यफलोपभोगायावृत्तिः स्यात् , तथा चैतेन प्रतिपाद्यमाना इत्यनावृत्तिश्रुतिविरोधः, तस्माद्दुष्कृत-

---

(१) उभयाविरोधादित्यस्यायमर्थः । ननु श्रुतिस्मृतिभ्यामपि कथममूर्तयोः सुकृतदुष्कृतयोराश्रयान्तरसञ्चारस्तत्राह न त्वत्रेति ।

(२) उक्तभास्करमतं दूषयति तेषामिति । भवन्नप्ययं विचारो हानौ त्वित्यधिकरणे सङ्गच्छते नात्र, ततः शङ्कोत्तरत्वेनास्मत्कृतव्याख्यानमेवात्र सङ्गतमित्यर्थः ।

(३) विद्योदयाव्यवहितोत्तरक्षण एव कर्मदाह इति प्रासङ्गिकनिरूपणान्ते प्रस्तुतगुणोपसंहारविस्तारापवादकत्वेनाधिकरणं सम्बन्धयन् पूर्वपक्षमाह यथेति ।

(४) एवं मोक्षार्थं विद्योत्पत्त्यर्थं च नार्चिराद्यपेक्षेत्युक्तमर्थं निगमयन्नाह इति श्रुतिदृष्टविरोधादिति । निरञ्जनपरमिति श्रुतिः, दृष्टं न्यायः ।

(५) भास्करमतमाह ये त्विति । विदुषः पुण्यमपि निवर्तते चेत् भोगप्रयोजकाभावात् गतिर्वृथा स्यादित्यर्थः ।

स्यैव सुकृतस्यापि प्रक्षय इति । तैः(१)पुनरनाशङ्कनीयमेवाशङ्कितम् । विद्याक्षिप्तायां हि गतौ केयमाशङ्का ? यदि क्षीणसुकृतः किमर्थमयं यातीति, नह्येषा सुकृतानिबन्धना गतिरपि तु विद्यानिबन्धना । तस्माद् यथोक्तमेवोपवर्णनं साध्विति ॥ २९ ॥ ३० ॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

(२)प्रकरणं हि धर्माणां नियामकम् । यदि तु तन्नाद्रियेत ततो दर्शपूर्णमासज्योतिष्टोमादिधर्माः सङ्कीर्येरन् । न च तेषां विकृतिषु सौर्यादिषु द्वादशाहादिषु च चोदकतः प्राप्तिः, सर्वत्रौपदेशिकत्वात् । (३)न च दर्विहोमस्याप्रकृतिविकारभूतस्याधर्मकत्वम् । न च सर्वधर्मयुक्तं कर्म किंचिदपि शक्यमनुष्ठातुम् । न चैवंसति श्रुत्यादयोऽपि विनियोजकास्तेषामपि हि प्रकरणेन सामान्यसम्बन्धे सति विनियोजकत्वात् । यत्रापि विना प्रकरणं श्रुत्यादिभ्यो विनियोगोऽवगम्यते तत्रापि तन्निर्वाहाय प्रकरणस्यावश्यं कल्पनीयत्वात् । तस्मात्प्रकरणं विनियोगाय तन्नियमाय चावश्याभ्युपेतव्यमन्यथा श्रुत्यादीनामप्रामाण्यप्रसक्तेः । तस्माद्यास्वेवोपासनासु देवयानः पितृयाणो वा पन्था आम्नातस्तास्वेव न तूपासनान्तरेषु तदनाम्नानात् । (४)न च 'ये चेमेऽरण्ये श्रद्धां तप इत्युपासते' इति सामान्यवचनात् सर्वविद्यासु तत्पथप्राप्तिः, श्रद्धातपःपरायणानामेव तत्र तत्पथप्राप्तिः श्रूयते, न तु विद्यापरायणानाम् । अपि च एवंसत्येकस्यां विद्यायां मार्गोपदेशः सर्वासु विद्यास्वित्येकत्रैव मार्गोपदेशः कर्तव्यो न विद्यान्तरे, विद्यान्तरे च श्रूयते । तस्मान्न सर्वोपासनासु पथिप्राप्तिरिति प्राप्तम् ।

एवं प्राप्त उच्यते । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति न श्रद्धातपोमात्रस्य पथिप्राप्तिमाहापि तु 'विद्यया तदारोहन्ती'त्यत्र नाविद्वांसस्तपस्विन इति केवलस्य तपसः श्रद्धायाश्च तत्प्राप्तिप्रतिषेधाद् विद्यासहिते श्रद्धातपसी तत्प्राप्त्युपायतया वदन् विद्यान्तरशीलानामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां दर्शयति । (५)तथाऽन्यत्रापि पञ्चाग्निविद्याधिकारेऽभिधीयते 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासत' इति । सत्यशब्दस्य ब्रह्मण्येवानपेक्षप्रवृत्तित्वात् । तदेव हि सत्यमन्यस्य मिथ्यात्वेन कथंचिदापेक्षिकसत्यत्वात् , पञ्चाग्निविदां चेत्थंवित्तयैवोपात्तत्वात् । (६)विद्यासाहचर्याच्च विद्यान्तरपरायणानामेवेदमुपादानं न्याय्यम् , मा·

---

(१) पुण्यक्षयेऽप्युपासते भोगप्रयोजिकाया विद्यमानत्वादाशङ्कानुत्थानं दूषयति तैरिति ।

(२) ननु ब्रह्मलोकप्राप्तेर्गत्यपेक्षत्वात्तत्फलासु सकलसगुणविद्यासु लिङ्गाद्गतिसिद्धेः कथं दुर्बलेन प्रकरणेन गतिव्यवस्था शङ्क्यते तत्राह प्रकरणमिति । लिङ्गस्य सामान्यसम्बन्धसापेक्षत्वात्प्रकृते च तदभावादविनियोजकत्वे प्रकरणाद्व्यवस्थेत्यर्थः । यदि पञ्चाग्निविद्यासु श्रुतापि गतिर्विद्यान्तरे सञ्चार्येत ततोऽतिप्रसङ्गमाह यदीति ।

(३) अतिप्रसङ्गान्तरमाह न च दर्वीति । एकयर्चा हवने दर्विहोमविधिः । तत्र दर्विहोमा धर्मिग्राहिणो न वेति सन्देहे सोमयागसाम्यात्तद्धर्मप्राप्तावष्टमे राद्धान्तो विहितोऽग्निहोत्रहवनादेरेव दर्विहोमस्य विहोमत्वात् सोमस्य च यागशब्दवैषम्येन न प्रकृतिविकृतिभावः किन्त्वपूर्वो दर्विहोम इति तस्याधर्मकत्वासिद्धिरिति।

(४) प्रकरणस्य वाक्याद्बाधमाशङ्क्याह नचेति ।

(५) वाजसनेयगतपञ्चाग्निविद्यायां साक्षात्सत्यब्रह्मोपासनस्यार्चिरादिप्राप्तिसाधनत्वप्रतीतेर्वाक्येन प्रकरणबाधया सर्वसगुणब्रह्मविद्यानामर्चिरादिनैव ब्रह्मलोकप्राप्तिसाधनत्वमित्याह तथान्यत्रेति ।

(६) न केवलं लौकिकसत्यस्यापेक्षिकत्वाद्ब्रह्मणश्च निरङ्कुशसत्यत्वात्सत्यमुपासत इति ब्रह्मोपासनया

गेंद्वयप्रष्ठानां चाधोगतिश्रवणात् । तत्रापि च योग्यतया देवयानस्यैवेहाऽध्वनोऽभिसम्बन्धः । एतदुक्तं भवति—भवेत्प्रकरणं नियामकं यद्यनियमप्रतिपादकं वाक्यं श्रौतं स्मार्तं वा न स्यादस्ति तु तत्तस्य च प्रकरणाद् बलीयस्त्वम्(१) । तस्मादनियमो विद्यान्तरेष्वपि सगुणेषु देवयानः पन्था, असकृन्मार्गोपदेशस्य च प्रयोजनं वर्णितं भाष्यकृतेति ॥ ३१ ॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥

सगुणायां विद्यायां चिन्तां कृत्वा निर्गुणायां चिन्तयति। निर्गुणायां विद्यायां नापवर्गः फलं भवितुमर्हति। श्रुतिस्मृतीतिहासपुराणेषु विदुषामपि अपान्तरतमःप्रभृतीनां तत्तद्देहपरिग्रहपरित्यागौ श्रूयेते, तदपवर्गफलत्वे नोपपद्यते, अपवृक्तस्य तदनुपपत्तेः, उपपत्तौ वा तल्लक्षणायोगात्। अपुनरावृत्तिर्हि तल्लक्षणम्(२)। तेन सत्यामपि विद्यायां तदनुपपत्तेर्न मोक्षः फलं विद्यायां विभूतयस्तु तास्तास्तस्याः फलम्। अपुनरावृत्तिश्रुतिः पुनस्तत्प्रशंसार्थेति मन्यते। (३)न च 'तावदेवास्य चिरं यावन्न विमोक्ष्ये ऽथ सम्पत्स्य'इति श्रुतेर्विदुषो देहपातावधिप्रतीक्षावद्वसिष्ठादीनामपि प्रारब्धकर्मफलोपभोगप्रतीक्षेति साम्प्रतम्। येन हि कर्मणा वसिष्ठादीनामारब्धं शरीरं तत्प्रतीक्षा स्यात्। तथा च न शरीरान्तरं ते गृह्णीयुः। न च तावदेव चिरमित्येतदप्यार्जवेन घटते, समर्थहेतुसन्निधौ क्षेपायोगात्। तस्मादेतदपि विद्यास्तुत्यैव गमयितव्यम्। तस्मान्नापवर्गो विद्याफलम्। तथा चापवर्गाक्षेपेण पूर्वः पक्षः। अत्र च पाक्षिकं मोक्षहेतुत्वमित्यापाततः, अहेतुत्वं वेति तु पूर्वपक्षतत्त्वम्।

राद्धान्तस्तु—

विद्याकर्मस्वनुष्ठानतोषितेश्वरचोदितम्।
अधिकारं समाप्यैते प्रविशन्ति परं पदम्॥

निर्गुणायां विद्यायामपवर्गलक्षणं श्रूयमाणं न स्तुतिमात्रतया व्याख्यातुमुचितम्, पौर्वापर्यपर्यालोचने भूयसीनां श्रुतीनामत्रैव तात्पर्यावधारणात्। न च यत्र तात्पर्यं तदन्यथयितुं युक्तम्। उक्तं हि—'न विधौ परः शब्दार्थ' इति। न च विदुषामपान्तरतमःप्रभृतीनां तत्तद्देहसञ्चारात्सत्यामपि ब्रह्मविद्यायामनिर्मोक्षाद् न ब्रह्मविद्या मोक्षस्य हेतुरिति साम्प्रतम्। हेतोरपि सति प्रतिबन्धे कार्यानुपजनो न हेतुभावमपाकरोति। न हि वृन्तफलसंयोगप्रतिबद्धं गुरुत्वं न पतनमजीजनदिति प्रतिबन्धापगमे तत्कुर्वन्न तद्धेतुः(४)। न च न सेतुप्रतिबन्धानामपां निम्नदेशानभिसर्पणमिति सेतुभेदे न निम्नमभिसर्पन्ति, तद्वदिहापि विद्याकर्माराधनावर्जितेश्वरविहिताधिकारपदप्रतिबद्धा ब्रह्मविद्या यद्यपि न मुक्तिं दत्तवती, तथापि तत्परि-

---

ग्रहणमपि तु पञ्चाग्निविद्यासन्निधानादपीत्याह विद्येति।

(१) वाक्यबाधितविषयादन्यत्र प्रकरणस्य नियामकत्वमित्यर्थः। (२) अपवर्गलक्षणम्।

(३) ननु पुनर्देहानुपादानरूपा पुनरावृत्तिर्नापवर्गः, किन्त्वधुना प्रवृत्तफलकर्मजन्यभाविदेहसम्बन्धाभावः, वसिष्ठादीनां सोऽस्त्येवेति कथं नापवर्ग इत्याक्षिप्याह नचेति। सर्वस्य भाविदेहस्याप्रवृत्तफलकर्मजन्यत्वाद्वसिष्ठादयो यदि शरीरान्तरं गृह्णीयुस्तर्ह्यप्रवृत्तफलकर्मजदेहत्वान्मुक्ता न स्युरतश्च यदि प्रवृत्तफलं कर्ममात्रं प्रतीक्षेरंस्तर्हि वसिष्ठादिदेहमात्रारम्भकं प्रतीक्षेरान्निति देहान्तरग्रहणानुपपत्तिरित्यर्थः।

(४) प्रतिबन्धापगमे गुरुत्वं पतनहेतुर्भवत्येवेत्यर्थः।

क्षेमाप्ता प्रतिबन्धविगमे दास्यति । यथा हि प्रारब्धविपाकस्य कर्मणः प्रक्षयम्प्रतीक्षमाणश्च-रमदेहसमुत्पन्नब्रह्मसाक्षात्कारोऽपि ध्रियते(१)ऽथ तत्प्रक्षयान्मोक्षं प्राप्नोति, एवं प्रारब्धाधिका-रलक्षणफलविद्याकर्मा(२) पुरुषो वसिष्ठादिर्विद्वानपि तत्क्षयं प्रतीक्षमाणो युगपत्क्रमेण वा तत्त-द्देहपरिग्रहपरित्यागौ कुर्वन्मुक्तोऽप्यनाभोगात्मिकया(३)प्रख्यया सांसारिक इव विहरति । तदि-दमुक्तम्–"**सकृत्प्रवृत्तमेव हि ते कर्माशयमधिकारफलादानाये**"ति (पृ०८०८ पं० १३) (४)प्रारब्धविपाकानि तु कर्माणि वर्जयित्वा व्यपगतानि ज्ञानेनैवातिवाहितानि । "**न त्वेते जातिस्मरा**" इति (पृ० ८०९ पं० १)। (५)यो हि परवशो देहं परित्या-ज्यते देहान्तरं च नीतः पूर्वजन्मानुभूतस्य स्मरति स जन्मवान् जातिस्मरश्च । (६)गृहादिव गृहान्तरे स्वेच्छया कायान्तरं सञ्चरमाणो न जातिस्मर आख्यायते । व्युद्य–विवादं कृत्वा । व्यतिरेकमाह(७) "**यदि ह्युपयुक्ते सकृत्प्रवृत्ते** प्रारब्धविपाके **कर्मणि कर्मान्तरमप्रार**ब्धविपाकमि"ति । स्यादेतत् । विद्यया ऽविद्यादिक्लेशनिवृत्तौ नावश्यं निःशेषस्य कर्माशयस्य निवृत्तिरनादिभवपरम्पराहितस्यानियतविपाककालस्यासङ्ख्येयत्वात् कर्माशयस्येत्यत आह–"**न चाविद्यादिक्लेशदाहे सती**"ति । न हि समाने विनाशहेतौ कस्यचिद्विनाशो नापर-स्येति शक्यं वदितुम्, तत्किमिदानीं प्रवृत्तफलमपि कर्म विनश्येत्, तथा च न विदुषो वसिष्ठादेर्देहधारणेत्यत आह–"**प्रवृत्तफलस्य तु कर्मण**" इति । 'तस्य तावदेव चिर'-मितिश्रुतिप्रामाण्यादनागतफलमेव कर्म क्षीयते न प्रवृत्तफलमित्यवगम्यते । अपि च नाधि-कारवतां सर्वेषामृषीणामात्मतत्त्वज्ञानं तेनाव्यापकोऽप्ययं पूर्वपक्ष इत्याह—"**ज्ञानान्तरेषु च**"ति । (पृ० ८१० पं० ५) तत्किं तेषामनिर्मोक्ष एव, नेत्याह—"**ते पश्चादैश्व-र्यक्षय**"ति । निर्विण्णा–विरक्ताः । प्रतिसञ्चरः–प्रलयः । अपि च स्वर्गादावनुभवपथमनारो-हति शब्दैकसमधिगम्ये विचिकित्सा स्यादपि मन्दधियामामुष्मिकफलत्वं प्रति–यथा चार्थ-वादः—'को हि तद्वेद यदमुष्मिन् लोके ऽस्ति वा न वे'ति । अद्वैतज्ञानफलत्वे मोक्षस्यानुभव-सिद्धे विचिकित्सागन्धोऽपि नास्तीत्याह "**प्रत्यक्षफलत्वाच्चे**"ति । अद्वैततत्त्वसाक्षात्कारो हि अविद्यासमारोपितं प्रपञ्चं समूलघातमाघ्नन् घोरं संसाराङ्गारपरितापमुपशमयति पुरुषस्ये-त्यनुभवादपि स्फुटमुपपत्तिश्चाभिन्नश्च श्रुतिर्दर्शिता, तच्चानुभवाद्वामदेवादीनां सिद्धम् । ननु तत्त्वमसि वर्तस इति वाक्यं कथमनुभवमेव द्योतयतीत्यत आह—"**न हि तत्त्वमसी-त्यस्ये**"ति । (८)वर्तमानापदेशस्य भविष्यदर्थता भूतशब्दाध्याहारश्चाशक्य इत्यर्थः ॥३२॥

---

(१) जीवति ।

(२) प्रारब्धमाधिकारलक्षणं फलं याभ्यां तादृशे विद्याकर्मणी यस्य स पुरुष इत्यनेकबहुव्रीहिघटित-पदमिदम् । (३) अविरतात्मिकया प्रख्यया प्रतीत्या दृढाभिमानरहितया ।

(४) ननु प्रवृत्तफलस्य कर्माशयस्य भोगेनातिवाहनेऽपि अप्रवृत्तफलानां कथं निवृत्तिरत आह प्रारब्धेति

(५) आधिकारिकाज्जातिस्मरस्य वैधर्म्यमाह यो हीति । पूर्वजन्मानुभूतस्येति कर्मणि षष्ठी ।

(६) जातिस्मरादाधिकारिकस्य वैधर्म्यमाह गृहादिवेति ।

(७) प्रवृत्तिफलमेव कर्म भोगेन क्षपयन्त्याधिकारिका इत्युक्तं, तस्य व्यतिरेकमुपन्यस्य दूषयतीत्यर्थः।

(८) त्वं तदासि वर्तसे इति ब्रह्मात्मत्वं जीवस्य वर्तत इत्युक्तेऽनुभवारूढत्वं ब्रह्मात्मत्वस्य न प्रतीयते-ऽर्थसत्तामात्रस्योक्तत्वादित्याशंकायाः परिहारमाह वर्तमानेति । स्वप्रकाशब्रह्मात्मत्वेऽनुभवो भाव्यः अज्ञानस्य

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥**

(१)अक्षरविषयाणां प्रतिषेधधियां सर्ववेदवर्तिनीनामवरोध उपसंहारः प्रतिषेधसामान्याद् अक्षरस्य तद्भावप्रत्यभिज्ञानात् । आनन्दादयः प्रधानस्येत्यत्रायमर्थो यद्यपि भावरूपेषु विशेषणेषु सिद्धस्तन्न्यायतया च निषेधरूपेष्वपि सिद्ध एव, तथापि तस्यैवेष प्रपञ्चोऽवगन्तव्यः(२)। निदर्शनं जामदग्न्येऽहीन इति । यद्यपि शाबरे दत्तोतरमत्रोदाहरणान्तरम्, तथापि तुल्यन्यायतयैतदपि शक्यमुदाहर्तुमित्युदाहरणान्तरं दर्शितम् । तत्र शाबरमुदाहरणमग्न्याधानं यजुर्वेदविहितम्—'य एवं विद्वानग्निमाधत्ते' इति । तदङ्गत्वेन यजुर्वेद एव 'य एवं विद्वान् वारवन्तीयं गायति य एवं विद्वान् यज्ञायज्ञीयं गायति य एवं विद्वान् वामदेव्यं गायति' इति विहितमेतानि च सामानि सामवेदेषूत्पन्नानि । तत्रेदं सन्दिह्यते—किमेतानि यत्रोत्पद्यन्ते तत्रत्येनैवोच्चैष्ट्वेन स्वरेणाधाने प्रयोक्तव्यान्यथ यत्र विनियुज्यन्ते तत्रत्येनोपांशुत्वेन स्वरेण 'उच्चैः साम्नोपांशु यजुषे'ति श्रुतेः, किं तावत्प्राप्तम् ? उत्पत्तिविधिनैवापेक्षितोपायत्वात्मना विहितत्वादेषां तस्यैव प्राथम्यात् तन्निबन्धन एवोच्चैःस्वरे प्राप्ते उच्यते **गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः**(३) । अयमर्थः । उत्पत्तिविधिर्गुणो विनियोगविधिस्तु प्रधानं, तदनयोर्व्यतिक्रमे विरोध उत्पत्तिविध्यालोचनेनोच्चैष्ट्वं विनियोगविध्यालोचनेन चोपांशुत्वं सोऽयं विरोधो व्यतिक्रमस्तस्मिन् व्यतिक्रमे मुख्येन प्रधानेन नियुज्यमानस्वरूपेण तस्य वारवन्तीयादेर्वेदसंयोगो प्राह्यो नोत्पद्यमानत्वेन गुणेन । कुतो ? विनियुज्यमानत्वस्य मुख्यत्वेनो(४)त्पद्यमानत्वस्य गुणत्वेन तदर्थत्वाद् विनियुज्यमानार्थत्वाद् उत्पद्यमानत्वस्य । (५) एतदुक्तं भवति—यद्यप्युत्पत्तिविधावपि चातूरूप्यमस्ति विधित्वस्याविशेषात्, तन्मात्रनान्तरीयकत्वाच्च चातूरूप्यस्य । तथापि वाक्यानामैदम्पर्यं भिद्यते, (६)एकस्यैव विधेरुत्पत्तिविनियोगाधिकारप्रयोगरूपेषु चतुर्षु मध्ये किंचिदेव रूपं केनचिद्वाक्येनोल्लिख्यते यदन्यतो प्राप्तम् । (७)तत्र

---

प्रतिबन्धकस्यापनयात्, न चेदनुभवस्तदा तदिदानीं नास्तीति मृतस्त्वं तद्भविष्यसि इत्यध्याहार्यम्, अतोऽध्याहारभयाद्वर्तमानापदेश उत्तमाधिकारिणं प्रत्यनुभवपर्यन्ततामपि गमयतीत्यर्थः ।

( १ ) अक्षरे धर्मिणि प्रपंचप्रतिषेधधिय इत्यर्थे सूत्रपदं व्याचष्टे अक्षरेति । प्रतिषेधसामान्यात्-प्रतिषेधानां भूमनिवर्तकत्वसामान्यात् ।

( २ ) ब्रह्मस्वरूपत्वादानन्दाद्युपसंहारसम्भवेऽपि निषेधानामनात्मत्वात्कथमुपसंहारसम्भव इत्याद्याशङ्कानिवृत्त्यर्थमेतदधिकरणन्तन्निवृत्तिस्तु अनात्मनामपि प्रतिषेधानामात्मलक्षणत्वात् बोध्या इति भावः ।

( ३ ) वारवन्तादिपदवन्ति सामानि वारवन्तीयादीनि वारवन्तीयादेर्वेदसंयोग इति वेदसंयोगे सिद्धे तत्रत्येनैव स्वरेण स्वरवत्त्वं च सिद्ध्यतीत्यभिप्रायः ।

( ४ ) फलसंनिकर्षान्मुख्यत्वमत्र द्रष्टव्यम् ।

( ५ ) ननु सर्वेषां विधीनामुत्पत्तिविनियोगाधिकारप्रयोगात्मकत्वात्कथं विधीनां शेषशेषित्वमित्यत्राहैतदुक्तमिति । विधित्वमपेक्षितोपायत्वरूपं, तत्रानुष्ठेयभावार्थज्ञानादुत्पत्तिरस्ति, अस्ति च किञ्चित्प्रतिशेषत्वाद्विनियोगः, अस्ति च फलसाधने स्वामित्वं पुरुषस्याधिकारः, अस्ति चानुष्ठेयत्वबोधात् प्रयोग इत्युत्पत्तिविधावपि चातुरूप्यं वर्तते इति । ( ६ ) ऐदंपर्यभेदे हेतुमाह एकस्यैवेति ।

( ७ ) प्रकृते तु विनियोगादेरन्यतः प्राप्तेरुत्पत्तिमात्रपरत्वमित्याह तत्रेति ।

यद्यपि सामवेदे सामानि विहितानि तथापि तद्वाक्यानां तदुत्पत्तिमात्रपरता विनियोगस्य याजुर्वैदिकैरेव वाक्यैः प्राप्तत्वात् । तथा चोत्पत्तिवाक्येभ्यः समीहितार्थाप्रतिलम्भात् (१)विनियोगवाक्येभ्यश्च तदवगतेस्तदर्थान्येवोत्पत्तिवाक्यानि भवन्तीति तत्र येन वाक्येन विनियुज्यन्ते तस्यैव स्वरस्य साधनत्वसंस्पर्शिनो ग्रहणं न तु रूपमात्रस्पर्शिन इति । भाष्यकारीयमप्युदाहरणमेवमेव योजयितव्यम् । उद्गातृवेदोत्पन्नानां मन्त्राणामुद्गात्रा प्रयोगे प्राप्ते अध्वर्युप्रदानकेऽपि पुरोडाशे विनियुक्तत्वात्प्रधानानुरोधिनाध्वर्युणैव तेषां प्रयोगो नोद्गात्रेति दार्ष्टान्तिके योजयति—"एवमिहापी"ति ॥ ३३ ॥

## इयदामननात् ॥ ३४ ॥

गुहां प्रविष्टावात्मानावित्यत्र सिद्धोप्यर्थः प्रपञ्च्यते । (२)एकत्र भोक्त्रभोक्त्रोर्वेद्यता अन्यत्र भोक्त्रोरेवेति वेद्यभेदाद्विद्याभेद इति । न च छत्रिणो गच्छन्तीतिवत्पिबदपिबल्लक्षणापरं पिबन्ताविति नेतुमुचितम् । सति मुख्यार्थसम्भवे तदाश्रयणायोगात् । न च वाक्यशेषानुरोधात्तदाश्रयणम् । सन्देहे हि वाक्यशेषान्निर्णयो न च मुख्यलाक्षणिकग्रहणविषयो विशयः सम्भवति, तुल्यबलत्वाभावात् । प्रकरणस्य(३) च ततो बलीयसा वाक्येन बाधनात् । तस्माद्वेद्यभेदाद्विद्याभेद इति प्राप्ते—

उच्यते—द्वासुपर्णेत्यत्र ऋतं पिबन्तावित्यत्र च द्वित्वसङ्ख्योत्पत्तौ(४)प्रतीयते । तेन समानतौत्सर्गिकी पिबन्ताविति द्वयोः पिबत्ता या सा बाधनीया, सा चोपक्रमोपसंहारानुरोधेन न द्वयोरपि तु छत्रिन्यायेन लाक्षणिकी व्याख्येया । येन ह्युपक्रम्यते येन चोपसंह्रियते तदनुरोधेन मध्यं ज्ञेयम्(५) । यथा जामित्वदोषसंकीर्तनोपक्रमे तत्प्रतिसमाधानोपसंहारे च सन्दर्भे मध्यपातिनो 'विष्णुरुपांशु यष्टव्यो ऽजामित्वाये'त्यादयः पृथग्विधित्वमलभमाना विधित्वमविवक्षित्वा अर्थवादतया नीतास्तत्कस्य हेतोरेकवाक्यत्वे हि साधीयसी वाक्यभेदादिति, तथेहापि तदनुरोधेन पिबदपिबत्समूहपरं लक्षणीयं पिबन्ताविस्यनेन । तथा च वेद्याभेदाद्विद्याऽभेद इति । अपि च(६)त्रिष्वप्येतेषु वेदान्तेषु प्रकरणत्रयेऽपि पौर्वापर्यपर्यालोचनया परमात्मविद्यैवावगम्यते । यद्येवं कथं तर्हि जीवोपादानमस्वित्यत आह "तादात्म्यविवक्षये"ति । नास्यां जीवः प्रतिपाद्यते किन्तु परमात्मनो ऽभेदं जीवस्य दर्शयितुमसावनूद्यते । परमात्मविद्यायाश्चाभेदविषयत्वान्न भेदाभेदविचारावतारः । तस्मादेकविद्यमत्र सिद्धम् ॥ ३४ ॥

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥

कौषीतकेयकहोलचाक्रायणोषस्तप्रश्नोपक्रमयोर्विद्ययोर्नैरन्तर्येणाम्नातयोः किमस्ति भेदो

---

( १ ) हितसाधनत्वाप्रतिलम्भात् । तदर्थान्येव—विनियोगवाक्यार्थान्येव ।

( २ ) गुहां प्रविष्टावित्यत्र प्रतिपाद्यब्रह्मप्रत्यभिज्ञानाद्विद्यैक्येऽक्षरधियामुपसंहार उक्तः इह तु प्रतिपाद्यभेदाद्विद्याभेद इत्याशङ्कयेति । ( ३ ) अन्यत्र धर्मादिति प्रकरणस्येत्यर्थः ।

( ४ ) प्रथमप्रतीतौ, वस्तुप्रतीत्यनन्तरं प्रतीतौ हि न संख्याया वस्त्वैकगमकत्वं स्यादिति ।

( ५ ) न वयं केवलाद्वाक्यशेषात्प्रकरणमात्राद्वा पिबन्तावित्यस्य लाक्षणिकत्वं ब्रूमः किन्तूभाभ्याम्, तथाच संदर्भस्यैकवाक्यत्वावगमाज्जीवपरमात्मपरत्वमेवं च तन्मध्यपातितं पिबन्तावित्येतदपि लाक्षणिकमित्यर्थः । ( ६ ) मुण्डककठश्वेताश्वतरेषु ।

न वेति विषये भेद एवेति (१) ब्रूमः । कुतः ? यद्यप्युभयत्र प्रश्नोत्तरयोरभेदः प्रतीयते । तथापि तस्यैवैकस्य पुनः श्रुतेरविशेषादानर्थक्यप्रसङ्गाद् यजत्यभ्यासवद्भेदः प्राप्तः । न चैकस्यैव ताण्डिनां नवकृत्व उपदेशेऽपि यथा भेदो न भवति 'स आत्मा तत्त्वमसि श्वेतकेतो' इत्यत्र तथेहाप्यभेद इति युक्तम् । 'भूय एव मा भगवान् विज्ञापयत्वि'ति हि तत्र श्रूयते तेनाभेदो युज्यते, न चेह तथास्ति, (२) तेन यद्यपीह वेद्याभेदोऽवगम्यते तथाप्येकत्र तस्यैव अशनायादिमात्रात्ययोपाधेरुपासनादेकत्र च कार्यकरणविरहोपाधिरुपासनाद्विद्याभेद एवेति प्राप्ते,

प्रत्युच्यते । नैतदुपासनाविधानपरमपि तु वस्तुस्वरूपप्रतिपादनपरं प्रश्नप्रतिवचनालोचनेनो(३)पलभ्यते । किमतो ? यद्येवमेतदतो भवति—विधेरप्राप्तप्रापणार्थत्वात् प्राप्तावनुपपत्तिः, वस्तुस्वरूपन्तु पुनःपुनरुच्यमानमपि न दोषमावहति, शतकृत्वोपि हि पथ्यं वदन्त्याप्ताः । विशेषतस्तु वेदः पितृभ्यामप्यभ्यर्हितः । न च सर्वथा पौनरुक्त्यम्, एकत्राशनायाद्यत्ययादन्यत्र च कार्यकारणप्रविलयात्तस्मादेका विद्या, प्रत्यभिज्ञानात् । (४) उभाभ्यामपि विद्याभ्यामपि विद्याभ्यां भिन्न आत्मा प्रतिपाद्यते इति यो मन्यते पूर्वपक्षैकदेशी तं प्रति सर्वान्तरत्वविरोधो दर्शितः ॥ ३५ ॥

**अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥**

इत्यस्य तु पूर्वपक्षतत्त्वाभिप्रायो दर्शितः । सुगममन्यत् ॥ ३६ ॥

**व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥**

(५)उत्कृष्टस्य निकृष्टरूपापत्तेर्नोभयत्रोभयरूपानुचिन्तनम्, अपि तु निकृष्टे जीव उत्कृष्टरूपाभेदचिन्तनमेवं हि निकृष्ट उत्कृष्टो भवतीति प्राप्तम् ।

एवं प्राप्त उच्यते—इतरेतरानुवादेनेतरेतररूपविधानादुभयत्रोभयचिन्तनं विधीयते, इतरथा तु योऽहं सोऽसावित्येतावदेवोच्येत । जीवात्मानमनूद्येश्वरत्वमस्य विधीयेत, न त्वीश्वरस्य जीवात्मत्वं योऽसौ सोहमिति, यथा तत्त्वमसीत्यत्र । तस्मादुभयरूपमुभयत्राध्यानायोपदिश्यते । नन्वेवमुत्कृष्टस्य निकृष्टत्वप्रसङ्ग इत्युक्तं, तत्किमिदानीं सगुणे ब्रह्मण्युपास्यमानेऽस्य वस्तुतो निर्गुणस्य निकृष्टता भवति । कस्मै चित् फलाय तथा ध्यानमात्रं विधीयते न त्वस्य निकृष्टतामापादयतीति चेत् । इहापि व्यतिहारानुचिन्तनमात्रमुपादिश्यते फलाय न तु निकृष्टता

---

(१) पूर्वत्र पिबन्तावित्यस्य लाक्षणिकत्वेन मन्त्रद्वयेपि भोक्त्रभोक्तृपरत्वेनार्थैक्याद्विद्यैक्यमुक्तमिह त्वर्थैक्येपि न तदैक्यमभ्यासादिति पूर्वपक्षमाह भेद एवेति ।

(२) नन्वपरोक्षत्वादिरूपविद्यैक्यप्रत्यभिज्ञाने कथं विद्याभेदस्तत्राह तेनेति ।

(३) 'तन्मे व्याचक्ष्वे'ति प्रश्नस्य 'न दृष्टेर्द्रष्टारं पश्ये'रिति प्रतिवचनस्य चालोचनेनेत्यर्थः । ननु सिद्धवस्तुप्रतिपादनपरत्वेपि अभ्यासवैयर्थ्यस्य का गतिरिति आक्षेपं परिहरति किमत इत्यादिना ।

(४) ननु यथास्मिन्नधिकरणेऽभ्यासाद्विद्याभेद इति पूर्वपक्षस्तथान्तराम्नानाविशेषादिति सिद्धान्ते हेतुर्वक्तव्यः अर्थैक्यस्याभ्यासबाधकत्वेन पूर्वपक्षानुगुण्यादत आह उभाभ्यामपीति । प्रथमं सूत्रं पूर्वपक्षैकदेशिमतनिरासार्थं साक्षात्पूर्वपक्षसिद्धान्तौ तून्नीतौ भाष्यटीकाभ्यामवगन्तव्याविस्यर्थः ।

(५) पूर्वत्र विद्यैक्येऽप्यभ्यास आदरार्थ इत्युक्ते अयमपि तथेत्यभिसन्धाय पूर्वपक्षमाहोत्कृष्टस्येति ।

भवत्युत्कृष्टस्य । (१) अन्वाचयशिष्टं तु तादात्म्यदार्ढ्यं भवन्नोपेक्षामहे । सत्यकामादिगुणोपदेश इव तद्गुणेश्वरसिद्धिरिति सिद्धमुभयत्रोभयात्मत्वाध्यानमिति ॥ ३७ ॥

## सैव हि सत्यादयः ॥ ३८ ॥

[२) तद्वैतदेव तदास सत्यमेव स यो हैवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमान् लोकान् जित इन्वसावसत् भवेय एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म । पूर्वोक्तस्य(३)हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनमनेन संदर्भेण विधीयते । तदिति हृदयाख्यं ब्रह्मैकेन तदा परामृशति । एतदेवेति वक्ष्यमाणं प्रकारान्तरमस्य परामृशति । तत्तदाऽग्रे आस बभूव । किं तदित्यत आह ( पृ०८१६पं०१२ ) सत्यमेव सच मूर्तं सच्चामूर्तं च सत्यं, तदुपासकस्य फलमाह **'स यो हैवमेतमिति'**। यः प्रथमजं यक्षं पूज्यं वेद । कथं वेदेत्यत आह **'सत्यं ब्रह्मेतीति'** । स जयतीमान् लोकान् । किंच जितो वशीकृत इनुशब्द इत्यंशब्दस्यार्थे वर्तते । विजेतव्यत्वेन बुद्धिसंनिहितं शत्रुं परामृशति **'असाविति'** । असद्भवेन्नश्येत् । उक्तमर्थं निगमयति **'य एवमेतदिति'** । एवं विद्वान् कस्माज्जयतीत्यत आह **'सत्यमेव यस्माद् ब्रह्मेति'** । अतस्तदुपासनात् फलोत्पादोऽपि सत्य इत्यर्थः । तद्यत्तत्सत्यं किमसौ । अत्रापि तद्यत्पदाभ्यां (४) रूपप्रकारौ परामृष्टौ । कस्मिन्नालम्बने तदुपासनीयमित्यत उत्तरम्—**"स आदित्यो य एष"** इत्यादिना । तस्योपनिषदहरहमिति, "हन्ति पाप्मानं जहाति च य एवं वेद"इत्यन्तेन । **उपनिषद्रहस्यं नाम तस्य निर्वचनं हन्ति पाप्मानं जहाति चेति** हन्तेर्जहातेर्वा रूपमेतत् । तथा च निर्वचनं कुर्वन् फल पापहानिमाहेति । तमिमं विषयमाह भाष्यकारः— **"यो वै हैत"मिति । "सनामाक्षरोपासना"मिति** । तथा च श्रुतिः 'तदेतद् अक्षरं सत्यमिति' । स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरम् । प्रथमोत्तमे अक्षरे सत्यम् । मध्यतोऽनृतं तदेतदनृतं सत्येन परिगृहीतं सत्यभूतमेव भवति । नैवं विद्वांसमनृतं हिनस्तीति । तीतीकारानुबन्ध उच्चारणार्थः । निरनुबन्धस्तकारो द्रष्टव्यः । अत्र हि प्रथमोत्तमे अक्षरे सत्यं मृत्युरूपाभावात् । मध्यतोमध्येऽनृतमनृतं हि मृत्युः । मृत्य्वनृतयोस्तकारसाम्यात् । तदेतदनृतं मृत्युरूपमुभयतः **सत्येन परिगृहीतम्** । अन्तर्भावितं सत्यरूपाभ्याम् । अतोऽकिंचित्करं तत्सत्यभूयमेव सत्यबाहुल्यमेव भवति । शेषमतिरोहितार्थम् । सेयं सत्यविद्यायाः सनामाक्षरोपासनता । यद्यपि तद्यत्सत्यमिति प्रकृतानुकर्षेणाभेदः प्रतीयते तथापि फलभेदेन भेदः साध्यभेदेनेव नित्यकाम्यविषययोर्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत यावज्जी-

---

( १ ) ननु वचनवशादुभयत्रोभयचिन्ताश्रयणे एकत्वदृढीकारः पूर्वपक्षाभिमतस्त्वयापीष्टः स्यादत आहान्वाचयशिष्टमिति । पश्चात्प्रतीतमित्यर्थः ।

( २ ) सत्यविद्यो सनामाक्षरोपासनां विधायेत्याद्यर्थतो विषयप्रदर्शकं भाष्यं श्रुत्युदाहरणेन व्याचष्टे तद्वैतदित्यादिना ।

( ३ ) एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मेत्यादिनोक्तस्येत्यर्थः ।

( ४ ) तद्यत्पदाभ्यामिति । एकस्य यच्छब्दस्य यच्छब्देन सह संगतिरुक्ता, द्वितीयस्तच्छब्दस्तत्रशब्दसमानार्थः ।

यं दर्शपूर्णमासाभ्यां यजेतेति शास्त्रयोः सत्यप्यनुबन्धाभेदे(१) भेद इति प्राप्ते,

प्रत्युच्यते । एकैवेयं विद्या तत्सत्यमिति प्रकृतपरामर्शादभेदेन प्रत्यभिज्ञानात् । न च फलभेदः तस्योपनिषदहरहमिति (२)तस्यैव यदङ्गान्तरं रहस्यनाम्नोपासनं तत्प्रशंसार्थोऽर्थवादोऽयं न फलविधिः । यदि पुनर्विद्याविद्यावधिकारश्रवणाभावात्तत्कल्पनायामार्थवादिकं फलं कल्प्येत ततो जातेष्टाविवागृह्यमाणविशेषतया संवलिताधिकारकल्पना, ततश्च समस्तार्थवादिकफलयुक्तमेकमेवोपासनमिति सिद्धम् । परकीयं व्याख्यानमुपन्यस्यति—"केचित्पुनरि"ति ( पृ० ८१९ पं० २ ) । वाजसनेयकमप्यक्ष्यादित्यविषयं छान्दोग्यमपीत्युपास्याभेदादभेदः(३)। ततश्च वाजसनेयोक्तानां सत्यादीनामुपसंहार इत्यत्रार्थे सैव हि सत्यादय इति सूत्रं व्याख्यातं तदेतद्दूषयति, "तन्न साध्वि"ति। ज्योतिष्टोमकर्मसम्बन्धिनीयमुद्गीथव्यपाश्रयेत्यनुबन्धाभेदेऽपि साध्यभेदाद्भेद इति विद्याभेदादनुपसंहार इति ॥ ३८ ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

(४)छान्दोग्यवाजसनेयविद्ययोर्यद्यपि सगुणनिर्गुणत्वेन भेदः । तथाहि—छान्दोग्ये अथ य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामानित्यात्मवत् कामानामपि वेद्यत्वं श्रूयते । वाजसनेये तु निर्गुणमेव परं ब्रह्मोपदिश्यते 'विमोक्षाय ब्रूही'ति, तथापि तयोः परस्परगुणोपसंहारः । निर्गुणायां तावद्विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासम्बन्धिगुणोपसंहारः सम्भवी। (५)सगुणायां च यद्यप्याध्यानाय न वशित्वादिगुणोपसंहारसम्भवः, नहि निर्गुणायां विद्यायामाध्यातव्यत्वेनैते चोदिता, येनात्राध्येयत्वेन सम्बध्येरन्नपि तु सत्यकामादिगुणनान्तरीयकत्वेनैतेषां प्राप्तिरित्युपसंहार उच्यते । एवं व्यवस्थित एव संक्षेपो ऽधिकरणार्थस्य साम्यबाहुल्येप्येकत्रा(६)काशाधारत्वस्यापरत्र चाकाशतादात्म्यस्य श्रवणाद् भेदे विद्ययोर्न परस्परगुणोपसंहार इति पूर्वपक्षः ।

राद्धान्तस्तु सर्वसाम्यमेवोभयत्राप्यात्मोपदेशादाकाशशब्देनैकत्रात्मोक्तो ऽन्यत्र च दहराकाशाधारः स एवोक्त इति सर्वसाम्याद् ब्रह्मण्युभयत्रापि सर्वगुणोपसंहारः । सगुणनिर्गुणत्वेन तु विद्याभेदेपि गुणोपसंहारव्यवस्था दर्शिता । तस्मात्सर्वमवदातम् ॥ ३९ ॥

---

( १ ) धात्वर्थाभेदेऽपि, स्वर्गकामो यजेत, यावज्जीवं यजेतेति शास्त्रयोर्नित्यकाम्यविषययोः साध्यभेदेन यथा भेदस्तथोपास्यैकत्वेपि सत्यविद्ययोः फलभेदेन भेद इत्यर्थः ।

( २ ) किं फलनिर्देशस्य विद्याभेदकत्वमुत प्रधानतदंगानामर्थवादाद्रात्रिसत्रन्यायेन फलकल्पनामाश्रित्य, तत्र प्रथमं प्रत्याह अङ्गानां प्रधानान्वयद्वारेण फलसम्बन्धसिद्धेरर्थवादगतानि गुणफलानि प्रयाजादिफलवदुपेक्ष्यन्त इत्यर्थः । द्वितीयेपि फलभेदस्य न विद्याभेदकत्वमित्याह यदीति । एवं कामपदाभावेन पुरुषस्य कर्मण्यैश्वर्यरूपाधिकारश्रवणाभावादित्यर्थः ।

( ३ ) अक्ष्यादित्यगतत्वमुपास्यपुरुषस्याभेदः ।

( ४ ) अधिकरणानारंभमाशङ्कते छान्दोग्येति ।

( ५ ) निर्गुणविद्यागतवशित्वादीनां सगुणविद्यास्वन्वयविधिमाह सगुणायां चेति । ध्येयत्वमपूर्वविध्येकगम्यम्, यत्र च वशित्वादयः श्रूयन्ते न तत्रैषां ध्येयत्वेन विधानमित्यन्यत्र गतानामपि न ध्येयत्वम्, स्तुत्यर्थत्वन्तु न शब्दत एषां तत्र नयनमपेक्षते सत्यकामत्वादिसामर्थ्यादेव सर्वेश्वरत्वादिसिद्धेरतोऽन्तर्भावमात्रमुपसंहार इत्यर्थः ।

( ६ ) य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते इत्यत्र । अन्यत्र–दहरोऽस्मिन्नन्तराकाश इत्यत्र ।

(१)अस्ति वैश्वानरविद्यायां तदुपासकस्यातिथिभ्यः पूर्वभोजनम्(२) । तेन यद्यपीयमुपासनागोचरा न चिन्ता साक्षात्तथापि तत्सम्बद्धप्रथमभोजनसम्बन्धादस्ति सङ्गतिः । विचारगोचरं दर्शयति–छान्दोग्ये वैश्वानरविद्यां प्रकृत्ये"ति ( पृ० ८२१ पं० ६ ) विचारप्रयोजकं सन्देहमाह–"किं भोजनलोप इति"। अत्र पूर्वपक्षाभावेन संशयमाक्षिपति–"तद्यद्भक्तमि"ति । "भक्तागमनसंयोगादि"ति । उक्तं खल्वेतत्प्रथम एव तन्त्रे 'पदकर्माप्रयोजकं नयनस्य परार्थत्वात्' इत्यनेन, (३)यथा सोमक्रयार्थं नीयमानैकहायनीसप्तमपदपांसुग्रहणमप्रयोजकम्, न पुनरेकहायन्या नयनं प्रयोजयति । तत्कस्य हेतोः ? सोमक्रयेण तन्नयनस्य प्रयुक्तत्वात् तदुपजीवित्वात्सप्तमपदपांसुग्रहणस्येति, तथेहापि भोजनार्थभक्तागमनसंयोगात् प्राणाहुतेर्भोजनाभावे भक्तं प्रत्यप्रयोजकत्वमिति नास्ति पूर्वपक्ष इत्यपूर्वपक्षमिदमधिकरणमित्यर्थः । पूर्वपक्षमाक्षिप्य समाधत्ते–"एवं प्राप्ते, न लुप्येतेति तावदाह" । तावच्छब्दः सिद्धान्तशङ्कानिराकरणार्थः । पृच्छति कस्मात् । उत्तरमादरात् । तदेव स्फोरयति "तथा ही"ति । जाबाला हि श्रावयन्ति पूर्वोऽतिथिभ्योऽश्नीयादि'ति । अश्नीयादिति च प्राणाग्निहोत्रप्रधानं वचः ।

यथा हि क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतान्यग्निहोत्रमुपासते ॥

इति वचनाद् अग्निहोत्रस्यातिथीन् भूतानि प्रत्युपजीव्यत्वेन श्रवणात्तदेकवाक्यतयेहापि पूर्वोऽतिथिभ्योऽश्नीयादिति प्राणाहुतिप्रधानं लक्ष्यते । (४)तदेवंसति यथा वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादित्येवं तदित्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं स्वामिनः प्राणाग्निहोत्रं प्रथमं प्रापयन्ती प्राणाग्निहोत्रादरं करोति । (५)नन्वाद्रियतामेषा श्रुतिः प्राणाहुतिं किन्तु स्वामिभोजनपक्ष एव नाभोजनेपीत्यत आह "या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते" ( पृ० ८२२ पं० २ ) ईदृशः खल्वयमादरः प्राणाग्निहोत्रस्य यदतिथिभोजनोत्तरकालविहितं स्वा-

---

(१)पादसङ्गतिमाह अस्तीति । (२)तद्यद्भक्तं प्रथममित्यत्रोक्तं प्राणाग्निहोत्रम् ।

(३)यथेति । एकहायन्या क्रीणातीति प्रकृत्य 'षट्पदान्यनुनिष्क्रामति सप्तमं पदमंजलिना गृह्णाति यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति' । अस्यार्थः सोमक्रयार्थनीयमानैकहायन्या षट् पदान्यनुगच्छेदध्वर्युः सप्तमपदगतपांसूनंजलिना गृहीत्वा स्थापयेत् 'पुनर्यद्दिवसे हविर्धाने द्वे शकटे प्राङ्मुखे प्रवर्तयेयुस्तदा तेन पांसुनाक्षं रथस्याजयेल्लिपयेदिति। अत्राक्षाभ्यं जनार्थमप्येकहायनीनयनं तेनापि प्रयुज्यते उत क्रयार्थमेव तेनैव प्रयुज्यते इति संदेहे विशेषसंबन्धानवगमादुभयार्थत्वमिति पूर्वपक्षे, यद्यपि क्रमनयनयोर्न साक्षादस्ति वाक्यकृतस्सम्बन्धस्तथाप्येकहायनीद्वाराऽस्ति, सा हि तृतीयया क्रयार्थेति बुध्यते यदर्था च सा तदर्थमेवं तत्संस्कारार्थं नयनमित्यस्ति क्रमनयनयोर्विशेषसम्बन्धस्तस्मात्क्रयार्थमेवेति राद्धान्तः पूर्वमीमांसायां कृतोत्र द्रष्टव्यः ।

(४) एवं विधिबलात्प्राणाग्निहोत्रस्य भोजनकालादपनयनं प्रदर्श्यादरादिति सूत्रसूचितं वाक्यशेषमेतस्यार्थस्य स्तावकं दर्शयति तदेवामिति ।

(५) नन्वतिथिप्राणाग्निहोत्रात्पूर्वं स्वीयप्राणाग्निहोत्रं कुर्यादन्यथा पूर्वमतिथिभ्यो भोजनदाने स्वाग्निहोत्राहोमेन पराग्निहोत्रकरणमिवायुक्तं कृतं स्यादित्यादरः स्वामी यदा भुंक्ते तदेव, तथा च कथं भोजनलोपे प्राणाहुत्यापत्तिरिति शंकते नन्विति ।

मिभोजनं समयादपकृष्यातिथिभोजनस्य पुरस्ताद्विहितम् तथदाग्निहोत्रस्य धर्मिणः प्राथम्यधर्मलोपमपि न सहते श्रुतिस्तदास्याः केव कथा धर्मिलोपं सहत इत्यर्थः । पूर्वपक्षाक्षेपमनुभाष्य दूषयति-"ननु भोजनार्थे"ति (पृ० ८२२ पं० ३) । (१)यथा हि कौण्डपायिनामयनगते अग्निहोत्रे प्रकरणान्तरान्नैयमिकाग्निहोत्राद्भिन्ने द्रव्यदेवतारूपधर्मान्तररहिततया तदाकाङ्क्षे साध्यसादृश्येन नैयमिकाग्निहोत्रसमाननामतया तद्धर्मातिदेशेन रूपधर्मान्तरप्राप्तिरेवं प्राणाग्निहोत्रेपि नैयमिकाग्निहोत्रगतपयःप्रभृतिप्राप्तौ भोजनगतभक्तद्रव्यता विधीयते, न चैतावता भोजनस्य प्रयोजकत्वम् । उक्तमेतद्यथा भोजनकालातिक्रमात् प्राणाग्निहोत्रस्य न भोजनप्रयुक्तत्वमिति । (२)न चैकदेशद्रव्यतयोत्तरार्द्धात् स्विष्टकृते समवद्यतीतिवदप्रयोजकत्वमेकदेशद्रव्यसाधनस्यापि प्रयोजकत्वात् । यथा 'जाघन्या पत्नीः संयाजयन्ती'ति पत्नीसंयाजानां जाघन्येकदेशद्रव्यजुषां जाघनीप्रयोजकत्वम् । स हि नामाप्रयोजको भवति यस्य प्रयोजकग्रहणमन्तरेणार्थो न ज्ञायते । यथा न प्रयोजकपुरोडाशग्रहणमन्तरेणोत्तरार्द्धं ज्ञातुं शक्यम् । शक्यं तु जाघनीवद्भक्तं ज्ञातुम् । तस्माद्यथा जाघन्यन्तरेणापि पशूपादानं परप्रयुक्तपशूपजीवनं वा खण्डशो मांसविक्रयिणो मुण्डादिवदाकृतिरुपादीयते, एवं भक्तमपि शक्यमुपादातुम् । तस्मान्न भोजनस्य लोपे प्राणाग्निहोत्रलोप इति मन्यते पूर्वपक्षी । (३)अद्भिरिति तु प्रतिनिध्युपादानमावश्यकत्वसूचनार्थं भाष्यकारस्य ॥ ४० ॥

## उपस्थितेतस्तद्वचनात् ॥ ४१ ॥

तद्धोमीयमिति हि वचनं किमपि सन्निहितद्रव्यं होमे विनियुङ्क्ते तदः सर्वनाम्नः सन्निहितावगममन्तरेणाभिधानापर्यवसानात्तदनेन स्वाभिधानपर्यवसानाय तद्यद्भक्तं प्रथममागच्छेदिति सन्निहितमपेक्ष्य निर्वर्तितव्यम् । तच्च सन्निहितं भक्तं भोजनार्थमित्युत्तरार्द्धात् स्विष्टकृते समवद्यतीतिवन्न भक्तं (४)वापो वा द्रव्यान्तरं वा प्रयोक्तुमर्हति । जाघन्यास्त्ववयवभेदस्य नाग्नीषोमीयपश्वधीनं निरूपणं स्वतन्त्रस्यापि तस्य सूनास्थस्य दर्शनात्तस्मादस्त्येतस्य जाघनीतो विशेषः । (५)यच्चोक्तं चोदकप्राप्तद्रव्यबाधया भक्तद्रव्यविधानमिति । तदयुक्तम् ।

---

( १ ) दूषणपरभाष्याभिप्रायमाह यथाहीति ।

( २ ) ननु मा भूद्भोजनमाश्रित्य विधानात्तत्प्रयुक्तत्वं प्राणाग्निहोत्रस्य भोजनार्थभक्तैकदेशद्रव्याश्रितत्वाद्भोजनप्रयुक्तत्वं किं न स्यादत आह न चैकदेशेति । 'मध्यात्पूर्वार्धाच्च द्विर्हविषोऽवद्यत्युत्तरार्धात् स्विष्टकृते समवद्यती'ति श्रुतम् । तत्र स्विष्टकृद्देवताख्ययागविशेषः किमुत्तरार्धपुरोडाशप्रयोजक उत फलश्रुतिप्रयुक्तपुरोडाशोपजीवीति सन्देहेऽग्न्याद्यर्थस्य हविषो देवतान्तरावरुद्धत्वात्स्विष्टकृदर्थमन्यद्धविः कृत्वाऽवद्यतीति पूर्वपक्षे, कस्योत्तरार्धादिति नित्यापेक्षत्वात्स्ववाक्ये च सम्बन्धिनिर्देशादग्न्यादिप्रयुक्तस्यैव हविषः प्रकृतत्वात्तस्योत्तरार्धादित्यवगमादप्रयोजकः स्विष्टकृत्, अन्यार्थहविषोपि वचनादन्यार्थत्वमविरुद्धमिति । तद्वदप्रयोजकत्वं प्राणाग्निहोत्रस्य ततश्च भोजनप्रयुक्तत्वमित्येतत्तत्रास्तीत्यत्र हेतुरेकदेशद्रव्यसाधनस्यापीति । एकदेशद्रव्यसाधनयागस्य प्रयोजकत्वापत्तौ दृष्टान्तमाह यथेति । 'जाघन्या पत्नीः संयाजयतीति' श्रुतम् । पत्न्यो देवताः, जघनप्रदेशादवत्तो मांसखंडो जाघनी ।

( ३ ) नन्वेवं भक्तस्यैव भोजनबहिर्भूतस्य सम्भवे कथमद्भिरिति प्रतिनिधिर्भाष्ये उक्त अत आह अद्भिरिति । ( ४ ) भोजनानङ्गमित्यर्थः ।

( ५ ) ननु तद्यद्भक्तमितिवाक्योक्तस्य तद्धोमीयमित्यत्रत्यतच्छब्देन परामर्शेपि न भोजनाङ्गभक्तपरामर्शसिद्धिः उक्तवाक्यस्यान्यार्थत्वादित्युक्तमनूद्य दूषयति यच्चोक्तमिति ।

विध्युद्देशगतस्याग्निहोत्रनाम्नस्तथाभावादर्थवादिकस्य तु सिद्धं किंचित्सादृश्यमुपादाय स्तावकत्वेनोपपत्तेर्न तद्भावं विधातुमर्हती(१)त्याह–"न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरि"-ति ( पृ० ८२३ पं० २ )। अपि चाग्निहोत्रस्य चोदकतो धर्मप्राप्तावभ्युपगम्यमानायां बहुतरं प्राप्तं बाध्यते, न च सम्भवे बाधनिचयो न्याय्यः, कृष्णलचरौ(२) खल्वगत्या प्राप्तबाधोभ्युपेयत इत्याह–"धर्मप्राप्तौ वाभ्युपगम्यमानायामि"ति । चोदकाभावमुपोद्बलयति—'अत एव चेहापी'ति । यत एवोक्तेन क्रमेणातिदेशाभावोऽत एव साम्पादिकत्वमग्निहोत्राङ्गानाम् । तत्प्राप्तौ तु साम्पादिकत्वं नोपपद्येत । कामिन्यां किल कुचवदनायत्ता चक्रवाकनलिनादिरूपेण सम्पाद्यते , न तु नद्यां चक्रवाकादय एव चक्रवाकादिना सम्पाद्यन्ते । अतोप्यवगच्छामो न चोदकप्राप्तिरिति । यत्त्वादरदर्शनमिति, तद्भोजनपक्षे(३) प्राथम्यविधानार्थम् । यस्मिन्पक्षे धर्मानवलोपस्तस्मिन् धर्मिणोपि न त्वेतावता धर्मिनित्यता सिध्यतीति भावः । (४)नन्वतिथिभोजनोत्तरकालता स्वामिभोजनस्य विहितेति कथमसौ बाध्यत इत्यत आह–"नास्ति वचनस्यातिभारः" ( पृ० ८२४ पं० १ )। सामान्यशास्त्रबाधायां विशेषशास्त्रस्यातिभारो नास्तीत्यर्थः ॥ ४१ ॥

**तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्॥४२॥**

(५)यथैव यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीति । एतदनारभ्याधीतमव्यभिचरितक्रतुसम्बन्धं जुहूद्वारा क्रतुप्रयोगवचनगृहीतं क्रत्वर्थं सत्फलानपेक्षम् । सिद्धवर्तमानापदेशप्रतीतं न रात्रिसत्रवत् फलतया स्वीकरोतीति । एवमव्यभिचरितकर्मसम्बन्धोद्गीथगतमुपासनं कर्मप्रयोगवचनगृहीतं न सिद्धवर्तमानापदेशावगतसमस्तकामावापकत्वलक्षण(६)-फलकल्पनायालम् । परार्थत्वात् । तथा च पारमर्षं सूत्रम्—द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादि'ति । एवं च सति क्रतौ पर्णतानियमवदुपासनानियम इति प्राप्ते,

उच्यते । (७)युक्तं पर्णतायां फलश्रुतेरर्थवादमात्रत्वम् । न हि पर्णताद्यनाश्रया यागा-

---

( १ ) विध्येकवाक्यतापन्नोऽग्निहोत्रशब्दो गौणः सन् कर्तव्यसादृश्यं वक्तुं शक्तः कर्तव्यार्थविशेषणपरत्वात्, अर्थवादगतस्तु सिद्धमर्थं विशिंषन् सिद्धमेव सादृश्यं वक्तीति दूषणाभिप्रायः ।

( २ ) 'प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति पू० मी० श्रुतम् । तत्रातिदेशप्राप्ता अवघातादयो द्वाराभावेपि पाकवत्कर्तव्या अचरौ चरुशब्दस्याग्निहोत्रशब्दवद्धर्मातिदेशकत्वादिति प्राप्य दशमे कृष्णलान्श्रपयेदिति श्रौतः पाको द्वाराभावेपि कर्तव्यः, अत एव चरुशब्दोपि पाकयोगाद्विभक्तत्वाच्च सिद्धसादृश्यपरः सत्यां गतौ गौणत्वायोगादिति राद्धान्तः कृतः, तस्मान्नावघातादिप्राप्तिरिति । सोयमतिदेशप्राप्तावघातादिबाधोऽगत्याङ्गीक्रियते प्रकृते तु भोजनार्थभक्तानुवादादस्ति गतिरित्यर्थः ।

( ३ ) यदा चैवं भोजनार्थभक्ताश्रितत्वं प्राणाग्निहोत्रस्य तच्छब्दात्सिद्धं तदा 'पूर्वोऽतिथिभ्योऽश्नीया दि'त्याद्यादरदर्शनं न भोजनकालादेरपकृष्य कालान्तरेऽग्निहोत्रविधिपरं किन्तु यदा स्वामी भुङ्क्ते तदा भोजनस्य स्वकालादपकर्षेण तदाश्रितप्राणाग्निहोत्रस्यापकर्षकमित्याह तद्भोजनपक्षे इति ।

( ४ ) ननु स्वामिभोजनस्य स्वकालादपकर्ष एव युक्तः शाखान्तरविरोधात् अतः प्राणाग्निहोत्रस्यैव भोजनकालादपकर्ष इत्याशङ्क्य परिहरति नन्वित्यादिना ।

( ५ ) अनित्यभोजनाश्रितप्राणाग्निहोत्रवन्नित्यकर्माङ्गाश्रितोपास्तीनां नित्यत्वमित्यभिप्रायेण पूर्वपक्षमाह यथेति । ( ६ ) 'आपयिता ह वै कामानां भवती'त्येतल्लक्षणेत्यर्थः ।

( ७ ) यस्य पर्णमयी जुहूर्भवतीत्याद्यमारभ्य किञ्चिद्द्रव्ये फलमधीयते, एवं ज्योतिष्टोमप्रकरणे 'यदङ्के-

दिवद् फलसम्बन्धमनुभवितुमर्हति, अव्यापाररूपत्वात्, व्यापारस्यैव च फलवत्त्वात्। यथाहु'रुत्पत्तिमतः फलदर्शनादि'ति। नापि खादिरतायामिव प्रकृतक्रतुसम्बन्धो यूप आश्रयस्तदाश्रयः प्रकृतोऽस्ति अनारभ्याधीतत्वात् पर्णमयतायाः। तस्माद्वाक्येनैव जुहुसम्बन्धद्वारेण पर्णतायाः क्रतुराश्रयो ज्ञापनीयः। न चातत्परं वाक्यं ज्ञापयितुमर्हतीति तत्र वाक्यतात्पर्यमवश्याश्रयणीयम्। तथा च तत्परं सत्र पर्णतायाः फलसम्बन्धमपि गमयितुमर्हति, वाक्यभेदप्रसङ्गात्। उपासनानां तु व्यापारात्मत्वेन स्वत एव फलसम्बन्धोपपत्तेः। उद्गीथाद्याश्रयणं फले विधानं न विरुध्यते। विशिष्टविधानात् फलाय खलूद्गीथसाधनकमुपासनं विधीयमानं न वाक्यभेदमावहति। (१)ननु कर्माङ्गोद्गीथसंस्कार उपासनं प्रोक्षणादिवद् द्वितीयाश्रुतेरुद्गीथमिति तथा चाञ्जनादिष्विव संस्कारेषु फलश्रुतेरर्थवादत्वम्। मैवम्। नात्रोद्गीथस्योपासनं किन्तु तदवयवस्योङ्कारस्येत्युक्तमध(२)स्तात्। न चोंकारः कर्माङ्गमपि तु कर्माङ्गोद्गीथावयवः न चानुपयोगमीप्सितम्। तस्मात्सक्तून् जुहोतीतिवद्विनियोगभङ्गेनोङ्कारसाधनादुपासनात्फलमिति सम्बन्धः। तस्माद्यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि एवमुद्गीथाद्युपासनानीति द्रष्टव्यम्। शेषमुक्तं भाष्ये—"न चेदं फलश्रवणमर्थवादमात्रमि"ति। (पृ०८२६ पं ४)। अर्थवादमात्रत्वेऽत्यन्तपरोक्षा वृत्तिर्यथा न तथा फलपरत्वेन तु वर्तमानोपदेशात् साक्षात्फलं प्रतीति। (३)अत एव प्रयाजादिषु नार्थवादाद्वर्तमानोपदेशात्फलकल्पना। फलपरत्वे त्वस्य न शक्यं प्रयाजादीनां पारार्थ्यनाफलत्वं वक्तुमर्हति ॥ ४२ ॥

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

(४) तत्तच्छ्रुत्यर्थालोचनया वायुप्राणयोः स्वरूपाभेदे सिद्धे तदधीननिरूपणतया तद्विषयोपासनाप्यभिन्ना। न चाध्यात्माधिदैवगुणभेदाद् भेदो, नहि गुणभेदे गुणवतो भेदो नह्यग्निहोत्रञ्जुहोतीति उत्पन्नस्याग्निहोत्रस्य तण्डुलादिगुणभेदाद् भेदो भवति। उत्पद्यमानकर्मसंयुक्तो हि गुणभेदः कर्मणो भेदकः। यथाऽऽमिक्षावाजिनसंयुक्तयोः कर्मणोर्नोत्पन्नकर्मसंयुक्तः। अध्यात्माधिदैवोपदेशेषु चोत्पन्नोपासनासंयोगः। तथोपक्रमोपसंहारालोचनया विध्येकत्वविनिश्चयादेकैव सकृत्प्रवृत्तिरिति पूर्वपक्षः।

राद्धान्तस्तु सत्यं विध्येकत्वम्, तथापि गुणभेदात्प्रवृत्तिभेदः, सायंप्रातःकालगुणभेदाद-

---

अञ्जनं करोति चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति फलश्रुतिः, 'यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते' इत्यादिकर्मणि च फलं श्रूयते, तत्र किमेते फलविधय उत क्रत्वर्थपर्णतादिषु फलार्थवादा इति संदेहे 'खादिरं वीर्यकामस्य यूपं कुर्यादि'त्यादिवत् फलविधय इति पूर्वपक्षे प्राप्ते पर्णतोदाहरणमालंब्य सिद्धान्तः प्रदर्श्यते आचार्येण युक्तं पर्णतायामित्यादिना।

(१) क्रत्वङ्गविशिष्टोपासितक्रियायां फलसाधनत्वेन प्रधानकर्मत्वमुक्तं तदाक्षिपति नन्विति।

(२) व्याप्तेश्चासमञ्जसम् (३ अ० ३ पा० ९ सू० इत्यत्र।

(३) वर्तमानापदेशाद्विपरिणाममन्तरेण फलासिद्धौ विरोधमाह अत एवेति। प्रयाजादीनामफलत्वे यत्प्रथमे काण्डे पारार्थ्येनोक्तन्तदिहापि स्वीकृतं, तद्वर्तमानापदेशस्य फलपरत्वे न शक्यं निर्वोढुमित्यर्थः।

(४) पूर्वं फलभेदात्कर्माङ्गानां तदङ्गोपासनानां च नित्यानित्यत्वरूपः प्रयोगभेद उक्तः,इह तु वायुप्राणयोरभेदात्तत्प्राप्तिफलैक्याच्चोपासनप्रयोगैक्यमित्यभिप्रायकं पूर्वपक्षमाह तदिति।

थैकस्मिन्नपि अग्निहोत्रे प्रवृत्तिभेदः, एवमिहापि अध्यात्माधिदैवगुणभेदादुपासनस्यैकस्यापि प्रवृत्तिभेद इति सिद्धम् । **"आध्यानार्थो ह्ययमध्यात्माधिदैवविभागोपदेश"** इति (पृ० ८२८ पं० ११) (१)अग्निहोत्रस्येवाध्यानस्य कृते दधितण्डुलादिवदयं पृथगुपदेशः । **"एतेन व्रतोपदेश"** इति । (पृ०८२९ पं० १) एतेन-तत्त्वाभेदेन । एवकारश्च वागादिव्रतनिराकरणार्थः । नन्वेतस्यै देवतायै इति देवतामात्रं श्रूयते न तु वायुस्तत्कथं वायुप्राप्तिमाह इत्यत आह **"देवतेत्यत्र वायु"**रिति । वायुः खल्वग्न्यादीन् (२)संवृणुत इत्यग्न्यादीनपेक्ष्यानवच्छिन्नोऽग्न्यादयस्तु तेनैवावच्छिन्ना इति संवर्गगुणतया वायुरनवच्छिन्ना देवता । **"सर्वेषामभिगमयन्नि"**ति (पृ० ८३० पं० ५) (३)मिलितानां श्रवणाविशेषाद् इन्द्रस्य देवताया अभेदात् । त्रयाणामपि पुरोडाशानां सहप्रदानाशङ्कायामुत्पत्तिवाक्य एव राजाधिराजस्वराजगुणभेदात्, (४)याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात्प्रदानपृथक्त्वं भवति । सहप्रदाने हि व्यत्यासविधानमनुपपन्नम् । क्रमवति प्रदाने व्यत्यासविधिरर्थवान्, तथाविधस्यैव क्रमस्य विवक्षितत्वात् । सुगममन्यत् ॥ ४३ ॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥
## पूर्वविकल्पः प्रकरणात्स्यात् क्रिया मानसवत् ॥४५॥

इह सिद्धान्तेनोपक्रम्य पूर्वपक्षयित्वा सिद्धान्तयति । (५)तत्र यद्यपि भूयांसि सन्ति लिङ्गानि मनश्चिदादीनां स्वातन्त्र्यसूचकानि । तथापि न तानि स्वातन्त्र्येण(६) स्वातन्त्र्यं प्रति प्रापकाणि । प्रमाणप्रापितं तु स्वातन्त्र्यमुपोद्बलयन्ति । न चात्रास्ति स्वातन्त्र्यप्रापकं प्रमाणम् । (७)न चेदं सामर्थ्यलक्षणं लिङ्गं येनास्य स्वातन्त्र्येण प्रापकं भवेत् । तद्धि सामर्थ्यमभिधानस्य वार्थस्य वा स्याद्यथा पूषाद्यनुमन्त्रणमन्त्रस्य पूषानुमन्त्रणे, यथा वा पशुना यजेतेति एकत्वसङ्ख्याया अर्थस्य सङ्ख्येयावच्छेदसामर्थ्यम् । न चेदमन्यस्यार्थदर्शनलक्षणं लिङ्गम् तथा, स्तुत्य-

---

(१) यदुक्तमध्यात्मादिविभागस्योत्पन्नशिष्टत्वान्न विद्याभेदकत्वमिति । सत्यं, न विद्याभेदः किन्त्वेकस्यामेव विद्यायां ध्येयभेदात्प्रयोगभेदं, यथाग्निहोत्राभेदे उत्पन्नशिष्टैर्दध्यादिभिः क्रियमाणाः प्रयोगा भिद्यन्त एवमिहापीत्याहाग्निहोत्रस्येवेति । अग्निहोत्रस्य दधितण्डुलादिवदाध्यानस्य कृते आध्यानार्थमयं पृथगुपदेश इति भावः । (२) संहरति ।

(३) देवताकाण्डाधिकरणस्य प्रधानभेदविषयस्य पूर्वपक्षं सिद्धान्तं चाह मिलितानामित्यादिना ।

(४) त्रिपुरोडाशेष्टौ प्रथमपुरोडाशप्रदाने या याज्या सा पुनः प्रयोगेऽनुवाक्या, या च पूर्वमनुवाक्या सा पश्चाद्याज्या भवति । व्यत्यासमन्वाहेत्याभिहितम्, तत्प्रयोगभेदे घटते एकस्या ऋच एकस्मिन्प्रयोगे याज्यानुवाक्यात्वविरोधादित्याह याज्येति । प्रैषे कृते प्रयुज्यमाना ऋग्याज्या अनुब्रूहीतिप्रैषानन्तरं प्रयुज्यमानाऽनुवाक्या, याज्ञिका अस्यामिष्टौ युगपत्प्रदानं कुर्वन्ति तद्विधीयते सर्वेषामभिगमयन्नवद्यतीति अभिप्रायेणाह यथान्यासमिति ।

(५) पूर्वमेकप्रयोगासम्भवाद्वायुप्राणौ प्रयोगभेदेन ध्येयावित्युक्तम्, इह तु मनश्चिदादीनां कर्माङ्गत्वेनैकप्रयोगत्वमाशङ्क्यते । तत्र लिङ्गविरोधेन दुर्बलेन प्रकरणेन पूर्वपक्षानुत्थानमाशङ्क्याह तत्रेति ।

(६) प्रमाणान्तरानपेक्षया ।

(७) ननु स्वातन्त्र्येणाप्यर्थस्य विनियोजकं लिङ्गं दृष्टं यथा शब्दार्थयोः सामर्थ्यमित्याशङ्क्य प्रकृतलिङ्गस्य ततो वैधर्म्यमित्याह नचेत्यादिना ।

र्थेन नास्य विध्युद्देशेनैकवाक्यतया विधिपरत्वात् । (१)तस्मादसति सामर्थ्यलक्षणे विरोद्धरि प्रकरणमप्रत्यूहं मनश्चिदादीनां क्रियाशेषतामवगमयति । (२)न च ते हैते विद्याचित एवेत्यवधारणश्रुतिः क्रियानुप्रवेशं वारयति, येन श्रुतिविरोधे सति न प्रकरणं भवेत्, बाह्यसाधनतापाकरणार्थत्वादवधारणस्य । न च 'विद्यया हैवं विदश्चिता भवन्तीति पुरुषसंबन्धमापादयद्वाक्यं प्रकरणमपबाधितुमर्हति, अन्यार्थदर्शनं खल्वेतदपि । न च तात्स्वातन्त्र्येण प्रापकमित्युक्तम् । तस्मात्तदपि न प्रकरणविरोधायालमिति सांपादिका अप्येते अग्नयः प्रकरणात् क्रियानुप्रवेशिन एव मानसवत् । (३)द्वादशाहे तु श्रूयते 'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनो ग्रहं गृह्णामी'ति । तत्र संशयः—किं मानसं द्वादशाहादहरन्तरमुत तन्मध्यपातिनो दशमस्याह्नोऽङ्गमिति । तत्र 'वाग्वै द्वादशाहो मनो मानसमि' ति मानसस्य द्वादशाहाद् भेदेन व्यपदेशाद् वाङ्मनसभेदवद्भेदः । निर्धूतानि(४)द्वादशाहस्य गतरसानि छन्दांसि तानि मानसेनैवाप्यायन्तीति च द्वादशाहस्य मानसेन स्तूयमानत्वाद्भेदे च सति स्तुतिस्तुत्यभावस्योपपत्तेः । द्वादशाहादहरन्तरं न तदङ्गं पत्नीसंयाजान्तत्वाच्चाह्नां(५) 'पत्नीः संयाज्य मानसाय प्रसर्पन्तीति' च मानसस्य पत्नीसंयाजस्य परस्तात् श्रुतेः । त्रयोदशाहेऽप्यवयुत्य(६) द्वादशसंख्यासमवायात् कथंचिज्जघन्ययापि वृत्त्या द्वादशाहे संज्ञाविरोधाभावादिति प्राप्ते,

अभिधीयते प्रमाणान्तरेण हि त्रयोदशत्वेऽह्नां सिद्धे द्वादशाह इति जघन्यया वृत्त्योन्नीयते । न त्वस्ति तादृशं प्रमाणान्तरम् । न च व्यपदेशभेदोऽहरन्तरत्वं कल्पयितुमर्हति, अङ्गाङ्गिभेदेनापि तदुपपत्तेः । अत एव च स्तुत्यस्तावकभावस्याप्युपपत्तिः, देवदत्तस्येव दीर्घैः केशैः । पत्नीसंयाजान्तता तु यद्यप्यौत्सर्गिकी तथापि दशमस्याह्नो विशेषवचनान्न मानसानि ग्रहणासादनहवनादीनि पत्नीसंयाजात्पराञ्चि भविष्यन्ति । किमिव हि न कुर्याद् वचनमिति । 'एष वै दशमस्याह्नो विसर्गो यन्मानसमि'ति वचनात् दशमाहरङ्गता गम्यते । विसर्गोऽन्तोऽन्तवतो धर्मो न स्वतन्त्र इति । दशमेऽहनि मानसाय प्रसर्पन्तीति दशमस्याह्न आधारत्वनिर्देशाच्च तदङ्गं मानसं नाहरन्तरमिति सिद्धम् । तदिह द्वादशाहसंबन्धिनो दशमस्याह्नोऽङ्गं मानसमिति धर्ममीमांसासूत्रकृतोक्तम् । दशरात्रगस्यापि दशमस्याह्नोऽङ्गमिति भगवान्भाष्यकारः । श्रुत्यन्तरबलेनाह **"यथा दशरात्रस्य दशमेहन्यविवाक्य"** इति (पृ० ८३२ पं० १२) । अविवाक्य इति दशमस्याह्नो नाम ॥ ४४–४५ ॥

## अतिदेशाच्च ॥४६॥

नहि सांपादिकानामग्नीनामिष्टकासु चितेनाग्निना किंचिदस्ति सादृश्यमन्यत्र क्रियानुप्रवे-

---

(१) सामर्थ्याभ्यार्थदर्शनरूपद्विविधलिङ्गासम्भवात् [ विरोद्धरि—विरोधकर्तरि ।

(२) श्रुतिवाक्याभ्यां प्रकरणस्य विरोधमाशङ्कयाह नचेति ।

(३) पूर्वतन्त्रसिद्धमानसग्रहाधिकरणमुदाहरति द्वादशाह इत्यादिना । मनोमयं—ध्यानमयग्रहमापाद्य गृह्णामीत्यर्थः ।

(४) मलालितानि, अत एव गतरसानि रसवत्तापादकसहकारित्वेन द्वादशाहस्य श्रूयमाणत्वात् ।

(५) 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त' इति वचनादह्नां पत्नीसंयाजान्तत्वमत्र द्रष्टव्यम् ।

(६) एकदेशं विभज्य ।

शात् । तस्मादपि न स्वतन्त्र इति प्राप्ते ॥ ४६ ॥

**विद्यैव तु निर्द्धारणात् ॥४७॥**

**दर्शनाच्च ॥४८॥**

**श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥**

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥५०॥**

**न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥५१॥**

अभिधीयते मा भूदन्येषां श्रुतिविध्युद्देशानामन्यार्थदर्शनानामप्राप्तप्रापकत्वमेतेषु त्वश्रुतविध्युद्देशेषु 'वचनानि त्वपूर्वत्वादिति' न्यायाद् विधिरुन्नेतव्यस्तथा चैतेभ्यो यादृशोऽर्थः प्रतीयते तदनुरूप एव स भवति, प्रतीयते चैतेभ्यो मनश्चिदादीनां सान्तत्यं चावधारणं च फलभेदसमन्वयश्च पुरुषसंबन्धश्च । (१)न चास्य गोदोहनादिवत् क्रत्वर्थाश्रितत्वं येन पुरुषार्थस्य कर्मपारतन्त्र्यं भवेत् । न च विद्याचित एवेत्यवधारणं बाह्यसाधनापाकरणार्थम्, स्वभावत एव विद्याया बाह्यानपेक्षत्वसिद्धेः । तस्मात्परिशेषान्मानसग्रहवत् क्रियानुप्रवेशशङ्कापाकरणार्थमवधारणम् । (२)न चैवमर्थत्वे सम्भवति द्योतकत्वमात्रेण निपातश्रुतिः पीडनीया । तस्मात् श्रुतिलिङ्गवाक्यानि प्रकरणमपोद्य स्वातन्त्र्यं मनश्चिदादीनामवगमयन्तीति सिद्धम् । अनुबन्धातिदेशश्रुत्यादिभ्य एवमेव विज्ञेयम् । ते च भाष्य एव स्फुटाः । यदुक्तं पूर्वपक्षिणा 'क्रत्वङ्गत्वे पूर्वेणेष्टकाचितेन मनश्चिदादीनां विकल्प' इति (३)तदतुल्यकार्यत्वेन दूषयति "न च सत्येव क्रियासम्बन्ध"इति ( पृ० ८३६ पं० ८ ) ॥ ४७–५१ ॥

अपि च पूर्वापरयोर्भागयोर्विद्याप्राधान्यदर्शनात् तन्मध्यपातिनोऽपि तत्सामान्याद् विद्याप्रधानत्वमेव लक्ष्यते न कर्माङ्गत्वमित्याह सूत्रेण—

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥**

स्फुटमस्य भाष्यम् । (४)अस्ति राजसूयः—'राजा स्वाराज्यकामो राजसूयेन यजेते'ति । तं प्रकृत्यामनन्ति अवेष्टिं नामेष्टिम्—आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्येवमादि, तां प्रकृत्याभिधीयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वाभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रमि'ति । तत्र सन्दिह्यते—किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणमुत

---

( १ ) ननु फलार्थस्यापि क्रत्वङ्गाश्रितत्वादेकप्रयोगत्वं दृष्टमित्याशङ्क्याह नचास्येति । मनोवृत्तिष्वग्नित्वदृष्टिविधेरित्यर्थः ।

( २ ) ननु निपातानां चादीनामन्यतः प्राप्तार्थद्योतकत्वं दृश्यते एवमेवकारस्यापि इत्याशंक्याह न चैवमिति ।

( ३ ) पूर्वपक्षिसमभिप्रेतं क्रियानुप्रवेशमात्रं दूषितमधुना यदि सविकल्पं ब्रूयात्तदा सोपि दूष्यत इत्याह तदतुल्यकार्यत्वेनेति ।

( ४ ) दृष्टचेति पदसूचितं द्वितीयवेष्टयधिकरणमनुक्रामति अस्तीत्यादिना । बार्हस्पत्यं चरुमाग्नेयैन्द्रपुरोडाशयोर्मध्ये निधायेत्यर्थः ।

ब्राह्मणादीनामयं यागो विषयित इति । (१)अत्र यदि प्रजापालनकण्टकोद्धरणादि कर्म राज्यं तस्य कर्ता राजेति राजशब्दस्यार्थः, ततो राजा राजसूयेन यजेतेति राज्यस्य कर्तू राजसूयेऽधिकारः । तस्मात्सम्भवत्यविशेषेण ब्राह्मणक्षत्रियवैश्या राज्यस्य कर्तार इति सिद्धम् । सर्व एवैते राजसूये प्राप्ता इति । यदि ब्राह्मणो यजेतेत्येवमादयो निमित्तार्थाः श्रुतयः । (२)अथ तु राज्ञः कर्म राज्यमिति राजकर्तृयोगात् तत्कर्म राज्यं ततः को राजेत्यपेक्षायामार्येषु तत्प्रसिद्धेरभावात् (३)पिकनेमतामरसादिशब्दार्थावधारणाय म्लेच्छप्रसिद्धिरिवान्ध्राणां क्षत्रियजातौ राजशब्दप्रसिद्धिस्तदवधारणकारणमिति। क्षत्रिय एव राजेति न ब्राह्मणवैश्ययोः प्राप्तिरिति राजसूयप्रकरणं भित्त्वा ब्राह्मणादिकर्तृकाणि पृथगेव कर्माणि प्राप्यन्त इति न नैमित्तिकानि । तत्र किं तावत्प्राप्तं ? नैमित्तिकानीति । राज्यस्य कर्ता राजेति आर्याणामान्ध्राणां चाविवादः । तथाहि—ब्राह्मणादिषु प्रजापालनकर्तृषु कनकदण्डातपत्रश्वेतचामरादिलाञ्छनेषु राजपदमान्ध्राश्चार्याश्चाविवादं प्रयुञ्जाना दृश्यन्ते । तेनाविप्रतिपत्तेर्विप्रतिपत्तावप्यार्यान्ध्रप्रयोगयोर्यववराह(४)वदार्यप्रसिद्धेरान्ध्रप्रसिद्धितो बलीयस्त्वात् । (५)बलवदार्यप्रसिद्धिविरोधे स्वतन्मूलायाः पाणिनीयप्रसिद्धेर्विरोधे त्वनपेक्षं स्यादिति न्यायेन बाधनात्तदनुगुणतया वा कथंचिन्नखनकुलादिवदन्वाख्यानमात्रपरतया नीयमानत्वाद्राज्यस्य कर्ता राजेति सिद्धे निमित्तार्थाः श्रुतयः । तथ च यदि शब्दोऽप्याञ्जसः स्यादिति प्राप्तम् ।

एवं प्राप्त उच्यते ।

(६)रूपतो न विशेषोऽस्ति ह्यार्यम्लेच्छप्रयोगयोः ।
वैदिकाद्वाक्यशेषात्तु विशेषस्तत्र दर्शितः ॥

तदिह राजशब्दस्य कर्मयोगाद्वा कर्तरि प्रयोगः, कर्तृप्रयोगाद्वा कर्मणीति विशये

---

( १ ) तत्र प्राप्तिप्रकारमाहाश्रेति । यदि राज्यकर्ता राजा तदा त्रयाणां वर्णानां राज्यकर्तृकत्वाद्राजसूये च प्राप्तत्वेन तदङ्गावेष्टावपि प्राप्तेर्निमित्तार्थत्वं ब्राह्मण इत्यादेरर्थः।

( २ ) अप्राप्तिप्रकारमाहाथत्विति । येषां शब्दानामार्येषु न प्रसिद्धोऽर्थः, पिकादीनान्तेषां किं निगमार्थो ग्राह्य उत म्लेछप्रसिद्ध इति सन्देहे शास्त्रीयत्वान्निगमार्थ एव ग्राह्य इति प्राप्ते, समुदायप्रसिद्धेरवयवप्रसिद्धितो बलवत्त्वात्पिकादीनि यद्रूपाणि वेदे दृश्यंते तद्रूपाणामेव म्लेच्छैरर्थविशेषेषु प्रयुज्यमानत्वात् तत्र बाधाभावाच्च म्लेच्छप्रसिद्ध एवार्थो ग्राह्यः इति भावः॥ नेमोऽर्धम् ।

( ३ ) प्राप्तौ सत्यां निमित्तार्थत्वं 'यदि ब्राह्मण' इत्यादेः स्यादित्याह 'राज्यस्ये' त्यारभ्य 'तेनाविप्रतिपत्ते' रित्यन्तेन ।

( ४ ) यववराहवदिति । यवमयश्चरुर्भवति वाराही उपानहाविल्यत्र यववराहशब्दयोर्म्लेच्छैः प्रियङ्गुवायसयोः प्रयोगादार्यैश्च दीर्घसूकरयोः प्रयोगात्तुल्यबलत्वादुभयोर्विकल्पेनाभिधानप्राप्तौ 'यत्रान्या ओषधय' इत्यादिवाक्यशेषात् यथा दीर्घशूकरावर्थौ तथेत्यर्थः।

( ५ ) ननु म्लेच्छप्रसिद्धिमात्रेण क्षत्रियजातौ राजशब्दार्थ इति न ब्रूमो किन्तु 'गुणवचनब्राह्मणादिभ्य' इति पाणिनिना गुणवचनेभ्यः शुक्लादिशब्देभ्यो ब्राह्मणादिशब्देभ्यश्च ष्यञ्स्मरणाद्राज्ञः कर्म राज्यमिति सिध्यति ततश्च क्षत्रियो राजेत्यप्राप्तिर्ब्राह्मणादीनां राजसूय इति सिद्धान्तिमतमाशंक्याह पूर्वपक्षी बलवदार्येति । प्रयोगमूला पाणिनिस्मृतिरार्यप्रयोगविरोधेऽतन्मूला म्लेच्छप्रयोगमूला स्यादतो मूलबोधेन बाध्येत्यर्थः ।

( ६ ) अनादिवृद्धव्यवहाररूढत्वादार्यम्लेच्छप्रयोगयोः स्वरूपतो न विशेषो यवादिशब्देषु तु वैदिकोक्तवाक्यशेषानुगृहीतार्यप्रसिद्धेर्बलवत्त्वं राजशब्दे त्वार्यप्रसिद्धेर्न वेदानुग्रह इति द्वयोरविशेष इति कारिकार्थः ।

(१)वैदिकवाक्यशेषवदभियुक्ततरस्यात्र भवतः पाणिनेः स्मृतेर्निर्णीयते । प्रसिद्धिरान्ध्राणामना-(२)दिरादिमती चार्याणां प्रसिद्धिः, गोगाव्यादिशब्दवत्(३) । न च सम्भाविताादिमत्त्वा प्रसिद्धिः पाणिनिस्मृतिमपोद्यानादिप्रसिद्धिमादिमतीं कर्तुमुत्सहते । गाव्यादिशब्दप्रसिद्धेरनादित्वेन गवादिपदप्रसिद्धेरप्यादिमत्त्वापत्तेः । तस्मात्पाणिनीयस्मृत्यनुमतान्ध्रप्रसिद्धिबलीयस्त्वेन क्षत्रियत्वजातौ राजशब्दे मुख्ये तत्कर्तृकतज्जातौ राजशब्दो गौण इति । क्षत्रियस्यैवाधिकाराद् राजसूये तत्प्रकरणमपोद्यावेष्टेरुत्कर्षः । (४)अन्वयानुरोधी यदिशब्दो न त्वपूर्वविधौ सतिध्य तमन्यथयितुमर्हति । अत एवाहुर्यदिशब्दपरित्यागो रुच्यध्याहारकल्पनेति(५) । इयं च राजसूयादधिकारान्तरमेतयान्नाद्यकामं याजयेदिति नास्तीति कृत्वाचिन्ता । एतस्मिंस्त्वधिकारेऽन्नाद्यकामस्य त्रैवर्णिकस्य सम्भवात् प्रातिर्निमित्तार्थता ब्राह्मणादिश्रवणस्येति दुर्वारैवेति ॥ ५२ ॥

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

अधिकरणतात्पर्यमाह—"इहे"ति ( पृ० ८३८ पं० १७ )। समर्थनप्रयोजनमाह—"बन्धमोक्षे"ति । असमर्थने बन्धमोक्षाधिकाराभावमाह—"न ह्यसती"ति । अथस्तनतन्त्रोक्तेन पौनरुक्त्यं चोदयति—"नन्वि"ति ( पृ० ८३९ पं० १ )। परिहरति—"उक्तं भाष्यकृते"ति । न सूत्रकारेण तत्रोक्तं येनपुनरुक्तं भवेदपि तु भाष्यकृतेति अत्रस्यस्यैवार्थस्यापकर्षः प्रमाणलक्षणोपयोगितया तत्र कृत इति । यत इह सूत्रकृद्वक्ष्यत्यत एव भगवतोपवर्षेणोद्धारोऽपकर्षस्य कृतः । विचारस्यास्य पूर्वोत्तरतन्त्रशेषमाह—"इह चे"ति । (६)पूर्वाधिकरणसङ्गतिमाह—"अपि चे"ति । नन्वात्मास्तित्वोपपत्तय एवात्रोच्यन्तां किं तदाक्षेपेणेत्यत आह—"आक्षेपपूर्विका ही"ति । आक्षेपमाह—"अत्रैके देहमात्रात्मदर्शिन" इति । यद्यपि समस्तव्यस्तेषु पृथिव्यप्तेजोवायुषु न चैतन्यं दृष्टं, तथापि कायाकारपरिणतेषु भविष्यति । न हि (७)किण्वादयः समस्तव्यस्ता न मदना दृष्टा इति मदिराकारपरिणता न मदयन्ति । अहमिति त्वानुभवे देह एव गौराद्याकारः प्रथते, (८)न तु तदतिरिक्तः तदधिष्ठानः कुण्ड इव दधीति । अत एवाहं स्थूलो गच्छामीत्यादिसामानाधिकरण्योपपत्तिरहमः स्थूलादिभिः । न जातु दधिसमानाधिकरणानि मधुरादीनि कुण्डस्यैकाधिकरण-

---

( १ ) अविशेषमुक्त्वा म्लेच्छप्रसिद्धे राजशब्दविषये विशेषं दर्शयन्नाह वैदिकेति। स्मृत्यनुगृहीतम्लेच्छप्रयोग आर्यप्रयोगाद्बलीयानित्यर्थः । ( २ ) मुख्या ।

( ३ ) गावीशब्दो ह्यशक्त्या प्रयुक्तो न गोशब्दस्य गौणत्वमापादयति यथा तथेदमपीति भावः ।

( ४ ) ननु ब्राह्मणादिवाक्यानामप्राप्तब्राह्मणादिप्रापकत्वे यदिशब्दविरोध उक्त इति, तत्राहान्वयेति । अन्वयः प्राप्तिः । यदिशब्दो निपातस्ते चोत्सर्गतः प्राप्तिमपेक्षन्ते, अप्राप्ते चार्थे वाक्यान्गम्यमाने यदिशब्दो भंजनीय इत्यर्थः ।

( ५ ) व्यवधानेन सम्बन्धो हेतुहेतुमतोश्च लिङ्' इति शेषः । यदि रोचयेत फलं मे स्यादिति तर्हि ब्राह्मणो यजेतेति रुच्यध्याहारकल्पनान्न विधित्वक्षतिरित्यर्थः ।

( ६ ) मनश्चिदादीनां पुरुषार्थत्वमनुपपन्नं देहव्यतिरिक्तस्य तत्फलभोक्तुरभावादित्याक्षेपलक्षणाभित्यर्थः ।

( ७ ) मदिरारंभकद्रव्यविशेषः । मदना-मदकारणाः ।

( ८ ) नन्वहमिति प्रत्यक्षे देहाश्रित आत्मा भासतेऽतः कथं देहोऽचेतन इत्यनुमानस्य बाधस्तत्राह नत्विति। स देहोऽधिष्ठानं यस्य स तदधिष्ठानः, कुण्ड इव दधीति वैधर्म्यदृष्टान्तः, यथा कुण्डे दध्याश्रितं तदतिरिक्तं प्रतीयते नैवमात्मा देहाश्रितोऽहमिति प्रतीयते इत्यर्थः ।

मनुभवन्ति सितं मधुरं कुण्डमिति(१)। न चाप्रत्यक्षमात्मतत्त्वमनुमानादिभिः शक्यमुन्नेतुम्। न खल्वप्रत्यक्षं प्रमाणमस्ति। उक्तं हि—

(२)देशकालादिरूपाणां भेदाद्भिन्नासु शक्तिषु।
भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥ इति।

(३)यदा च उपलब्धिसाध्यनान्तरीयकभावस्य लिङ्गस्येयं गतिः, तदा कैव कथा दृष्टव्यभिचारस्य शब्दस्य, अर्थापत्तेश्चात्यन्तपरोक्षार्थगोचरायाः, उपमानस्य च सर्वैकदेशसादृश्यविकल्पितस्य, सर्वसारूप्ये तत्त्वात्, एकदेशसारूप्ये चातिप्रसङ्गात्, सर्वस्य सर्वेणोपमानात्। सांप्रतं तु हेतुर्भाष्यकृता व्याख्यातः। चेष्टा हिताहितप्राप्तिपरिहारार्थो व्यापारः। स च शरीराधीनतया दृश्यमानः शरीरधर्मः, एवं प्राणः श्वासप्रश्वासादिरूपः शरीरधर्म एव। इच्छाप्रयत्नादयश्च यद्यप्यान्तराः तथापि शरीरातिरिक्तस्य तदाश्रयानुपलब्धेः सति शरीरे भावात् अन्तःशरीराश्रया एव, अन्यथा दृष्टहानादृष्टकल्पनाप्रसङ्गात्। (४)शरीरातिरिक्त आत्मनि प्रमाणाभावात् शरीरे च सम्भवात् शरीरमेवेच्छादिमदात्मेति प्राप्ते ॥ ५३ ॥

**(सू०) व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥५४॥**

उच्यते–(५)नाप्रत्यक्षं प्रमाणमिति ब्रुवाणः प्रष्टव्यो जायते कुतो भवान् अनुमानादीनामप्रामाण्यमवधारितवान् इति। प्रत्यक्षं हि लिङ्गादिरूपमात्रग्राहि नाप्रामाण्यमेषां विनिश्चेतुमर्हति। न हि धूमज्ञानमिवैषामिन्द्रियार्थसंनिकर्षादप्रामाण्यज्ञानमुदेतुमर्हति, किन्तु देशकालावस्थारूपभेदेन व्यभिचारोत्प्रेक्षया, न चैतावान् प्रत्यक्षस्य व्यापारः सम्भवति। यथाहुः–'नहीदमियतो व्यापारान् कर्तुं समर्थं संनिहितविषयबलेनोत्पत्तेरविचारकत्वादि'ति। तस्मादस्मिन्ननिच्छतापि प्रमाणान्तरमभ्युपेयम्। (६)अपि च प्रतिपन्नं पुमांसमपहायाप्रतिपन्नसन्दिग्धाः प्रेक्षावद्भिः प्रतिपाद्यन्ते। न चैषामित्थंभावो भवत्प्रत्यक्षगोचरः, न खल्वेते गौरत्वादिवत् प्रत्यक्षगोचराः, किन्तु वचनचेष्टादिलिङ्गानुमेयाः। न च लिङ्गं प्रमाणं यत एते सिद्ध्यन्ति। न पुंसामित्थंभावमविज्ञाय यं कंचन पुरुषं प्रतिपिपादयिषतोऽनवधेयवचनस्य प्रेक्षावत्ता नाम। (७)अपि च पशवोऽपि हिताहितप्राप्तिपरिहारार्थिनः कोमलशष्पश्यामलायां भुवि प्रवर्तन्ते, परिहरन्ति चाश्यानतृणकण्टकाकीर्णाम्। नास्तिकस्तु पशोरपि पशुरिष्टानिष्टसाधनमविद्वान्।

---

(१) एवमात्माश्रिता ज्ञानादयो न देहतादात्म्येन प्रतीयेरन् यदि देह आत्मानं प्रत्याश्रयः, प्रतीयन्ते च तस्मान्न देह आत्माश्रयः किन्त्वात्मैवेति चार्वाकाशयः।

(२) देशेति। देशकालावस्थादिस्वरूपाणां भेदेन भिन्नासु शक्तिषु सतीषु व्याप्तिग्रहणदेशादावग्नेर्धूमजननशक्तिसत्त्वेऽपि अनुमानदेशे तदभावसंभवशङ्कयाऽग्न्यादीनामनुमानेन धूमादिलिंगेन प्रसिद्धिरतिदुर्बलेति कारिकार्थः। (३) आगमेनापि देहातिरिक्तात्मासिद्धिर्नेत्याह यदीति।

(४)नन्वन्तःशरीरप्रदेशाश्रितत्वमिच्छादीनामप्रत्यक्षमपि यथा कल्प्यते एवमात्माश्रितत्वमपि कल्प्यतामत आह शरीरेति। अत्यन्ताप्रमितात्माश्रितत्वकल्पनापेक्षया प्रमितदेहाभ्यंतरदेशे इच्छादयः सन्तीति कल्पनं वरमित्यर्थः। (५) उक्तामनुमानादिप्रमाणासिद्धिं परिहरन्नाह नाप्रत्यक्षमिति।

(६) प्रमाणान्तराभ्युपगमे तदप्रामाण्योक्तिर्व्याहतेत्युक्त्वा व्याघातान्तरमाहापि चेति।

(७) एवं प्रतिज्ञाव्याघातं कथाप्रवृत्तिव्याघातं च चार्वाकस्य दर्शयित्वा लोकयात्राव्याघातमाह अपि चेति। आश्यानं किंचिच्छुष्कम्।

न खल्विममनुमानगोचरप्रवृत्तिनिवृत्तिगोचरे प्रत्यक्षं प्रभवति । न (१) च परप्रत्यायनाय शब्दं प्रयुञ्जीत, शब्दस्यार्थस्याप्रत्यक्षत्वात् । तदेव मा नाम भून्नास्तिकस्य जन्मान्तरमस्मिन्नेव जन्मन्युपस्थितोऽस्य मूकत्वप्रवृत्तिनिवृत्तिविरहरूपो महानरकः । पराक्रान्तं चात्र सूरिभिः । (२)अत्यन्तपरोक्षगोचरा चान्यथानुपपद्यमानार्थप्रभवार्थापत्तिः, भूयःसामान्ययोगेन चोपमानमुपपादितं प्रमाणलक्षणे । तदत्रास्तु तावत्प्रमाणान्तरं, प्रत्यक्षमेवाहंप्रत्ययः शरीरातिरिक्तमालम्बत इत्यन्वयव्यतिरेकाभ्यामवधार्यते । योगव्याघ्रवत् स्वप्नदशायां च शरीरान्तरपरिग्रहाभिमानेप्यहंकारास्पदस्य प्रत्यभिज्ञायमानत्वमित्युक्तम् । (३)सूत्रयोजना तु न त्वव्यतिरिक्तः किन्तु व्यतिरिक्त आत्मा देहात् । कुतस्तद्भावाभावित्वात् । चैतन्यादिर्यदि शरीरगुणः ततोऽनेन विशेषगुणेन भवितव्यम् , न तु संख्यापरिमाणसंयोगादिवत् सामान्यगुणेन तथा च ये भूतविशेषगुणास्ते यावद्भूतभाविनो दृष्टा यथा रूपादयः । नह्यस्ति सम्भवः भूतं च रूपादिरहितं चेति । तस्माद्भूतविशेषगुणरूपादिवैधर्म्यात् न चैतन्यं शरीरगुणः(४) । एतेनेच्छादीनां शरीरविशेषगुणत्वं प्रत्युक्तम् । एवं प्राणचेष्टादयो यद्यपि देहधर्मा एव, तथापि न देहमात्रप्रभवाः, मृतावस्थायामपि प्रसङ्गात् । तस्माद्यस्यैते अधिष्ठानाद्देहधर्मा भवन्ति स देहातिरिक्त आत्मा । अदृष्टकारणत्वेऽभ्युपगम्यमाने तस्यापि देहाश्रयत्वानुपपत्तेरात्मैवाभ्युपेतव्य इति । वैधर्म्यान्तरमाह—"देहधर्माश्चे"ति (पृ०८४० पं०१५) । स्वपरप्रत्यक्षा हि देहधर्मा दृष्टा यथा रूपादयः । (५)इच्छादयस्तु स्वप्रत्यक्षा एवेति देहधर्मवैधर्म्यम् । तस्मादपि देहातिरिक्तधर्मा इति । (६)तत्र यद्यपि चैतन्यमपि भूतविशेषगुणः, तथापि यावद्भूतमनुवर्तेत । न च मदशक्त्या व्यभिचारः, सामर्थ्यस्य सामान्यगुणत्वात् । (७)अपि च मदशक्तिः प्रतिमदिरावयवं मात्रयाऽवतिष्ठते, तद्वद्देहेऽपि चैतन्यं तदवयवेष्वपि मात्रया भवेत्, तथा चैकस्मिन्देहे बहवः चेतयेरन् । न च बहूनां चेतनानामन्योन्याभिप्रायानुविधानसम्भव इति

---

(१) एवमनुमानविषयप्रवृत्तिनिवृत्तिगोचरेष्टानिष्टसाधनत्वेनानुमानप्रामाण्यमङ्गीकार्य शब्दप्रामाण्यमपि स्वीकारयन्नाह नचेति ।

(२) यत्तूक्तमदृष्टव्याप्तिकार्थापत्तिरत्यन्तपरोक्षार्थविषयत्वादप्रमाणमिति तत्राहात्यन्तेति । व्याप्तिदर्शनाभावेपि अन्यथानुपपद्यमानस्फोटादिकार्यरूपार्थजन्यार्थापत्तिः शक्त्यादिविषया स्यादेवेति भावः । यच्च सर्वकिञ्चित्सादृश्याभ्यामुपमानं दूषितं तत्राह भूय इति । सर्वात्मना किञ्चिन्मात्रेण वा सादृश्यज्ञानं नोपमानसामग्री किन्तु भूयःसामान्ययोगज्ञानम् , तच्च गोगवयोरस्त्येवेति नोपमानखण्डनसम्भव इत्यर्थः ।

(३) एवमनुमानादिप्रामाण्यं समर्थ्योभयसम्मतप्रत्यक्षेण देहातिरिक्तात्मसाधनं कृत्वाऽनुमानेनापि सूत्रव्याख्यानद्वारा तदाह सूत्रेति ।

(४) अत्र ज्ञानं न शरीरविशेषगुणोऽयावद्देहभावित्वात् घटवदिति प्रयोगो द्रष्टव्यः ।

(५) अनेन विमता इच्छादयो न देवदत्तदेहविशेषगुणाः गुणत्वे सति देवदत्तेतरप्रत्यक्षरहितत्वात् घटवदित्यनुमानप्रयोगः सूचितः । यद्यपि घटादयः परप्रत्यक्षास्तथापि गुणत्वे सतीति विशेषणान्न दृष्टान्ते साधनवैकल्यम् ।

(६) यदुक्तं पूर्वपक्षिणा भूतेष्वयावद्भूतभाव्यपि चैतन्यं देहाकारपरिणतेषु स्यान्मदशक्तिवदिति, तदपि न, चैतन्यस्य भूतविशेषगुणत्वेन यावद्देहभावित्वानुमानवद्यावद्भूतभावित्वानुमानान्मदशक्तेश्च विशेषगुणत्वाभावेन दृष्टान्तवैधर्म्यादित्याशयेनाह तत्रेति ।

(७) मदशक्तिवच्चैतन्यस्य परिणामधर्मत्वाङ्गीकारेप्याहापिचेति ।

एकपाशनिबद्धा इव बहवो विहङ्गमाः विरुद्धादिक्रियाभिमुखाः समर्था अपि न हस्तमात्रमपि देशमतिपतितुमुत्सहन्ते । एवं शरीरमपि न किंचित्कर्तुमुत्सहते । अपि च नान्वयमात्रात्तद्धर्मधर्मिभावः शक्यो विनिश्चेतुम् । मा भूदाकाशस्य सर्वो धर्मः सर्वेष्वन्वयात् , अपि त्वन्वयव्यतिरेकाभ्याम् सन्दिग्धश्चात्र व्यतिरेकः । तथा च न साधकत्वमन्वयमात्रस्येत्याह—"अपि च सति तावदि"ति (पृ०८४१ पं०१ दूषणान्तरं विवक्षुराक्षिपति—"किमात्मकं चेति" । (१)स एवैकग्रन्थेनाह—"नहीति" । नास्तिक आह—"यदनुभवनमि"ति । यथा हि भूतपरिणामभेदो रूपादिर्न तु भूतचतुष्टयादर्थान्तरम्, एवं भूतपरिणामभेद एव चैतन्यम्, न तु भूतेभ्योऽर्थान्तरम्, येन पृथिव्यापस्तेजो वायुरिति तत्त्वानीति प्रतिज्ञाव्याघातः स्यादित्यर्थः । एतदुक्तं भवति—चतुर्णामेव भूतानां समस्तं जगत्परिणामो न त्वस्ति तत्त्वान्तरं यस्य परिणामो रूपादयोऽन्यद्वा परिणामान्तरमिति । अत्रोक्ताभिस्तावदुपपत्तिभिर्देहधर्मत्वं निरस्तम्। तथाप्युपपत्त्यन्तराभिधित्सयाह तत्तर्हीति। (२)भूतधर्मा रूपादयो जडत्वाद्विषया एव दृष्टा न तु विषयिणः । न च केषांचिद्विषयाणामपि विषयित्वं भविष्यतीति वाच्यम् । स्वात्मनि वृत्तिविरोधात्। न चोपलब्धावेष प्रसङ्गस्तस्या अजडायाः स्वयंप्रकाशत्वाभ्युपगमात्। कृतोपपादनं चैतत्पुरस्तात् । उपलब्धिवदिति सूत्रावयवं योजयति—"यथैवास्या" इति। (३)उपलब्धिग्राहिण एव प्रमाणात् शरीरव्यतिरेकोऽप्यवगम्यते, तस्यास्ततः स्वयंप्रकाशप्रत्ययेन भूतधर्मेभ्यो जडेभ्यो वैलक्षण्येन व्यतिरेकनिश्चयात् । अस्तु तर्हि व्यतिरेकोपलब्धिर्भूतेभ्यः स्वतन्त्रा तथाप्यात्मनि प्रमाणाभाव इत्यत आह—"उपलब्धिस्वरूपमेव च न आत्मे"ति । (४)आजानतस्तावदुपलब्धिभेदो नानुभूयत इति विषयभेदादभ्युपेयः । न चोपलब्धिव्यतिरेकिणां विषयाणां प्रथा सम्भवतीत्युपपादितम्(५) , न च विषयभेदग्राहि प्रमाणमस्तीति चोपपादितं ब्रह्मतत्त्वसमीक्षायामस्माभिः । एवं च सति विषयरूपतद्भेदावेव सुदुर्लभाविति दूरनिरस्ता विषयभेदादुपलब्धिभेदसंकथा (६)तेनोपलब्धेरुपलब्धृत्वमपि न तात्त्विकम्, किन्त्वविद्याकल्पितम् । तत्राविद्यादशायामप्युपलब्धेरभेद इत्याह—"अहमिदमद्राक्षमिति च"ति । न केवलं तात्त्विकाभेदान्नित्यत्वमतात्त्विकादपि नित्यत्वमेवेति तस्यार्थः । "स्मृत्याद्युपपत्तेश्च" । नानात्वे हि नान्येनोपलब्धेऽन्यस्य पुरुषस्य स्मृतिरुपपद्यत इत्यर्थः । निराकृतमप्यर्थं निराकरणान्तरायानुभाषते—"यत्तूक्तमि"ति । यो हि देहव्यापारादुपलब्धिरुत्पद्यते तेन देहधर्म इति मन्यते तं प्रतीदं दूषणम्—"न चात्यन्तं देहस्ये"ति (पृ० ८४२ पं० ५ ) । प्रकृतमुपसंहरति—"तस्मादनवद्यमिति ॥ ५४ ॥

**अङ्गावबद्धा तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥**

(७)स्वरादिभेदात्प्रतिवेदमुद्गीथादयो भिद्यन्ते । तदनुबद्धास्तु प्रत्ययाः प्रतिशाखं वि-

---

( १ ) आक्षेप्ता एव ।
( २ ) अत्र देवदत्तचैतन्यं न देवदत्तदेहधर्मः तद्ग्राहकत्वाद्यज्ञदत्तचैतन्यवदित्यनुमानप्रयोगो द्रष्टव्यः ।
( ४ ) देहधर्मत्वबोधकानुमानस्य बाधितत्वमाहोपलब्धिग्राहिण एवेति । ( ३ ) स्वभावतः ।
( ५ ) अध्यासभाष्ये । प्रथा–प्रकाशः । विषयाभावे कैरुपाधिभिरुपलब्धेर्भेद इति तात्पर्यम् ।
( ६ ) ननु विषयाभावे उपलब्धरुपलब्धृत्वमपि न स्यादित्याशङ्क्योपलब्धेरिष्टप्रसङ्गतामाह तेनेति ।
( ७ ) उद्गीथादीनां सर्वशाखास्वेकत्वात् कथमुपासनव्यवस्थेत्याशङ्क्य आह स्वरादीति ।

हिता भेदेन। तत्र संशयः—किं यस्मिन्वेदे यदुद्गीथादयो विहितास्तेषामेव तद्वेदविहिता: प्रत्ययाः उतान्यवेदविहितानामप्युद्गीथादीनां ते प्रत्यया इति । किं तावत्प्राप्तम् ? 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति उद्गीथश्रवणेनोद्गीथसामान्यमवगम्यते । निर्विशेषस्य च तस्यानुपपत्तेर्विशेषाकाङ्क्षायां स्वशाखाविहितस्य विशेषस्य सन्निधानात् तेनैवाकाङ्क्षाविनिवृत्तेर्न शाखान्तरीयमुद्गीथान्तरमपेक्षते । (१)न चैवं सन्निधानेन श्रुतिपीडा, यदि हि श्रुतिसमर्पितमर्थमपबाधेत ततः श्रुतिं पीडयेत् न चैतदस्ति, नह्युद्गीथश्रुत्यभिहितलक्षितौ सामान्यविशेषौ बाधितौ, स्वशाखागतयोः स्वीकरणात् शाखान्तरीयास्वीकारेऽपि । यथाहुः—

(२)जातिव्यक्ती गृहीत्वेह वयं तु श्रुतलक्षिते ।
कृष्णादि यदि मुञ्चामः का श्रुतिस्तत्र पीड्यते ॥

एवं प्राप्ते, उच्यते—उद्गीथाद्यवबद्धास्तु प्रत्यया नानाशाखासु प्रतिवेदमनुवर्तेरन् न प्रतिशाखं व्यवतिष्ठेरन् , उद्गीथमित्यादिसामान्यश्रुतेरविशेषात् । एतदुक्तं भवति—(३)शुक्लं पटमानयेत्यादौ पटश्रुतिमविशेषप्रवृत्तामपि सन्निधानात् शुक्लश्रुतिर्बाधत इति, विशिष्टार्थप्रत्यायनप्रयुक्तत्वात् पदानां समभिव्याहारस्य,अन्यथा तदनुपपत्तेः । [४]न च स्वार्थमस्मारयित्वा विशिष्टार्थप्रत्यायनं पदानामिति विशिष्टार्थप्रयुक्तं स्वार्थस्मारणं न स्वप्रयोजकमपबाधितुमुत्सहते । मा च बाधि प्रयोजकाभावेन स्वार्थस्मारणमपीति युक्तम्, अविशेषप्रवृत्ताया अपि श्रुतेरेकस्मिन्नेव विशेषे अवस्थापनम् , इह तूद्गीथश्रुतेरविशेषेण विशिष्टार्थप्रत्यायकत्वात् सङ्कोचे प्रमाणं किञ्चिन्नास्ति । न च सन्निधिमात्रमपबाधितुमर्हति(५), श्रुतिसामान्यद्वारेण च सर्वविशेषगामिन्याः श्रुतेरेकस्मिन्नवस्थानं पीडैव । तस्मात्सर्वोद्गीथविषयाः प्रत्यया इति ॥ ५५ ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

(६)विरुद्धमिति नः क्व सम्प्रत्ययो यत्प्रमाणेन नोपलभ्यते, उपलब्धं च मन्त्रादिषु शाखान्तरीयेषु शाखान्तरीयकर्मसम्बन्धित्वम् , तद्वदिहापीति दर्शनादविरोधः। एतच्च दर्शितं भाष्येण सुगमेनेति ॥ ५६ ॥

---

(१) ननु सामान्यश्रुतिबाधेन कथं सन्निधेः स्थानात् स्वशाखागत उपासनानियम इत्याशङ्क्याह न-चैवमिति । उद्गीथमुपासीतेत्यत्रोद्गीथश्रुतेरुद्गीथसामान्यं वाच्यम्, उद्गीथव्यक्तिर्लक्ष्या, स्वशाखागतोद्गीथव्यक्त्युपादाने च सामान्यस्य प्रतिव्यक्तिसमाप्तेः सामान्यविशेषौ द्वावपि श्रुत्यर्थौ गृहीतौ तत्र कथं श्रुतिबाध इत्यर्थः ।

(२) पटं शुक्लमानयेति प्रयोगे पटपदेन श्रुतपटत्वजातिलक्षितौ शुक्लपटव्यक्ती गृहीत्वा कृष्णादिपटव्यक्त्यनन्तरं यदि मुञ्चामस्तत्र तदा का श्रुतिरस्माभिः पीड्यते, न कापीति भट्टोक्तकारिकार्थः ।

(३) पटमिति सामान्यश्रुतेः संनिधिमात्रान्न सङ्कोचोऽपि तु शुक्लमिति सन्निहितविशेषबलेन, प्रकृते तूपासनविधावुद्गीथादिसन्निधिमात्रं न तु स्वरादिभिन्नममुकमुद्गीथमुपासीतेति विशेषविषया श्रुतिर्विद्यते, इतश्च दुर्बलं सन्निधिमपबाध्य सामान्यश्रुत्या सर्वशाखासूपासनोपसंहार इति सिद्धान्ताशयमाह युक्तमित्यादिना ।

(४) यद्येवं किमर्थं तर्हि पदैः पदार्थाः स्मार्यन्ते अत आह नचेति । पदार्थस्मारणं वाक्यार्थबोधनाय द्वारमित्यर्थः ।

(५) श्रुतिमिति शेषः । यदुक्तं सन्निहितव्यक्त्युपादानेऽपि न सामान्यश्रुतेः पीडेति तत्राह श्रुतिरिति ।

(६) सन्निधिविरोधाङ्गीकारेण श्रुत्या सान्निधिबाधः उक्तः इदानीं विरोध एव नास्ति अन्यत्रापि दर्शनादित्याह विरुद्धमितीति

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॥ ५७ ॥

वैश्वानरविद्यायां छान्दोग्ये किं व्यस्तोपासनं समस्तोपासनं च उत समस्तोपासनमेवेति । तत्र 'दिवमेव भगवो राजन्निति होवाचे'ति प्रत्येकमुपासनश्रुतेः प्रत्येकं च फलवत्त्वाम्नानात् समस्तोपासने च फलवत्त्वश्रुतेः उभयथाप्युपासनम् । (१) न च यथा वैश्वानरीयेष्टौ "यदष्टाकपालो भवती"त्यादीनामवयुत्यवादानां प्रत्येकं फलश्रवणेऽपि अर्थवादमात्रत्वं "वैश्वानरं द्वादशकपालं निर्वपेदि"त्यस्यैव तु फलवत्त्वमेवमत्रापि भवितुमर्हति, तत्र हि "द्वादशकपालं निर्वपेदि"ति विधिभक्तिश्रुतिर्यदष्टाकपालो भवतीत्यादिषु वर्तमानापदेशः । न च वचनानि त्वपूर्वत्वादिति विधिकल्पना, अवयुत्यवादेन स्तुत्याप्युपपत्तेः, इह तु समस्ते व्यस्ते च वर्तमानापदेशस्याविशेषात् अगृह्यमाणविशेषतया उभयत्रापि विधिकल्पनायाः फलकल्पनायाश्च भेदात् , निन्दायाश्च समस्तोपासनारम्भे व्यस्तोपासनेऽप्युपपत्तेः, श्यामः श्वा आहुतिमभ्यवहरतीतिवत् उभयविधमुपासनमिति प्राप्ते,

उच्यते—(२)समस्तोपासनस्यैव ज्यायस्त्वं न व्यस्तोपासनस्य ।यद्यपि वर्तमानापदेशत्वमुभयत्राप्यविशिष्टं तथापि पौर्वापर्यालोचनया समस्तोपासनपरत्वस्यावगमः । यत्परं हि वाक्यं तदस्यार्थः, तथाहि—प्राचीनशालप्रभृतयो वैश्वानरविद्यानिर्णयायाश्वपतिं कैकेयमाजग्मुः, ते च तत्तदेकदेशोपासनमुपन्यस्तवन्तः । तत्र कैकेयस्तत्तदुपासननिन्दापूर्वं तन्निवारणेन समस्तोपासनमुपसंजहार । तथा चैकवाक्यतालाभाय वाक्यभेदपरिहाराय च समस्तोपासनपरतैव सन्दर्भस्य लक्ष्यते । तस्माद्बहुफलसंकीर्तनं प्रधानस्तवनाय, समस्तोपासनस्यैव तु फलवत्त्वमिति सिद्धम् । एकदेशिव्याख्यानमुपन्यस्य दूषयति—"केचित्त्वत्रे"ति । ( पृ० ८४६ पं० ) सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् नेदृशं सूत्रव्याख्यानं समञ्जसमित्यर्थः ॥ ५७ ॥

## नानाशब्दादिभेदात् ॥ ५८ ॥

(३)सिद्धं कृत्वा विद्याभेदमधस्तनं विचारजातमभिनिर्वर्तितम्, सम्प्रति तु सर्वासामीश्वरगोचराणां विद्यानां किमभेदो भेदो वा, एवं प्राणादिगोचरास्विति विचारयितव्यम्। (४)ननु

---

( १ ) व्यस्तोपासनफलश्रवणस्य समस्तोपासनस्तुत्यर्थत्वेनान्यथासिद्धिमाशङ्क्याह नचेत्यादिना । एवमत्रापि न च भवितुमर्हतीत्यन्वयः । वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इत्युपक्रम्य 'यदष्टाकपालो भवति ब्रह्मवर्चसेन पुत्रं पुनाती'त्यादिना कपालविशेषेषु फलविशेषानभिधाय 'द्वादशकपालो भवती'त्यादि समाम्नातम् , तत्र यद्यपि द्वादशत्वेऽष्टत्वादीनामन्तर्भावो वस्तुतः तथापि न परिच्छेदकत्वम् , तस्मादप्राप्तत्वाद्वैश्वानरेष्टावष्टाकपालत्वादिगुणविधानमिति पूर्वपक्षे, उत्पत्तिशिष्टद्वादशत्वविरोधान्न प्रकृतकर्मण्यष्टत्वादिगुणविधिरिति सिद्धान्तितम् प्रमाणलक्षणे, तथाच तत्राष्टत्वादीनां स्तुत्यर्थत्वमिह तु नैवं भवितुमर्हतीत्यर्थः। कुत इत्यत आह तत्र हीत्यादिना । वैश्वानरोपासने तु समस्ते व्यस्ते च विधेः कल्पनीयत्वात्कामशब्दस्य काम्यश्रवणात्फलत्वकल्पनायाश्चाविशेषात्सर्वत्र विधिकल्पनमिति भावः।

( २ ) उपक्रमोपसंहारयोरेकविद्याविषयत्वेनैकवाक्यतावगमान्न व्यस्तोपासनविधिरिति सिद्धान्तयति समस्तेति ।

( ३ ) नन्विहैव विद्यानां भेदनिरूपणे प्राक् तदसिद्धेर्गुणोपसंहारचिन्तनमसङ्गतमित्याशङ्क्याह सिद्धमिति । ( ४ ) अधिकरणानारम्भमाशङ्कमानो रूपभेदाद्विद्याभेद इति सदृष्टान्तमाह नन्विति यथेत्यादिना।

यथा प्रत्ययाभिधेयाया अपूर्वभावनाया(१) आजानतो भेदाभावेऽपि धात्वर्थेन निरूप्यमाणत्वात् तस्य च यागादेर्भेदात्प्रकृत्यर्थयागादिधात्वर्थानुबन्धभेदाद्भेदः, तदनुरक्ताया एव तस्याः प्रतीयमानत्वात् , एवं विद्यानामपि रूपतो वेद्यस्येश्वरस्याभेदेऽपि तत्तत्सत्यसङ्कल्पत्वादिगुणोपधानभेदाद्विद्याभेद इति नास्त्यभेदाशङ्का ।

उच्यते—युक्तमनुबन्धभेदात्कार्यरूपाणा(२)मपूर्वभावनानां भेद इति । इह ब्रह्मणः सिद्धरूपत्वाद्गुणानामपि सत्यसङ्कल्पत्वादीनां तदाश्रयाणां सिद्धतया सर्वत्राभेदो विद्यासु । नहि विशालवक्षाश्चकोरेक्षणः क्षत्रिययुवा दुश्च्यवनधर्मेति(३) एकत्रोपदिष्टोन्यत्र सिंहास्यो वृषस्कन्धः स एवोपदिश्यमानश्चकोरेक्षणत्वाद्यपजहाति, न खलु प्रत्युपदेशं वस्तु भिद्यते, तस्य सर्वत्र तादवस्थ्यात् , अतादवस्थ्ये वा तदेव न भवेत् , नहि वस्तु विकल्प्यत इति । तस्माद्वेद्याभेदाद् विद्यानां भेद इति प्राप्तम् ।

एवं प्राप्त उच्यते । भवेदेतदेवं यदि वस्तुनिष्ठान्युपासनवाक्यानि किन्तु (४)तद्विषयामुपासनाभावनां विदधति, सा च कार्यरूपा । (५)यद्यपि चोपासनाभावना उपासनाधीननिरूपणमुपास्यं चेश्वरादि व्यवस्थितरूपम् , तथाप्युपासनाविषयीभावोऽस्य कदाचित् कस्यचित् केनचिद्रूपेणेत्यपरिनिष्ठित एव । यथैकः स्त्रीकायः केनचिद्भक्ष्यतया केनचिदुपगन्तव्यतया केनचिदपत्यतया केनचिन्मातृतया केनचिदुपेक्षणीयतया विषयीक्रियमाणः पुरुषेच्छातन्त्रः, एवमिहापि उपासनानि पुरुषेच्छातन्त्रतया विधेयतां नातिक्रामन्ति(६) । न च तत्तद्गुणतयोपासनानि गुणभेदान्न भिद्यन्ते । (७)न चाग्निहोत्रमिवोपासनां विधाय दधितण्डुलादिगुणवदिह सत्यसङ्कल्पत्वादिगुणविधिर्येनैकशाखत्वं स्यात् , अपि तूत्पत्तावेवोपासनानां तत्तद्गुणविशिष्टानामवगमात् तत्रागृह्यमाणविशेषतया सर्वासां भेदस्तुल्यः । (८)न च समस्तशाखाविहितसर्वगुणोपसंहारः शक्यानुष्ठानः । तस्माद्भेदः । न चास्मिन्पक्षे समानाः सन्तः सत्यकामादय इति । केचित्खलु गुणाः कासुचित् विद्यासु समानास्तेनैकविद्यात्वे आवर्तयितव्याः, एकत्रोक्तत्वात् । विद्याभेदे तु न पौनरुक्त्यमेकस्यां विद्यायामुक्ता विद्यान्तरे नोक्ता इति विद्यान्तरस्यापि तद्गुणत्वाय वक्तव्या अनुक्तानामप्राप्तेरिति ॥ ५८ ॥

## विकल्पो विशिष्टफलत्वात् ॥ ५९ ॥

(९)अग्निहोत्रदर्शपौर्णमास्यादिषु पृथगधिकाराणामपि समुच्चयो दृष्टो नियमवान् , तेषां

---

(१) अपूर्वसाधनपुरुषप्रवृत्तेः । धात्वर्थेनेति । यजेतेत्यादौ प्रत्ययार्थभूतभावनाया धात्वर्थेन यागादिना निरूप्यमाणत्वादित्यर्थः ।  (२) साध्यरूपाणाम् ।

(३) इन्द्रसमानधर्मः ।  (४) वस्तुविषयाम् । उपासनाभावनां उपासनानिष्ठाम् ।

(५) उपासकप्रवृत्तेरुपासनाधीननिरूपणत्वेऽप्यभेदमाशङ्कते यद्यपि चेति ।। अस्येश्वरादेः कस्यचिदपि षोडशकलादेः कदाचित्तत्तदुपास्तिसमये केनचित्सत्यकामत्वादिना च रूपेणोपासनाविषयभावः इत्यर्थः ।

(६) ननु सत्यकामत्वादिगुणानामुपास्यत्वेन कार्यरूपत्वाच्चकोरेक्षणत्वादिभ्यो वैधर्म्येऽपि न विद्याभेदकत्वम् गुणिन एकत्वाद्गुणानां चोपसर्जनत्वादत आह नचेति । छत्रचामरादिगुणभेदेन राजोपास्तीनामिव तत्तद्गुणवत्स्वरूपेणोपासनाभेद एवेत्यर्थः ।

(७) ननु गुणभेदेऽपि कर्मैक्यवदुपासनैक्यं कुतो न स्यादत आह नचेति ।

(८) अशक्तेश्च न सर्वोपासनैक्यमित्याह न च समस्तेति ।

(९) अहंग्रहोपास्तीनां यथाकाममनुष्ठानमिति पूर्वपक्षयिष्यन् समुच्चयनियमेन किमिति पूर्वपक्षने

नित्यत्वादुपासनास्तु काम्यतया न नित्यास्तस्मात्तासां समुच्चयनियमः। तेन समानफलानां दर्शपौर्णमासज्योतिष्टोमादीनामिव न नियमवान्विकल्पः फलभूमार्थिनः समुच्चयस्यापि सम्भवादिति पूर्वः पक्षः। उपासनानाममूषामुपास्यसाक्षात्करणसाध्यत्वात्फलभेदस्यैकेनोपासनेनोपास्यसाक्षात्करणे तत एव फलप्रतिलम्भे तु कृतमुपासनान्तरेण। न च साक्षात्करणस्यातिशयसम्भवस्योपायसहस्रैरपि तादवस्थ्यात्, तन्मात्रसाध्यत्वाच्च फलावाप्तेः। उपासनान्तराभ्यासे च चित्तकाग्रताव्याघातेन कस्यचिदुपासनानिष्पत्तेरिह विकल्प एव नियमवानिति राद्धान्तः॥ ५९॥

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्॥६०॥**

(१)यासूपासनासु विनोपास्यसाक्षात्करणमदृष्टेनैव काम्यसाधनं तासां काम्यदर्शपौर्णमासादिवत् पुरुषेच्छावशेन विकल्पसमुच्चयाविति साम्प्रतम्॥ ६०॥

**अङ्गेषु यथाश्रयभावः॥ ६१॥**

**शिष्टेश्च॥ ६२॥**

तन्निर्द्धारणानियमस्तद्दृष्टेः पृथक्ह्यप्रतिबन्धः फलमित्यत्रोपासनासु फलश्रुतेः पर्णमयीन्यायेनार्थवादतयोपासनानां क्रत्वर्थत्वेन समुच्चयनियममाशङ्क्य पुरुषार्थतयैकप्रयोगवचनग्रहणाभावेन समुच्चयनियमो निरस्तः। इह तु सत्यपि पुरुषार्थत्वे कस्मान्नैकप्रयोगवचनग्रहणं भवतीति पूर्वोक्तमर्थमाक्षिपन् प्रत्यवतिष्ठते। (२)यद्यपि हि काम्या एता उपासनास्तथापि न स्वतन्त्रा भवितुमर्हन्ति, तथा सति हि क्रत्वर्थानाश्रिततया क्रतुप्रयोगाद्बहिरप्यमूषां प्रयोगः प्रसज्यते। न च प्रयुज्यन्ते। तत्कस्य हेतोः? क्रत्वर्थाश्रितानामेव तासां तत्तत्फलोद्देशेन विधानादिति। (३) एवं चाश्रयतन्त्रत्वादाश्रितानां प्रयोगवचनेनाश्रयाणां समुच्चयनियमेनाश्रितानामपि समुच्चयनियमो युक्त, इतरथा तदाश्रितत्वानुपपत्तेः। (४)स च प्रयोगवचन उपासनाः समुच्चिन्वन् तत्तत्फलकामनानामवश्यम्भावमाक्षिपति, तदभावे तासां समुच्चयनियमाभावादिति मन्वानस्य पूर्वः पक्षः।

---

क्रियते भिन्नाधिकाराणामपि दर्शादीनां समुच्चयनियमदर्शनादित्याशङ्कते अग्निहोत्रेति। परिहरति तेषामित्यादिना। यस्यास्त्रा साक्षात्स्यादुपास्यं न च विचिकित्सा संशयोऽस्ति प्राप्नुयामहं फलं नवेति, तस्य ब्रह्मप्राप्तिर्भवेदित्यर्थः।

( १ ) प्रतीकोपास्तीनामुपास्तित्वादहंग्रहोपास्तिवद्विकल्पनियममाशङ्क्याहंग्रहासु साक्षात्कारसाधनत्वमुपाधिमाह यास्विति।

( २ ) नन्वङ्गं प्रयुङ्क्ते प्रयोगविधिः, काम्यफलसाधनत्वे चोपास्तीनामनङ्गत्वात् कथं तासां प्रयोगवचनपरिग्रहस्तत्राह यद्यपीति।

( ३ ) ननु क्रत्वर्थाश्रिता उपासनाः फले विधीयन्ते एतावता कथं तासां समुच्चयसिद्धिरत आह एवं चेति।

( ४ ) ननु फलकामनायां सत्यामुपासना अनुष्ठीयन्ते, कथमासां क्रत्वङ्गैः सह नित्यं समुच्चित्यानुष्ठानम् नित्यानित्यसंयोगविरोधादत आह स चेति। उपास्तीनां क्रत्वङ्गसमुच्चयसिध्यर्थं फलकामना अपि प्रयोगविधिरेवानुष्ठापयतीत्यर्थः।

राद्धान्तस्तु(१) यथाविहितोद्दिष्टपदार्थानुरोधी प्रयोगवचनो न पदार्थस्वभावानन्यथयितुमर्हति, किन्तु तदविरोधेनावतिष्ठते, तत्र क्रत्वर्थानां नित्यवदाम्नानात्, तथाभावस्य च सम्भवात् नियमेनैतान्समुच्चिनोतु, कामाबद्धास्तूपासनाः कामानामनित्यत्वान्न समुच्चयेन नियन्तुमर्हति । नहि कामा विधीयन्ते येन समुच्चीयेरन् अपि तूद्दिश्यन्ते । मानान्तरानुसारी चोद्देशो न तद्विरोधेनोद्देश्यमन्यथयति, तथासत्युद्देशानुपपत्तेः । तस्मात्कामानामनित्यत्वात्तदवबद्धानामुपासनानामप्यनित्यत्वम् । नित्यानित्यसंयोगविरोधात्सत्यपि तदाश्रयाणां नित्यत्वे इदमेव चाश्रयतन्त्रत्वमाश्रितानां यदाश्रये सत्येव वृत्तिर्नासतीति, न तु तत्र वृत्तिरेव नावृत्तिरिति तदिदमुक्तम्—"आश्रयतन्त्राण्यपि ही"ति ( पृ० ८५१ पं० ८ ) ॥ ६१ ॥ ६२ ॥

## समाहारात् ॥ ६३ ॥

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरती"ति । अविभिन्नक्रमो दुरुद्गीथमपीति वेदान्तरोदितप्रणवोद्गीथैकत्वप्रत्ययसामर्थ्याद्धोतृकर्मणः शंसनात् उद्गाता प्रतिसमादधाति किं तदित्यत आह दुरुद्गीथमपि । (२)वेदान्तरोदिते चौद्गात्रे कर्मणि उत्पन्नं क्षतम् । एवं ब्रुवन्वेदान्तरोदितस्य प्रत्ययस्येत्यादि योजनीयम् ॥ ६३ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

## न वा तत्सहाभावाश्रुतेः ॥ ६५ ॥

## दर्शनाच्च ॥ ६६ ॥

अस्य सूत्रस्यान्वयमुखेन(३) व्यतिरेकमुखेन च व्याख्या, शेषमतिरोहितार्थम् ६४–६६ ।

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥



## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

(४)स्थितं कृत्वौपनिषदामपवर्गाख्यपुरुषार्थसाधनात्मज्ञानपरत्वमुपासनानां च तत्तत्पुरुषार्थसाधनत्वमधस्तनं विचारजातमभिनिर्वर्तितम्, सम्प्रति तु किमौपनिषदात्मतत्त्वज्ञानमपवर्गसाधनतया पुरुषार्थमाहो क्रतुप्रयोगापेक्षितकर्तृप्रतिपादकतया क्रत्वर्थमिति मीमांसामहे ।

---

( १ ) कामनायां अविधेयत्वान्न प्रयोगविधिप्रयोज्यत्वमिति वक्ष्यमाणमभिप्रेत्य मन्वानस्येत्युक्तम्, प्रयोगविधिः फलकामनानामवश्यंभावमाक्षिपतीत्येतद् दूषयति यथाविहितेति ।

( २ ) दुरुद्गीथं व्याचष्टे वेदान्तरेति ।

( ३ ) आश्रयसाधारण्ये आश्रितसाधारण्यमन्वयः, स आश्रयसाधारण्याभावे आश्रितसाधारण्याभावरूपव्यतिरेकव्याख्यया भाष्ये दृढीकृत इत्यर्थः ।

( ४ ) ननु फलभेदाभेदावन्तरेण न विद्याभेदाभेदौ, न च तावन्तरेण गुणोपसंहारानुपसंहारौ, ततः प्रागेव विद्यानां पुरुषार्थसाधनत्वस्य सिद्धत्वात् किं पुनरारम्भेणेत्यत आह स्थितमिति । फलभेदेन हि विद्याभेदमुपपाद्य तदाक्षिद्विशङ्काय, स उपपादनीय इत्यर्थः ।

(१)यदा च क्रत्वर्थं तदा यावन्मात्रं क्रतुप्रयोगविधिनापेक्षितं कर्तृत्वमामुष्मिकफलोपभोक्तृत्वं च, न चैतदनित्यत्वे (२)घटते, कृतविप्रणाशाकृताभ्यागमप्रसङ्गात्। अतो नित्यत्वमपि तावन्मात्रमुपनिषत्सु विवक्षितम्। इतोन्यत्वमनपेक्षितविपरीतं च नोपनिषदर्थः स्यात्, यथा शुद्धत्वादि। यद्यपि जीवानुवादेन तस्य ब्रह्मत्वप्रतिपादनपरत्वमुपनिषदामिति महता प्रबन्धेन तत्रतत्र प्रतिपादितं, तथाप्यत्र केषांचित्पूर्वपक्षशङ्काबीजानां निराकरणे तदेव स्थूणानिखननन्यायेन निश्चलीक्रियत इत्यस्ति विचारप्रयोजनम्। (३)तत्र यद्यपि प्रोक्षणादिवद् आत्मज्ञानं न किंचित्क्रतुमारभ्याधीतम्, यद्यपि च कर्तृमात्रं नाव्यभिचरितक्रतुसंबद्धं कर्तृमात्रस्य लौकिकेष्वपि कर्मसु दर्शनात्, येन पर्णतादिवदनारभ्याधीतमप्यव्यभिचरितक्रतुसंबद्धं(४) जुहूद्वारेण वाक्येनैव क्रत्वर्थमापद्यते, (५)तथापि यादृश आत्मा कर्ताऽऽमुष्मिकस्वर्गादिफलभोगभागी देहाद्यतिरिक्तो वेदान्तैः प्रतिपाद्यते न तादृशस्यास्ति लौकिकेषु कर्मसूपयोगः, तेषामैहिकफलानां शरीरानतिरिक्तेनापि यादृशतादृशेन कर्त्रोपपत्तेः, आमुष्मिकफलानां तु वैदिकानां कर्मणां तमन्तरेणासंभवात् तत्संबन्ध एवायमौपनिषदः कर्तेति तदव्यभिचारात्तान्युत्मारयज्जुह्वादिवद् वाक्येनैव (६) तज्ज्ञानं पर्णतावत् क्रत्वेदमर्थ्यमापद्यत इति फलश्रुतिरर्थवादः(७)। तदुक्तम्—'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादि'ति। (८)औपनिषदात्मज्ञानसंस्कृतो हि कर्ता पारलौकिकफलोपभोगयोग्योस्मीति विद्यावान् श्रद्धावान् क्रतुप्रयोगाङ्गं नान्यथा प्रोक्षिता इव व्रीहयः क्रत्वङ्गमिति। प्रियादिसूचितस्य च संसारिण एवात्मनो द्रष्टव्यत्वेन प्रतिज्ञापनात्, अपहतपाप्मत्वादयस्तु तद्विशेषणानि तस्यैव स्तुत्यर्थम्, न तु तत्परत्वमुपनिषदाम्। तस्मात्क्रत्वर्थमेवात्मज्ञानं कर्तृसंस्कारद्वारा न पुनः पुरुषार्थमिति। (९) एतदुपोद्बलनार्थं च ब्रह्मविदामाचारादिः श्रुत्यवगत उपन्यस्तः।

न केवलं वाक्यादात्मज्ञानस्य क्रत्वर्थत्वम्, तृतीयाश्रुतेश्च। न त्वेतत्प्रकृतोद्गीथविद्याविषयं (१०)यदेव विद्ययेति सर्वनामावधारणाभ्यां प्राप्तेरधिगमात्, यथा य एव धूमवान्देशः स वह्निमानिति। समन्वारम्भवचनं च फलारम्भे विद्याकर्मणोः साहित्यं दर्शयति। (११)तच्च

(१) नन्पनिषत्सु कर्तृभोक्तृत्वातिरिक्तमपि ब्रह्मात्मत्वमात्मन उपदिश्यते तद्विषयज्ञानस्य कथं कर्मोपयोगस्तत्राह यदेति। (२) शरीरपक्षे।

(३) केषाञ्चित्पूर्वपक्षबीजानामित्युक्तं, तान्येव दर्शयति यद्यपीति।

(४) न वाक्यादात्मज्ञानं क्रत्वङ्गमिति च सिद्धान्तिनोक्तं तदप्यनुवदति पूर्वपक्षी दूषणार्थं यद्यपि चेति। येन कर्तृमात्रेणात्मज्ञानमव्यभिचरितक्रतुसम्बन्धजुहूद्वारेण पर्णतावद्वाक्येनैव क्रतुसम्बन्धमापद्येत तत्कर्तृमात्रं नाव्यभिचरितक्रतुसम्बन्धमिति योजना।

(५) एवं सिद्धान्त्यभिप्रायमनूद्य दूषयति पूर्वपक्षी तथापीति।

(६) आत्मा वाऽरे द्रष्टव्य इत्यादि वाक्येनैव।

(७) ननु फलवतो ज्ञानस्य कथं क्रत्वर्थत्वमत आह अर्थवाद इति।

(८) आत्मज्ञानस्यादृष्टद्वारा कर्माङ्गत्वमाह औपनिषदात्मज्ञानेति।

(९) आचाराद्यन्यार्थदर्शनं प्रापकसापेक्षत्वान्न स्वतन्त्रमित्याह एतदिति।

(१०) तच्छ्रुतेरित्यादीनि लिङ्गपराणि सूत्राणि व्याचष्टे न केवलमिति।

(११) विद्यायाः कर्मभिः सह कर्त्रनुगमस्य समप्राधान्येऽपि सम्भवात् प्रकृतकर्मशेषत्वप्रतिज्ञया सहासङ्गतिमाशङ्क्याह तच्चेति। उक्तया युक्त्या आत्मज्ञानस्य दृष्टादृष्टद्वारेण कर्मसूपयोगेन।

यद्यप्याग्नेयादियागषट्कवत् समप्रधानत्वेनापि भवति, तथाप्युक्तया युक्त्या विद्यायाः कर्मं प्रत्यङ्गभावेनैव नेतव्यम् । वेदार्थज्ञानवतः कर्मविधानाद् उपनिषदोऽपि वेदार्थं इति तज्ज्ञानमपि कर्माङ्गमिति ॥ १—६ ॥

## नियमाच्च ॥ ७ ॥

सुगमम् ॥ ७ ॥

सिद्धान्तयति—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

यदि शरीराद्यतिरिक्तः कर्ता भोक्तात्मेत्येतन्मात्र उपनिषदः पर्यवसिताः स्युस्ततः स्यादेवं, नत्वेतदस्ति, तास्त्वेवंभूतजीवानुवादेन तस्य शुद्धबुद्धोदासीनब्रह्मरूपताप्रतिपादनपरा इति तत्रतत्रासकृदावेदितम् । (१) अनधिगतार्थबोधनस्वरसता हि शब्दस्य प्रमाणान्तरसिद्धानुवादेन । (२) तथा चौपनिषदात्मज्ञानस्य क्रत्वनुष्ठानविरोधिनः क्रतुसंबन्ध एव नास्ति, किमङ्ग ! पुनः तदव्यभिचारस्ततश्च क्रतुशेषता । तथा च नापवर्गफलश्रुतेरर्थवादमात्रत्वमपि तु फलपरत्वमेव । (३)अत एव प्रियादिसूचितेन संसारिणात्मनोपक्रम्य तस्यैवात्मनोऽधिकोपदिदिक्षायां परमात्मनोऽत्यन्ताभेद उपदिश्यते । यथा समारोपितस्य भुजगस्य रज्जुरूपादत्यन्ताभेदः प्रतिपाद्यते—योऽयं सर्पः सा रज्जुरिति ॥ ८ ॥

## तुल्यन्तु दर्शनम् ॥ ९ ॥

यथा विद्यायाः कर्माङ्गत्वे दर्शनमुपन्यस्तमेवमकर्माङ्गत्वे न दर्शनमुक्तम् । (४)तत्र कर्माङ्गत्वदर्शनानामन्यथासिद्धिरुक्ता केवलविद्यादर्शनानां तु नान्यथासिद्धिः ॥ ९ ॥

## असार्वत्रिकी ॥ १० ॥

(५)व्याप्तिरप्युद्गीथविद्यापेक्षया तस्या एव प्रकृतत्वात् न स्वशेषापेक्षया, यथ सर्वे ब्राह्मणा भोज्यन्तामिति निमन्त्रितापेक्षया तेषामेव प्रकृतत्वात् ॥ १० ॥

## विभागः शतवत् ॥ ११ ॥

सुगमम् । अविभागेऽपि न दोष इत्याह—"न चेदं समन्वारम्भवचनमि"ति ।

---

(१) शुद्धचैतन्यं वेदान्तबोध्यं न कर्तृत्वादिविशिष्टमित्यत्र विनिगमकमाहानधिगतार्थेति ।

(२) परार्थे फलश्रुतित्वादिति पूर्वोक्तहेतोर्विशेषणासिद्धिमाह तथा चेति ।

(३) यदि परमात्मतत्त्वमेवोपनिषदामर्थस्तर्हि प्रियादिसंसूचितजीवस्य द्रष्टव्यत्वं किमित्युपादिश्यते अत आहात एवेति ।

(४) एवं ब्रह्मज्ञानं न कर्माङ्गं फलवत्त्वाज्ज्योतिष्टोमवदिति प्रतिपाद्य वाक्यकृतकर्मसम्बन्धोऽवारितः, तुल्यं तु दर्शनमित्यत्र आचारादिलिङ्गदर्शनानां प्रतिलिङ्गमुपन्यस्तं, तत्र च शब्देनाकर्माङ्गत्वलिङ्गदर्शनस्य प्राबल्यं विशेष उक्तस्तद्दर्शयति तत्रेति ।

(५) 'यदेव विद्यया करोतीति' श्रुत्या विद्यायाः कर्माङ्गत्वमाशङ्कितं पूर्वपक्षे, तस्या अप्युद्गीथविद्याविषयत्वेनान्यथासिद्धिरुक्ता असार्वत्रिकीति सूत्रेण, तत्रास्याः श्रुतेः सर्वविषयत्वशङ्कां परोक्तां परिहरति व्याप्तिरपीति ।

(पृ० ८६० पं० १० ) संसारिविषया विद्या विहिता यथोद्गीथविद्या प्रतिषिद्धा च यथाऽसच्छास्त्राधिगमनलक्षणा ॥ ११ ॥

## अध्ययनमात्रवतः ॥ १२ ॥

अध्ययनमात्रवत एव कर्मविधिर्न तूपनिषदध्ययनवतः । एतदुक्तं भवति । यदध्ययनमर्थावबोधपर्यन्तं कर्मसूपयुज्यते, यथा कर्मविधिवाक्यानां तन्मात्रवत एवाधिकारः कर्मसु नोपनिषदध्ययनवतः तदध्ययनस्य कर्मस्वनुपयोगादिति । अध्ययनमात्रवत एवेति मात्रग्रहणेनार्थज्ञानं वा व्यवच्छिन्नमिति मन्वानो भ्रान्तश्चोदयति—"नन्वेवं सती"ति । स्वाभिप्रायमुद्घाटयन् समाधत्ते—"न वय"मिति । (पृ० ८६१ पं० १) उपनिषदध्यनापेक्षं मात्रग्रहणं नार्थबोधापेक्षमित्यर्थः ॥ १२ ॥

## नाविशेषात् ॥ १३ ॥

कुर्वन्नेवेह कर्माणीत्यविद्यावद्विषयमित्यर्थः ॥ १३ ॥

विद्यावद्विषयत्वेऽपि अविरोधो विद्यास्तुत्यर्थत्वादित्याह—

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

अपि च विद्याफलं प्रत्यक्षं दर्शयन्ती श्रुतिः कालान्तरभाविफलकर्माङ्गत्वं विद्याया निराकरोतीत्याह—

## कामकारेण चैके ॥ १५ ॥

कामकार इच्छा ॥ १४–१५ ॥

## उपमर्दं च ॥ १६ ॥

(१)अधिकोपदेशादित्यनेनात्मन एव शुद्धबुद्धोदासीनत्वादय उक्ताः । इह तु समस्तक्रियाकारकफलविभागोपमर्द चेति ॥ १६ ॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

सुबोधम् ॥ १७ ॥

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

(२)सिद्ध ऊर्ध्वरेतसामाश्रमित्वे तद्विद्यानामकर्माङ्गतयापवर्गता स्यात् , आश्रमित्वेन त्वेषामन्यार्थपरामर्शमात्रान्न सिद्ध्यति, विध्यभावात् । स्मृत्याचारप्रसिद्धिश्च तेषां प्रत्यक्षश्रुतिविरोधादप्रमाणम् , निन्दति हि प्रत्यक्षा श्रुतिराश्रमान्तरं 'वीरहा वा एष देवानामि'त्यादिका । प्रत्यक्षश्रुतिविरोधे च स्मृत्याचारयोरप्रामाण्यमुक्तं 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'ति । तदेतत्सर्वमाह—"त्रयो धर्मस्कन्धा इत्यादिना" "अनधिकृतविषया चेति" । (पृ० ८६२ पं० १४ ) अन्धपङ्ग्वादयो हि ये नैमित्तिककर्मानधिकृतास्तान्प्रत्याश्रमान्तरविधिरिति । "अपि चावपदति हि" (पृ०८६५ पं०५) । न केवलमन्यपरतया परा-

---

( १ ) अनेनावंसार्यात्मप्रतिपादनस्य सूत्रद्वयेप्यविशेषात्पुनरुक्तिदोषो निरस्तो बोध्यः ।

( २ ) पूर्वाधिकरणावान्तरसूत्रेणाक्षेपलक्षणा सङ्गतिमाह सिद्ध इति ।

मर्शस्याश्रमान्तरं न लभ्यते अपि स्वाश्रमान्तरनिन्दाद्वारेणापवादादपीत्यर्थः । स्यादेतद् , भवत्वेष परामर्शोऽन्यार्थः(१), ये चेमेऽरण्यइत्यादिभ्यस्त्वाश्रमान्तरं वेत्स्यतीत्यत आह— "ये चेमे ऽरण्य"इति । अस्यापि देवपथोपदेशपरत्वात नैतत्परत्वमित्यर्थः । न चान्यपरादपि स्फुटतराश्रमान्तरप्रत्यय इत्याह—"सन्दिग्धं चे"ति । नहि तप एव द्वितीय इत्यत्राश्रमान्तराभिधायी कश्चिदस्ति शब्द इति । नन्वे'तमेव प्रव्राजिन' इति वचनाद् आश्रमान्तरं वेत्स्यतीत्यत आह—"तथैतमेवे"ति । "एतदपि लोकसंस्तवनपरमि"ति । अधिकरणारम्भमाक्षिप्य नास्ति प्रत्यक्षवचनमिति कृत्वा चिन्तेयमिति समाधत्ते तत्र "ननु० ब्रह्मचर्यादेवे"ति ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

भवत्वन्यार्थः परामर्शः तथाप्येतस्मादाश्रमान्तराणि प्रतीयमानानि च नापाकरणमर्हन्ति० एवं तान्यपाक्रियेरन्यद्यस्मान्न प्रतीयेरन् , प्रतीयमानानि वा श्रुत्या बाध्येरन् । न तावन्न प्रतीयन्ते, तथाहि त्रयो धर्मस्कन्धा इति स्कन्धत्रित्वं प्रतिज्ञातम् । तत्र स्कन्धशब्दो यद्याश्रमपरो न स्याद् अपि तु समूहवचनस्ततो धर्माणां यज्ञादीनां प्रातिस्विकोत्पत्तीनां किमपेक्ष्य त्रित्वं संख्यासु व्यवस्थाप्येत, एकैकाश्रमोपसंगृहीतास्त्वाश्रमाणां त्रित्वाच्छक्याश्रित्वे व्यवस्थापयितुमित्याश्रमत्रित्वप्रतिज्ञोपपत्तिः, तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो ब्रह्मचारीति द्वितीयस्तप इति च तपःप्रधानात्तु वानप्रस्थाश्रमान्नान्यः ब्रह्मसंस्थ इति च पारिशेष्यात्परिव्राडिति वक्ष्यति । तस्मादन्यपरादपि परामर्शादाश्रमान्तराणि प्रतीयमानानि देवताधिकरणन्यायेन न शक्यन्तेऽपाकर्तुम् । न च प्रत्यक्षश्रुतिविरोधो, वीरहा वेत्यादेः प्रतिपन्नगार्हस्थ्यं प्रमादादज्ञानाद्वाग्निमुद्वासयितुं प्रवृत्तं प्रत्युपपत्तेः । एवं च अविरोधे सिद्धवत्परामर्शादाश्रमान्तराणां शास्त्रान्तरसिद्धिं वा कल्पयिष्यामो यथोपवीतविधिपरे वाक्ये 'उपव्ययते देवलक्ष्यमेव तत् कुरुते' इत्यत्र निवीतं मनुष्याणां प्राचीनावीतं(२) पितॄणामपि शास्त्रान्तरसिद्धयोर्निवीतप्राचीनावीतयोः परामर्श इति ॥ १९ ॥

## विधिर्वा धारणवत् ॥ २० ॥

(३)यद्यपि ब्रह्मसंस्थत्वस्तुतिपरतयाऽस्य सन्दर्भस्यैकवाक्यता गम्यते, संभवन्त्यां चैकवाक्यतायां वाक्यभेदो ऽन्याय्यः । तथाप्याश्रमान्तराणां पूर्वसिद्धेरभावात् परामर्शानुपपत्तेः, अपरामर्शे च स्तुतेरसंभवेन किंपरतया एकवाक्यतास्तु इति तां भङ्क्त्वा धारणवद् बरमपूर्वत्वाद्विधिरेवास्तु । यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती'त्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरि धारणमपूर्वत्वात् । यथोक्तम्—'विधिस्तु धारणे०

---

(१) ॐकार एवेदं सर्वम् इति प्रणवाख्यस्य ब्राह्मणः प्रस्तुतत्वात तत्संस्थत्वप्रशंसनार्थो भवतु त्रयो धर्मस्कन्धा इति परमार्थ इत्यर्थः ।

(२) इदं ज्योतिर्दर्शनात् ( अ० १ पा० ३ सू० ४० ) इत्यत्र प्रतिपादितन्तत्रैव द्रष्टव्यम् ।

(३) वाक्यभेदप्रसङ्गात्सूत्रकारीयविधिकल्पनमत्र सूत्रेऽन्याय्यमित्याशंक्याह यद्यपीत्यादिना । विधेयार्थैक्ये ह्यनुवादस्य विधिस्तुत्यर्थत्वेनैकवाक्यत्वम्, अत्र त्वप्राप्तार्थद्वयप्रतिभासाद्विधेयभेदे सति नैकवाक्यत्वसम्भव इति शंकार्थः ।

ऽपूर्वत्वादि’ति । तथेहाप्याश्रमान्तरपरामर्शश्रुतिविधिरेवेति कल्प्यते(१) । सम्प्रति परामर्शोपीतरेषामाश्रमाणां ब्रह्मसंस्थतासंस्तवसामर्थ्यादेव विधातव्या, न खल्वविधेयं संस्तूयते तदर्थत्वात् संस्तवस्येत्याह–“यद्यपी”ति । (२)अत्रावान्तरविचारमारभते “सा च किं चतुर्णा”मिति । विचारप्रयोजनमाह–“यदि चे”ति । ननु अनाश्रम्येव ब्रह्मसंस्थो भविष्यतीत्यत आह–“नाश्रमित्वे”ति । तत्र पूर्वपक्षमाह–“तत्र तपःशब्देने”ति । अयमभिसंधिः–न तावद् ब्रह्मसंस्थ इति पदं प्रत्यस्तमितावयवार्थं परिव्राजकाऽश्वकर्णादिपदवद्रूढम् , तदाश्रमप्राप्तिमात्रेणैव अमृतीभाव इति न तद्भावाय ब्रह्मज्ञानमपेक्षेत, तथा च ‘नान्यः पन्था विद्यते ऽयनाये’ति’ विरोधः । न च संभवत्यवयवार्थे समुदायशक्तिकल्पना । तस्माद्ब्रह्मणि संस्थाऽस्येति ब्रह्मसंस्थः । एवं चतुर्षु आश्रमेषु यस्यैव ब्रह्मणि निष्ठत्वमाश्रमिणः स ब्रह्मसंस्थो ऽमृतत्वमेतीति युक्तम् । तत्र तावद् ब्रह्मचारिगृहस्थौ स्वशब्दाभिहितौ तपःपदेन च तपःप्रधानतया भिक्षुवानप्रस्थावुपस्थापितौ । भिक्षुरपि हि समधिकशौचाष्टग्रासीभोजननियमाद् भवति वानप्रस्थस्तपःप्रधानः । न च गृहस्थादेः कर्मिणो ब्रह्मनिष्ठत्वासंभवः । यदि तावत् कर्मयोगः कर्मिता, सा भिक्षोरपि कायवाङ्मनोभिरस्ति । अथ ये न ब्रह्मार्पणेन कर्म कुर्वन्ति किन्तु कामार्थितया ते कर्म्मिणः, तथा सति गृहस्थादयोऽपि ब्रह्मार्पणेन कर्म कुर्वाणा न कर्म्मिणः । तस्माद्ब्रह्मणि तात्पर्यं ब्रह्मनिष्ठता न तु कर्म्मत्यागः प्रमाणविरोधात् । (३)तपसा च द्वयोराश्रमयोरेकीकरणेन त्रय इति त्रित्वमुपपद्यते । एवं च त्रयोऽप्याश्रमा अब्रह्मसंस्थाः सन्तः पुण्यलोकभाजो भवन्ति यः पुनरेतेषु ब्रह्मसंस्थः सोऽमृतत्वभागिति । (४)न च येषां पुण्यलोकभागित्वं तेषामेवामृतत्वमिति विरोधः । यथा देवदत्तयज्ञदत्तौ मन्दप्रज्ञावभूतां सम्प्रति तयोर्यज्ञदत्तस्तु शास्त्राभ्यासात् पटुप्रज्ञो वर्तते इति तथेहापि य एवाब्रह्मसंस्थाः पुण्यलोकभाजस्त एव ब्रह्मसंस्था अमृतत्वभाज इत्यवस्थाभेदादविरोधः । तथाच ब्रह्मसंस्थ इति यौगिकं पदं प्रकृतविषयं भविष्यति । यथा आग्नेय्याग्नीध्रमुपतिष्ठत इत्यत्र विनियुक्तापि (५)प्रकृतैवाग्नेयी

---

(१) अथस्तादित्यादिमहापितृयज्ञे दिष्ठगताग्निहोत्रे च श्रूयते, तत्रोपरि हि देवेभ्यो धारयतीत्यनुवादः वर्तमानापदेशाद्विशब्दाचेति पूर्वपक्षे, न समिद्भविःप्रच्छादने क्षमेत्यपाता, तस्मादप्राप्तेर्भङ्क्त्वा हि शब्दं पञ्चमलकारस्वीकारेण च विधिरिति शेषलक्षणे यथा राद्धान्तितम् तथेहाप्याश्रमान्तरपरामर्शश्रुतिविधिरेवेति कल्प्यत इति भावः ।

(२) ननु ब्रह्मसंस्थताविधावपि न पारिव्राज्यसिद्धिस्त्रयाणामपि गृहस्थादीनां ब्रह्मसंस्थत्वसंभवादिति कथं प्रकृतसङ्गतिरत आहात्रावान्तरेति ।

(३) ननु त्रयो धर्मस्कन्धा इत्युपक्रमात्सर्व एव इत्यत्र त एव त्रय एतच्छब्देन परामृश्यन्ते, तत्र तपःशब्देन परिव्राजकस्यापि ग्रहणे चत्वार आश्रमा मध्ये उक्ता इति त्रित्वेनोपक्रमस्तत्परामर्शश्च न घटेत अत आह-तपसा चेति । (४) ननु पुण्यलोकगामिनामेवामृतत्वभाक्त्वं विरुद्धमित्याशंक्याह न चेति ।

(५) ज्योतिष्टोमे प्रथम‘मग्न आयाहि वीतये’ इत्यादयो विशेषत आग्नेयादयो मन्त्रा आम्नाताः, स्तोत्रादिसाधनत्वेन विनियुक्ताश्च, पुनराग्नेय्याग्नीध्रमुपातिष्ठत इति सामान्येनाग्नेयीमात्रमाग्नीध्रोपास्थाने विनियुज्यते । तत्र किमप्रकृताग्नेयी विनियुज्यते, उताविशेषेणाग्निलिङ्गवती प्रकृताऽप्रकृता च या काचित् , उत प्रकृतैवेति संशये, आग्नेय्येति श्रुत्यविशेषात् सर्वाग्नेयीविनियोगोऽथवा विनियुक्ताविनियोगानुपपत्त्याऽप्रकृतैवेति पूर्वपक्षे शेषलक्षणे स्थितं सिद्धान्तमाह प्रकृतैवेति । अप्रकृतग्रहणे सामान्यविशेषसम्बन्धौ विधातव्यौ प्रकृतग्रहणे आग्नेय्याः क्रतुना सामान्यसम्बन्धसिद्धेर्विशेषमात्रविधाने लाघवमित्यर्थः ।

गृह्यते । (१)नच विनियुक्तविनियोगविरोधः । यदि त्वत्राग्नेय्युपदिश्येत ततो यथा प्रतीता तथोद्दिश्येत, विनियुक्ता च प्रतीतिर्भवेद् इति विनियुक्तविनियोगविरोधः । इह तु आग्नीध्रोपस्थाने सा विधेयत्वेन विनियुज्यते न तूद्दिश्यते, विधेयत्वेन च विनियोगे आग्नेयीपदार्थाविवक्षणात् प्रकृतातिक्रमे प्रमाणाभावात् । (२)तावता च शास्त्रोपपत्तेर्नाप्रकृतानामपि ग्रहणसंभवः, न च यातयामतया न विनियोगः । वाचस्तोमे सर्वेषामेव मन्त्राणां विनियोगादन्यत्राप्यविनियोगप्रसङ्गात् । तथेहापि प्रकृता एवाश्रमा बुद्धिविपरिवर्तिनः परामृश्यन्ते नानुक्तः परिव्राडेवेति पूर्वः पक्षः ।

राद्धान्तमुपक्रमते–"**तदयुक्तम्,–नहि सत्यां गतौ वानप्रस्थविशेषणे**"नेति । यथोपक्रान्तं तथैव परिसमापनमुचितम् । यत्सङ्ख्याकाश्च ये प्रसिद्धास्ते तत्सङ्ख्याका एव कीर्त्यन्त इति चोचितम् , न तु सत्यां गतावुत्सर्गस्यापवादो युज्यते । असाधारणेनैकैकेन लक्षणेनैकैक आश्रमो वक्तुमुपक्रान्त इति तथैव समापनमुचितम् , न तु साधारणासाधारणाभ्यामुपक्रमसमाप्ती श्लिष्येते । (३)न च तपो नाम नासाधारणं वानप्रस्थानामित्यत आह–"**तपश्चासाधारण**" इति (पृ०८६८ पं०३ ) । न खलु पराकादिभिः कायक्लेशप्रधानो यथा वानप्रस्थस्तथा भिक्षुः सत्यप्यष्टग्रासादिनियमे । न च शौचसन्तोषशमदमादयस्तपःपक्षे वर्तन्ते तत्र वृद्धानां तपःप्रसिद्धेरसिद्धेः । अत एव वृद्धाः तपसो भेदेन शौचादीनाचक्षते–'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा' इति । सिद्धसङ्ख्याभेदेषु च सङ्ख्यान्तराभिधानमश्लिष्टमित्याह–"**चतुष्ट्वेन चे**"ति । "**अपि च भेदव्यपदेशोऽत्रे**"ति । (४)त्रय एत इति किं भिक्षुरपि परामृश्यते किं वा भिक्षुवर्जं त्रय एव, न तावत्त्रय इति भिक्षुसङ्ग्रहे तद्वर्जनमेते त्रय इत्यत्र कर्तुं शक्यम् । एत इति प्रकृतानां साकल्येन परामर्शात् भिक्षुसङ्ग्रहे च न तस्य पुण्यलोकत्वमब्रह्मसंस्थत्वाभावाद् भिक्षोः, तेन तस्य ब्रह्मसंस्थस्य सदा पुण्यलोकत्वममृतत्वं चेति विरोधः । त्रिषु च ब्रह्मसंस्थपदे यदेति सम्बन्धनीयम् । भिक्षौ च सदेति वैधर्म्यम् । तदिदमुक्तम्—"**पृथक्त्वे चे**"ति । पूर्वपक्षाभासं स्मारयति–"**कथं पुनर्ब्रह्मसंस्थशब्दो योगादि**"ति । तन्निराकरोति—"**अत्रोच्यत**" इति । अयमभिसन्धिः । (५)सत्यं यौगिकः शब्दः सति प्रकृतसम्भवे न तदतिपत्याऽप्रकृते

(१) तत्राद्यं पूर्वपक्षं निषेधयति न चेति । (२) यत्तूक्तं सामान्यश्रुतिविरोध इति तत्राह तावतेति ।

(३) तपसः संन्यासिवनस्थयोस्साधारण्येन दूषणमुक्तमधुना तपसो वनस्थ एव सत्त्वान्न साधारण्यं येन परिव्राजकग्रहणं स्यादित्याह न च तप इति ।

(४) अवस्थाविशेषापेक्षयैकस्यैव पुण्यलोकामृतत्वप्राप्तिव्यपदेशभेदस्य पूर्वपक्ष उपपादितत्वाद्भाष्यायोगमाशङ्क्याह त्रय एत इतीत्यादिना । सामानाधिकरण्यात्ये त्रय इत्युक्तास्त एवैते इति परामृष्टव्यास्तत्र त्रय इति पदेन भिक्षुं विहाय गृहस्थादिग्रहणे तपःशब्देन भक्तिर्गृह्यते नवेति वक्तव्यम् । आद्ये तापसेन भिक्षुणा सह सर्वेषामेत इतिशब्देन प्रकृतपरामृष्टत्वादेतच्छब्दसमानार्थवृत्तिना त्रय इतिशब्देन भिक्षुवर्जं त्रयो वक्तुमशक्या इत्यर्थः । अथ तपःशब्देन भिक्षुसङ्ग्रहस्त्रयशब्देन भिक्षुसहिता निर्दिश्यन्ते तत्राह भिक्षुसङ्ग्रहे इति ।

(५) आग्नेयीन्यायेन ब्रह्मसंस्थशब्दस्य प्रकृतसर्वगोचरत्वस्योक्तत्वात्कथं त्रयाणां ब्रह्मसंस्थत्वासंभव इत्यत आह सत्यमिति ।

वर्तितुमर्हति, असति तु सम्भवे मा भूत्प्रमादपाठ इत्यप्रकृते वर्तयितव्यः। दर्शितश्चात्रासम्भवो(१)ऽधस्तादिति। (२)एष हि ब्रह्मसंस्थतालक्षणो धर्मो भिक्षोरसाधारण आश्रमान्तराणि तत्संस्थान्यतत्संस्थानि च भिक्षुस्तत्संस्थ इत्येव, तत्संस्थता हि स्वभावं व्यवच्छिन्दन्ती विरोधाद् यस्तत्संस्थ एव तत्राञ्जसी नान्यत्र। "शमदमादिस्तु तदीय इति" स्वाश्रमव्यवधायकामित्यर्थः। ब्रह्मसंस्थत्वमसाधारणं परिव्राजकधर्मं श्रुतिरादर्शयतीत्याह—"तथा च न्यास इति ब्रह्मे"ति ( पृ० ८६९ पं० ३ )। सर्वसङ्गपरित्यागो हि न्यासः स ब्रह्म कुत इत्यत आह—"ब्रह्मा हि परः"। अतः परो न्यासो ब्रह्मेति(३)। किमपेक्ष्य परः संन्यास इत्यत आह—"तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदि"ति। एतदुक्तं भवति—ब्रह्मपरतया सर्वैषणापरित्यागलक्षणो न्यासो ब्रह्मेति। तथा चेदृशं न्यायलक्षणं ब्रह्मसंस्थत्वं भिक्षोरेवासाधारणं नेतरेषामाश्रमिणाम्। ब्रह्मज्ञानस्य शब्दजनितस्य यः परीपाकः साक्षात्कारोऽपवर्गसाधनं तदङ्गतया पारिव्राज्यं विहितम्, न त्वनधिकृतं प्रतीत्यर्थः॥२०॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥
## भावशब्दाच्च ॥ २२ ॥

(४)यद्यत्र सन्निधान उपासनाविधिर्नास्ति ततः प्रदेशान्तरस्थितोऽपि विधिरव्यभिचरितताद्विधिसम्बन्धेनोद्गीथेनोपस्थापितः 'स एष रसानां रसतम' इत्यादिना पदसन्दर्भेणैकवाक्यभावमुपगतः स्तूयते, नहि समभिव्याहृतैरेवैकवाक्यता भवतीति कश्चिन्नियमहेतुरस्ति, अनुषङ्गातिदेशलब्धैरपि विध्यसमभिव्याहृतैरर्थवादैरेकवाक्यताभ्युपगमात्(५)। (६)यदि तूद्गीथमुपासीत सामोपासीते'त्यादिविधिसमभिव्याहारः श्रुतस्तथापि तस्यैव विधेः स्तुतिः, न तूपासनविषयसमर्पणपर 'ओमित्येतदक्षरमुद्गीथमि'त्यनेनैवोपासनाविषयसमर्प्पणादिति प्राप्ते,

अभिधीयते—न तावद्दूरस्थेन कर्मविधिवाक्येनैकवाक्यतासम्भवः, प्रतीतसमभिव्याहृतानां विधिनैकवाक्यतया स्तुत्यर्थत्वमर्थवादानां रक्तपटन्यायेन भवति। न तु स्तुत्या विना काचिदनुपपत्तिर्विधेः। यथाहुः—'अस्ति तु तदित्यतिरेके परिहार' इति। अत एव विधेरपेक्षा-

---

( १ ) वैरूप्येणेत्यर्थः।

( २ ) एवं प्रकृतपरामर्शित्वं ब्रह्मसंस्थशब्दस्य व्युदस्य यौगिकार्थस्य भिक्षावेव संभवं भाष्योक्तमुपपादयति एष हीति।

( ३ ) अत्र श्रुतौ 'सत्यं पर'मित्यादिना सत्यादितपांसि प्रक्रम्य तेभ्यः परत्वेन संन्यासः श्रूयते, तत्र ब्रह्मा परमात्मा उत्कृष्टः संन्यासोपीतरसाधनेभ्यः पर इत्यस्मात्साम्याद्ब्रह्मत्वेन स्तूयत इत्यर्थः।

( ४ ) ननु रसतमत्वादिभिः किमुद्गीथादिविधिस्तुतिरुतोपास्तिविधिः ? नाद्यः, उद्गीथादिविधेः कर्मप्रकरणस्थत्वेन व्यवधानात्तेनैकवाक्यत्वानुपपत्तेः। नान्त्यः, उपास्यविषयसमर्पणेन विध्यन्वयसम्भवे लक्षणया स्तुत्यर्थत्वायोगादित्याशङ्क्याह यद्यत्रेति।

( ५ ) यथा 'चित्पतिस्त्वा पुनातु' इत्यारभ्य—'अच्छिद्रेण पवित्रेणे'त्यन्ते श्रुतोऽच्छिद्रेणेत्येषोऽर्थवादः प्रतिमन्त्रमनुषज्यते, वैश्वदेवे 'आग्नेयमष्टाकपालं निर्वपती'त्यादिहविःषु श्रुता अर्थवादा वरुणप्रघासादिष्वतिदिश्यन्ते वा, एवमत्र व्यवधानेऽपि श्रुतत्वेनैकवाक्यता स्यादिति भावः।

( ६ ) सन्निहितविध्यभावाङ्गीकारेणाद्यपक्षमुपपाद्य द्वितीयं कल्पमवलंब्यापि पूर्वपक्षं घटयति यदि त्विति।

भावात् प्रवर्तनात्मकस्यानुषङ्गातिदेशादिभिरर्थवादप्राप्त्याभिधानमसमञ्जसम् । (१)नहि कर्त्रपेक्षितोपायतायामवगतायां प्राशस्त्यप्रत्ययस्यास्ति कश्चिदुपयोगः, तस्माद्दूरस्थस्य कर्मविधेः स्तुतावानर्थक्यम् । तेनैकवाक्यतानुपपत्तेः सन्निहितस्य तूपासनाविधेः किं विषयसमर्पणेनोपयुज्यतामुत स्तुत्येति विशये(२), विषयसमर्पणेन यथार्थत्वं नैवं स्तुत्या बहिरङ्गत्वात्, अगत्या हि सा । तस्मादुपासनार्था इति सिद्धम् ।

कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् ।
एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥

(३)भावनायाः खलु कर्तृसमीहितानुकूलत्वं विधिर्निषेधश्च(४) कर्तुरहितानुकूलत्वम् । यथाहुः—'कर्तव्यश्च सुखफलोऽकर्तव्यो दुःखफल' इति । एतच्चास्माभिरुपपादितं न्यायकणिकायाम् । (५)क्रिया च भावना तद्वचनाश्च करोत्यादयो, यथाहुः 'कृभ्वस्तयः क्रियासामान्यवचना' इति, अत एव कृभ्वस्तीनुदाहृतवान् । सामान्योक्तौ तद्विशेषाः पचेदित्यादयोऽपि गम्यन्त इति तत्र कुर्यादित्याक्षिप्तकर्तृका भावना । क्रियेतेति आक्षिप्तकर्मिका भावना । कर्तव्यमिति तु कर्मभूतद्रव्योपसर्जनभावना । एवं दण्डी भवेद्दण्डिना भवितव्यं दण्डिना भूयेतेत्येकधात्वर्थविषया (६)विध्युपहिता भावना उदाहार्याः । भवतिश्चैष जन्मनि । यथा कुलालव्यापाराद् घटो भवति बीजादङ्कुरो भवतीति प्रयुञ्जते । न च बीजादङ्कुरोऽस्तीति प्रयुञ्जते । तस्मादस्तिः सत्तायां न जन्मनीति ॥ २१-२२ ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥
## तथाचैकवाक्यार्थतोपन्यासात् ॥ २४ ॥

यद्यपि उपनिषदाख्यानानि विद्यासन्निधौ श्रुतानि । तथापि 'सर्वाण्याख्यानानि पारिप्लव' इति सर्वश्रुत्या निःशेषार्थतया दुर्बलस्य सन्निधेर्बाधितत्वात् पारिप्लवार्थान्येवाख्यानानि । (७)न च 'सर्वा दाशतयीरनुब्रूयादि'ति विनियोगेऽपि दाशतयीनां प्रातिस्विकविनियोगात्तत्रतत्र

(१) केवलस्य श्रुतस्य विधेरनपेक्षत्वमुदाहरति नहीति ।　　(२) संशये ।

(३) ननु भाष्योदाहृतन्यायविस्मरणे पञ्च विधिलक्षणान्युक्तानीति प्रतिभाति, तदयुक्तम्, नहि धात्वर्थभेदे कारकभेदे वा विधिलक्षणे भिद्यते इत्यशङ्क्य तदभिप्रायं विवरिष्यन् विधिलक्षणन्तावदाह भावनाया इति ।

(४) ननु विधौ स्मृतलिङ्गादेरेव न हन्यादिति निषेधेष्वपि प्रयोगात्कथं प्रत्ययस्य विधिवाचकत्वनियमस्तत्राह निषेधश्चेति । निषेधवाक्यस्थलिङादिप्रत्ययैरपि विध्यर्थोऽनूद्य नञा निषिध्यते इति न व्यभिचार इत्यर्थः ।　　(५) विधिलक्षणमुपस्थाप्य वार्तिकार्थमुपपादयति क्रिया चेत्यादिना ।

(६) श्रेयःसाधनत्वविशिष्टा । ननु भवतिरस्तिश्च पर्यायौ, भू सत्तायामस भुवीति च परस्परं व्याख्यानादत आह भवतिरिति । कश्चित्साव्ययर्थोऽपि भवतिरस्ति तदर्थमेव इति जन्मवचनो भवतिरस्तिस्तु जनिफलीभूत एवार्थसद्भाववचन इत्यर्थः ।

(७) ननु सर्वर्चामाश्विनप्रशंसने सर्वश्रुत्या विनियुक्तानामपि प्रातिस्विकार्थेषु विनियोगादाख्यानानां पारिप्लवे विद्यायां च विनियोगः किं न स्यादत आह नचेति । ऐन्द्र्या गार्हपत्यमिति प्रातिस्विकविनियोगानां सर्वा दाशतयीरिति समुदायविनियोगस्य च श्रौतत्वेन तुल्यत्वात् प्रातिस्विकविनियोगं सहते सर्वशब्दः, क्वाचित्कसमानस्य सकृत्प्रवृत्तस्य प्रातिस्विकविनियोगस्यावगुण्ठनाभावाल्लिङ्गादिभिर्मन्त्रविनियोगाविघातकत्वमित्यर्थः ।

कर्मणि यथा विनियोगो न विरुद्ध्यते तथेहापि सत्यपि पारिप्लवे विनियोगो सन्निधानाद् वि-द्याङ्गत्वमपि भविष्यतीति वाच्यम् । दाशतयीषु प्रातिस्विकानां विनियोगानां समुदायविनि-योगस्य च तुल्यबलत्वादिह तु सन्निधानात् श्रुतेर्बलीयस्त्वात् । तस्मात्पारिप्लवार्थान्येवाख्या-नानीति प्राप्ते,

उच्यते—(१)नैषामाख्यानानां पारिप्लवे विनियोगः किन्तु पारिप्लवमाचक्षीतेत्युपक्रम्य यान्याम्नातानि मनुर्वैवस्वतो राजेत्यादीनि तेषामेव तत्र विनियोगः तान्येव हि पारिप्लवेन वि-शेषितानि । (२)इतरथा पारिप्लवे सर्वाण्याख्यानानीत्येतावतैव गतत्वात् पारिप्लवमाचक्षीतेत्य-नर्थकं स्यात्, आख्यानविशेषकत्वे त्वर्थवत् । तस्माद्विशेषणानुरोधात् सर्वशब्दस्तदपेक्षो न त्वशेषवचनः । यथा सर्वे ब्राह्मणा भोजयितव्या इत्यत्र निमन्त्रितापेक्षः सर्वशब्दः । तथा चोपनिषदाख्यानानां विद्यासंनिधिप्रतिद्वन्द्वी विध्येकवाक्यता सोरोदीदित्यादीनामिव विध्ये-कवाक्यत्वं गमयतीति सिद्धम् । प्रतिपत्तिसौकर्याचेत्युपाख्यानेन हि बाला अप्यवधीयन्ते । यथा तंत्रोपाख्यायिकयेति(३) ॥ २३ ॥ २४ ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

(४)विद्यायाः क्रत्वर्थत्वे सति तया क्रतूपकरणाय स्वकार्याय क्रतुरपेक्षितः, तदभावे कस्योपकारो विद्येति । यदा तु पुरुषार्था तदा नानया क्रतुरपेक्षितः स्वकार्ये निरपेक्षाया एव तस्याः सामर्थ्यात् । अग्नीन्धनादिना चाश्रमकर्माण्युपलक्ष्यन्ते । यथाहुः–'अग्नीन्ध-नादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानी'ति । स्वार्थसिद्धौ नापेक्षितव्यानि न तु स्वसिद्धाविति । (५) एतच्चाधिकमुपरिष्टाद्वक्ष्यते । "तद्विवक्षया चे"ति । एतत् प्रयोजनं पूर्वतनस्याधिकरणस्योक्तम् ॥ २५ ॥

अधिकविवक्षयेति यदुक्तं तदधिकमाह—

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

(६) यथा स्वार्थसिद्धौ नापेक्ष्यन्ते आश्रमकर्माणि एवमुत्पत्तावपि नापेक्षेरन्निति शङ्क

---

(१) अश्वमेधे प्रथमेऽहनि मनुर्वैवस्वतो राजा. द्वितीये यमो वैवस्वतो राजा, तृतीये वरुण आदित्य इत्याद्याख्यानविशेषो विनियुज्यते, तद्बलादुपक्रमस्य सङ्कोचमाह नैषामिति ।

(२) ननूपक्रमे सर्वं शंसतीत्यभिधाय पुनः पारिप्लवमाचक्षीतेति उपसंहारगतो विशेषः सर्वशब्दानु-सारेणोपलक्षणार्थतया व्याख्यायतामत आहेतरथेति । (३) कथापरो ग्रन्थः पञ्चतन्त्रादिः ।

(४) अत्र भाष्यमत एव विद्यायाः पुरुषार्थहेतुत्वात्कर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति, तदयुक्तम्, नहि पुरुषार्थहेतुत्वं कर्मापेक्षाविरोधि आग्नेयादिष्वदर्शनादतः पुरुषार्थाधिकरणप्रयोजननिरूपक-त्वमस्याधिकरणस्य न युक्तमित्याशङ्क्य भाष्यं व्याचष्टे विद्याया इति ।

(५) अधिकविवक्षयेति भाष्यं व्याचष्टे एतच्चेति ।

(६) पूर्वत्र ब्रह्मविद्या न स्वफले कर्मापेक्षा प्रमात्वात्सम्मतवदित्युक्तं तर्हि सा स्वोत्पत्तावपि न तदपे-क्षेति पूर्वपक्षमाह यथेति ।

स्यात् । न च 'विविदिषन्ति यज्ञेने'त्यादिविरोधः, नह्येष विधिः, अपि तु वर्तमानापदेशः, स च स्तुत्याप्युपपद्यते । अपि च चतस्रः प्रतिपत्तयो ब्रह्मणि । प्रथमा तावद् उपनिषद्वाक्यश्रवणमात्राद्भवति, यां किलाचक्षते श्रवणमिति । द्वितीया मीमांसासहिता तस्मादेवोपनिषद्वाक्याद्यामाचक्षते मननमिति । तृतीया चिन्तासन्ततिमयी यामाचक्षते निदिध्यासनमिति । चतुर्थी साक्षात्कारवती वृत्तिरूपा (१)नान्तरीयकं हि तस्याः कैवल्यमिति । तत्राद्ये तावत् प्रतिपत्ती विदितपदतदर्थस्य विदितवाक्यगतिगोचरन्यायस्य च पुंस उपपद्येते एवेति न तत्र कर्मापेक्षा । ते एव च चिन्तामयीं तृतीयां प्रतिपत्तिं प्रसुवाते इति न तत्रापि कर्मापेक्षा । सा चादरनैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमाधत्त एव प्रतिपत्तिं चतुर्थीमिति न तत्राप्यस्ति कर्मापेक्षा । तन्नान्तरीयकं च कैवल्यमिति न तस्यापि कर्मापेक्षा । तदेवं प्रमाणतश्च प्रमेयत उत्पत्तौ च कार्ये च न ज्ञानस्य कर्मापेक्षेति प्राप्ते शङ्कायाम् ।

एवं प्राप्त उच्यते–(२)उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा 'विविदिषन्ति यज्ञेने'ति श्रुतेः । न चेदं वर्तमानापदेशत्वात् स्तुतिमात्रमपूर्वत्वादर्थस्य, यथा 'यस्य पर्णमयी जुहूर्भवती'ति पर्णमयताविधिरपूर्वत्वात् न त्वयं वर्तमानापदेशः, अनुवादानुपपत्तेः । तस्मादुत्पत्तौ विद्यया शमादिवत् कर्माण्यपेक्ष्यन्ते । (३)तत्राप्येवंविदिति विद्यास्वरूपसंयोगादन्तरङ्गाणि विद्योत्पादे शमादीनि बहिरङ्गानि कर्माणि विविदिषासंयोगात्, तथा ह्याश्रमविहितनित्यकर्मानुष्ठानाद्धर्मसमुत्पादस्ततः पाप्मा विलीयते, स हि तत्त्वतोऽनित्याशुचिदुःखात्मनि संसारे सति नित्यशुचिसुखादिलक्षणेन विभ्रमेण मलिनयति चित्तसत्त्वमधर्मनिबन्धनत्वाद् विभ्रमाणाम् । अतः पाप्मनः प्रक्षये प्रत्यक्षोपपत्तिद्वाराऽपावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य तात्त्विकीमनित्याशुचिदुःखरूपतामप्रत्यूहं विनिश्चिनोति, ततो ऽस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते, ततस्तज्जिहासाऽस्योपावर्तते, ततो हानोपायं पर्येषते, पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इति शास्त्रादाचार्यवचनाच्चोपश्रुत्य तज्जिज्ञासत इति विविदिषोपहारमुखेनात्मज्ञानोत्पत्तावस्ति कर्मणामुपयोगः । विविदिषुः खलु युक्त एकाग्रतया श्रवणमनने कर्तुमुत्सहते । ततोऽस्य तत्त्वमसीति वाक्यान्निर्विचिकित्सज्ञानमुत्पद्यते । (४)न च निर्विचिकित्सं तत्त्वमसीति वाक्यार्थमवधारयतः कर्मण्यधिकारो ऽस्ति, येन भावनायां वा भावनाकार्ये वा साक्षात्कारे कर्मणामुपयोगः । एतेन वृत्तिरूपसाक्षात्कारकार्येऽपवर्गे कर्मणामुपयोगो दूरनिरस्तो वेदितव्यः । तस्माद्यथैव शमदमादयो यावज्जीवमनुवर्तन्ते

---

( १ ) ननु पञ्चमी प्रतिपत्तिरप्यपेक्ष्यतामित्याशङ्क्य फलपर्यवसानान्नैवमित्याह नान्तरीयकं हीति ।

( २ ) यथाऽतिसुन्दरेपि मिष्टान्नादौ धातुदोषादरुचिरेवं ब्रह्मज्ञानेपि पापादरुचिर्भवेत्तत्र धातुसाम्यार्थमौषधविधिवद्ब्रह्मज्ञानरोचकयज्ञादिविधिरर्थवानिति सिद्धान्तयति उत्पत्ताविति ।

( ३ ) ननु कर्मणां ज्ञानोत्पत्त्यर्थत्वे यावज्ज्ञानोत्पत्ति कर्मानुष्ठातव्यं न ज्ञानार्थः संन्यास इत्यत आह तत्रापीत्यादिना । चित्तस्य प्रत्यक्प्रावण्यं दृष्ट्वा कर्मत्याग उपपन्न इत्यर्थः ।

( ४ ) एवं ज्ञानोत्पत्त्युपयोगं कर्मणां प्रदर्श्य फलेऽनुपयोगमाह नचेति । शब्दज्ञानफलं हि भावना तस्याश्च साक्षात्कारस्तस्य चापवर्गस्तिष्वप्येतेषु कर्मानपेक्षा, शब्दज्ञानेन च कर्माधिकारहेतोर्ब्राह्मणत्वादेर्बाधितत्वात्तदुत्तरकाले कर्मण एवाभावादिति भावः ।

एवमाश्रमकर्मापीत्यसमीक्षिताभिधानम्। विदुषस्तत्रानाधिकारादित्युक्तम्। (१)दृष्टार्थेषु तु कर्मसु प्रतिषिद्धवर्जमनधिकारेऽपि असक्तस्य स्वारसिकी प्रवृत्तिरुपपद्यत एव। न हि तत्रान्वयव्यतिरेकसमधिगमनीयफले ऽस्ति विध्यपेक्षा। अतश्च 'अन्यथा चेल्लौकिकं कर्म वैदिकं च तथास्तु त" इति प्रलापः। (२)शमदमादीनां तु विद्योत्पादायोपात्तानामुपरिष्टादवस्थास्वाभाव्यादनपेक्षितानामप्यनुवृत्तिः। उपपादितं चैतदस्माभिः प्रथमसूत्र इति नेह पुनः प्रत्याय्यते। तस्माद्विविदिषोत्पादद्वाराश्रमकर्मणां विद्योत्पत्तावुपयोगो न विद्याकार्य इति सिद्धम्। शेषमतिरोहितार्थम् ॥ २६ ॥ २७ ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥

## अबाधाच्च ॥ २९ ॥

## अपि च स्मर्यते ॥ ३० ॥

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

प्राणसंवादे सर्वेन्द्रियाणां श्रूयते-'एष किल विचारविषयः-सर्वाणि खलु वागादीन्यवजित्य प्राणो मुख्य उवाचैतानि किं मेऽन्नं भविष्यतीति। तानि होचुः 'यदिदं लोकेऽन्नमा च श्वभ्य आ च शकुनिभ्यः सर्वप्राणिनां यदन्नं तत्तवान्नमि'ति। (३)तदनेन संदर्भेण प्राणस्य सर्वमन्नमिति अनुचिन्तनं विधायाह श्रुतिः-'न ह वा एवंविधं किं च नानन्नं भवती'ति। सर्वं प्राणस्यान्नमित्येवं विदितम्, किं च नानन्नं भवतीति। तत्र संशयः किमेतत्सर्वान्नाभ्यनुज्ञानं शमादिवदेतद्विद्याङ्गतया(४) विधीयते, उत स्तुत्यर्थं संकीर्त्यत इति। तत्र यद्यपि भवतीति वर्तमानापदेशान्न विधिः प्रतीयते, तथापि यथा 'यस्य पर्णमयी जुहू'र्भवतीति वर्तमानापदेशादपि पलाशमयीत्वविधिप्रतिपत्तिः पञ्चमलकारापत्त्या, तथेहापि प्रवृत्तिविशेषकरतालाभे विधिप्रतिपत्तिः। स्तुतौ हि अर्थवादमात्रं न तथार्थवत्त्वं यथा विधौ। भक्ष्याभक्ष्यशास्त्रं च सामान्यतः प्रवृत्तमनेन विशेषशास्त्रेण बाध्यते। गम्यागम्यविवेकशास्त्रमिव सामान्यतः प्रवृत्तं वामदेव्यविद्याङ्ग(५)भूतसमस्तस्त्र्यपरिहारशास्त्रेण विशेषविषयेणेति प्राप्ते,

उच्यते—(६)अशक्तेः कल्पनीयत्वात् शास्त्रान्तरविरोधतः।

---

(१) नन्वेवं ज्ञानात्कर्मणो बाधे भिक्षाटनाद्यपि बाध्येत, तत्राह दृष्टार्थेष्विति। असक्तस्य-आसक्तिरहितस्य।

(२) ननु शमादेरपि ज्ञानोत्पत्तिहेतुत्वात्कर्मवन्न ज्ञानानन्तरमनुवृत्तिरिति ब्रह्मविदः कोपाद्यापत्तिरत आह शमेति। अहं ब्रह्मास्मीति पश्यतः स्वभावादेव शमादि स्यान्न यत्नसाध्यमित्यर्थः।

(३) इन्द्रियप्राणसंवादाख्यायिकया विवक्षितमर्थमाह तदनेनेति। प्राणस्य सर्वमन्नमिति निर्देशात्तथैवोपासनाविधिः कल्पनीय इत्यर्थः। (४) प्राणविद्याङ्गतयेत्यर्थः।

(५) उपमन्त्रयते स हिङ्कार इत्यादिना ग्राम्यव्यापारगतचेष्टासु हिङ्कारादिदृष्टिर्वामदेव्यविद्या।

(६) अशक्तेरिति। सर्वान्नस्य पुंसाऽत्तुमसामर्थ्यात्, भवतेर्नानन्नं भवतीत्यत्र श्रुतत्वेपि भावयतेः कल्पनीयत्वात्, शास्त्रान्तरविरोधतः कल्पनाया अनुपपत्तेश्च प्राणस्यान्नमिदं सर्वमिति चिन्तनस्तुतिरिति कारिकार्थः।

प्राणस्यान्नमिदं सर्वमिति चिन्तनसंस्तवः ॥

(१) न तावत् श्वौलेयकमर्यादमन्नं मनुष्यजातिना युगपत् पर्यायेण वा शक्यमत्तुम् । इभकरभकादीनामन्नस्य शमीकरीरकण्टकवटकाष्ठादेरेकस्यापि अशक्यादनत्वात् । (२)न चात्र लिङ्ग इव स्फुटतरा विधिप्रतिपत्तिरस्ति । न च कल्पनीयो विधिरपूर्वत्वाभावात् , स्तुत्यापि च तदुपपत्तेः । (३)न च सत्यां गतौ सामान्यतः प्रवृत्तस्य शास्त्रस्य विषयसङ्कोचो युक्तः, तस्मात्सर्वं प्राणस्यान्नमित्यनुचिन्तनविधानस्तुतिरिति साम्प्रतम् । (४)शक्यत्वे च प्रवृत्तिविशेषकरतोपयुज्यते नाशक्यविधानत्वे, प्राणात्यय इति चावधारणपरं प्राणात्यय एव सर्वान्नत्वम् । (५) तत्रोपाख्यानाच्च स्फुटतरविधिस्मृतेश्च सुरावर्जं विद्वांसमविद्वांसम्प्रतिविधानात् , न त्वन्यत्रेति । इभ्येन ( पृ० ८७९ पं० ४ ) हस्तिपकेन, सामिखादितानर्द्धभक्षितान् , स हि चाक्रायणो हस्तिपकोच्छिष्टान् कुल्माषान् भुञ्जानो हस्तिपकेनोक्तः— कुल्माषानिव मदुच्छिष्टमुदकं कस्मान्नानुपिबसीति । एवमुक्तस्तदुदकमुच्छिष्टदोषात् प्रत्याचचक्षे, कारणं चात्रोवाच—न वाऽजीविष्यं न जीविष्यामीतीमान् कुल्माषानखादम् । कामो म उदकपानमिति स्वातन्त्र्यं मे उदकपाने नदीकूपतडागप्रपादिषु यथाकामं प्राप्नोमीति नोच्छिष्टोदकाभावे प्राणात्यय इति तत्रोच्छिष्टभक्षणदोष इति, (६)मटचीहतेषु कुरुषु ग्लायञ्शनायया मुनिर्निरपत्रप इभ्येन सामिजग्धान् खादयामास ॥ २८-३१ ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

(७)नित्यानि ह्याश्रमकर्माणि यावज्जीवश्रुतेर्नित्येहितोपायतयाऽवश्यं कर्तव्यानि । विविदिषन्तीति च विद्यासंयोगात् । विद्याया ह्यावश्यम्भावनियमादनित्यता प्राप्नोति नित्यानित्यसंयोगश्चैकस्य न सम्भवति अवश्यानवश्यम्भावयोरेकत्र विरोधात् । न च वाक्यभेदाद्वास्तवो विरोधः शक्योऽपनेतुम् । तस्मादनध्यवसाय एवात्रेति प्राप्तम् । (८)एतेनैकस्य तूभयत्वे संयोगपृथक्त्वमित्याक्षिप्तम् ।

एवं प्राप्तेऽभिधीयते—

(९)सिद्धे हि स्याद्विरोधोऽयं न तु साध्ये कथं च न ।

---

( १ ) अशक्तिरिति कारिकांशं स्वयं विवृणोति न तावदिति ।

( २ ) कल्पनीयत्वादिति हेतुं व्याचष्टे न चात्रेति । लिङः सकाशाद्यथा विधिप्रतीतिस्तथात्र स्फुटतरा नास्ति पञ्चमलकारद्योतकाडादेरश्रवणादित्यर्थः । ( ३ ) शास्त्रान्तराविरोधात् इत्येतद् व्याचष्टे नचेति ।

( ४ ) यदुक्तं प्रवृत्तिविशेषकरत्वाद्विधिरिति, तत्राह शक्यत्वे चेति । ननु सूत्रं प्राणविदः सर्वान्नभक्षणं न वारयति, नहि प्राणात्यये सर्वान्नानुमतिमात्रेणान्यत्र तद्वारणं कर्तुं शक्यमत आह प्राणात्यय इति चेति ।

( ५ ) तद्दर्शनादिति सूत्रांशं व्याचष्टे तत्रेति । ननु सामान्यशास्त्रबाधको विधिरुपाख्याने न श्रूयतेऽत आह स्फुटतरेति ।

( ६ ) एवमाख्यानमनुवर्ण्य भाष्यस्थां श्रुतिं व्याचष्टे मटचीति । मटच्यो-रक्तवर्णाः क्षुद्रपक्षिविशेषाः ।

( ७ ) यथा शास्त्रान्तराविरोधात्सर्वान्नत्ववचनं स्तुतिरेवं यज्ञादीनां नित्यत्वश्रुतिविरोधाद्विद्यार्थत्ववचनं स्तुतिरिति सङ्गतिमभिप्रेत्य पूर्वपक्षमाह नित्यानीति ।

( ८ ) ननु वाचनिकविनियोगभेदात्खादिरादेर्वीर्यार्थत्वं क्रत्वर्थत्वं च प्रथमतन्त्रे सिद्धं तद्वदत्र किं न स्यादत आहैतेनेति । वास्तवविरोधेनेत्यर्थः ।

( ९ ) विधिं विना स्वभावत एव नित्यमनित्यं वा सिद्धं वस्तु अन्यथाकर्तुमशक्यम् , यथासिद्धरूपं

विध्यधीनात्मलाभेऽस्मिन् यथाविधि मता स्थितिः ॥

सिद्धं हि वस्तु विरुद्धधर्मयोगेन बाध्यते, न तु साध्यरूपं, यथा षोडशिन एकस्य ग्रहणाग्रहणे। ते हि विध्यधीनत्वाद् विकल्पेते एव, न पुनः सिद्धे विकल्पसम्भवः। तदिहैकमेवाग्निहोत्राख्यं कर्म यावज्जीवश्रुतेर्निमित्तेन युज्यमानं नित्येहितोपात्तदुरितप्रक्षयप्रयोजनमवश्यकर्तव्यं, विद्याङ्गतया च विद्यायाः कादाचित्कतया ऽनवश्यम्भावेऽपि 'काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते' इति न्यायादनित्याधिकारेण निविशमानमपि न नित्यमनित्ययति(१)। तेनापि तत्सिद्धेरिति संयोगपृथक्त्वान्न नित्यानित्यसंयोगविरोध एकस्य कार्यस्येति सिद्धम् ॥ ३२ ॥

## सहकारित्वेन च ॥ ३३ ॥

सहकारित्वं च कर्मणां न कार्ये विद्यायाः किन्तूत्पत्तौ। कोऽर्थो विद्यासहकारीणि कर्माणीति। अयमर्थः—सत्सु कर्मसु विद्यैव स्वकार्ये(२) व्याप्रियते, यथा सहैव दशभिः पुत्रैर्भारं वहति गर्दभीति सत्स्वेव दशपुत्रेषु सैव भारस्य वाहिकेति। "अविधिलक्षणत्वादि"ति। विहितं हि दर्शपौर्णमासाद्यङ्गैर्युज्यते न त्वविहितम्, ग्राहकग्रहणपूर्वकत्वादङ्गभावस्य (३)विधेश्च ग्राहकत्वात्, अविहिते च तदनुपपत्तेः। (४)चतसृणामपि च प्रतिपत्तीनां ब्रह्मणि विधानानुपपत्तेरित्युक्तं प्रथमसूत्रे। द्रष्टव्यो निदिध्यासितव्य इति च विधिसरूपं न विधिरित्यप्युक्तम्। उत्पत्तिं प्रति हेतुभावस्तु सत्त्वशुद्ध्या विविदिषोपजननद्वारेत्यधस्तादुपपादितम्। असाध्यत्वाच्च विद्याफलस्यापवर्गस्य स्वरूपावस्थानलक्षणो हि सः। न च स्वं रूपं ब्रह्मणः साध्यं नित्यत्वात्। शेषमतिरोहितार्थम् ॥ ३३ ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३५ ॥

यथा 'मासमग्निहोत्रं जुह्वतीति' प्रकरणान्तरात् कर्मभेद एवमिहापि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने'ति क्रतुप्रकरणमतिक्रम्य श्रवणात् प्रकरणान्तरात्तद्बुद्धिव्यवच्छेदे सति कर्मान्तरमिति प्राप्ते, उच्यते—सत्यपि प्रकरणान्तरे तदेव कर्म, श्रुतेः स्मृतेश्च संयो-

---

विधितः कर्तव्यमित्यध्यवसाय यथाविधि सम्पाद्यते तद्रूपं विधित एव ज्ञातव्यमिति विधिनाऽग्निहोत्रावश्यकत्वप्रतीतेर्न विरोध इत्याह सिद्धं हीति।

(१) यथा स्वर्गार्थोऽग्निहोत्रप्रयोगो नित्यप्रयोगं विकृत्य प्रयोगस्योभयत्राविशेषान्नित्यविधेः प्रयोजकत्वं बाधित्वा निविशते यथा वा 'यदि राजन्यं वैश्यं वे'ति नैमित्तिकः फलचमसप्रयोगो नित्यं सोमप्रयोगं विकृत्य निविशते काम्यनैमित्तिकाभ्यां नित्यकार्यसिद्धेः यादृशो नित्यप्रयोगो विहितस्तादृशस्यान्यत्र प्रत्यभिज्ञानान्न पुनः प्रयोगावृत्तिर्नापि अनित्यतापत्तिर्नित्यप्रयोगस्येत्यर्थः।

(२) अविद्यानिवृत्तिरूपे। वाहिकेति। पुत्राणां भारवहनकाले सत्त्वमात्रं न तु वाहकत्वमिति दृष्टान्तार्थः।

(३) ग्राहकं दर्शयति विधेश्चेति। अविहिते च ज्ञाने विध्यभावादेव कर्मणां विद्या प्रत्यङ्गत्वेन प्रयोगविधिग्रहणानुपपत्तेरित्यर्थः।

(४) तर्हि विद्याविधिः कुतो नेत्यत आह चतसृणामपीति। एका हि प्रतिपत्तिः साङ्गाध्ययनप्रभवाऽन्या शास्त्रश्रवणजाऽपरा ध्यानरूपा चतुर्थी साक्षात्कृतिः, तासां चतसृणामपि ब्रह्मविषयप्रतिपत्तीनां विधानानुपपत्तिरित्युक्तम्।

गभेदः परं यथाऽग्निहोत्रं जुहुयात्स्वर्गकामो यावज्जीवमग्निहोत्रं जुहुयादिति तदेवाग्निहोत्रमुभयसंयुक्तम् । (१)न हि प्रकरणान्तरं साक्षाद्भेदकम्, किन्तु अज्ञातज्ञापनस्वरसो विधिः प्रकरणैक्ये स्फुटतरप्रत्यभिज्ञाबलेन स्वरसं जह्यात् । प्रकरणान्तरेण तु विघटितप्रत्यभिज्ञानः स्वरसमजहत् कर्म भिनत्ति । इह तु सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुञ्जानो न जुहुयादित्यादिवदपूर्वमेषां रूपमुत्पादयितुमर्हति । (२)न च तत्रापि नैयमिकाग्निहोत्रे मासविधिर्नापूर्वाग्निहोत्रोत्पत्तिरिति साम्प्रतम् । होम एव साक्षात् विधिश्रुतेः, कालस्य चानुपादेयस्याविधेयत्वात् । (३)काले हि कर्म विधीयते न कर्मणि काल इत्युत्सर्गः । इह तु विविदिषायां विधिश्रुतिः न यज्ञादौ । तानि तु सिद्धान्येवानूद्यन्त इत्यैककर्म्यात्संयोगपृथक्त्वं सिद्धम् । स्मृतिरुक्ता(४) लिङ्गदर्शनमुक्तम् ॥ ३४ ॥ ३५ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

## अपि च स्मर्यते ॥ ३७ ॥

## विशेषानुग्रहश्च ॥ ३८ ॥

यदि विद्यासहकारीण्याश्रमकर्माणि हन्त भो! विधुरादीनामनाश्रमिणामनधिकारो विद्यायाम् अभावात्सहकारिणामाश्रमकर्मणामिति प्राप्ते, उच्यते—नात्यन्तमकर्माणो रैक्वविधुरवाचक्नवीप्रभृतयः, सन्ति हि तेषामनाश्रमित्वे जपोपवासदेवताराधनादीनि कर्माणि, कर्मणां च सहकारित्वमुक्तम्, आश्रमकर्मणामुपलक्षणत्वादिति न तेषामनधिकारो विद्यासु । "जन्मान्तरानुष्ठितैरपि चे"ति (पृ० ८८४ पं०७) । (५)न खलु विद्याकार्ये कर्मणामपेक्षा, अपि तु उत्पादे उत्पादयन्ति च विविदिषोपहारेण कर्माणि विद्याम् । उत्पन्नविविदिषाणां पुरुषधौरेयाणां विधुरसंवर्त्तप्रभृतीनां कृतं कर्मभिः । यद्यपि चेह जन्मनि कर्माण्यननुष्ठितानि तथापि विविदिषातिशयदर्शनात् प्राचि भवेऽनुष्ठितानि तैरिति गम्यत इति । (६)ननु यथाऽधीतवेद एव धर्मजिज्ञासायामधिक्रियते नानधीतवेद इह जन्मनि, तथेह जन्मन्याश्रमकर्मोत्पादितविविदिष एव विद्यायामधिकृतो नेतर इत्यनाश्रमिणामनधिकारो विधुरप्रभृतीनामित्यत आह "दृष्टार्था चे"ति । अविद्यानिवृत्तिर्विद्याया दृष्टोऽर्थः,स चान्वयव्यति-

---

(१) ननु यावज्जीवमग्निहोत्रं जुहुयात्, अग्निहोत्रं जुहुयात्स्वर्गकाम इति वाक्ययोरेकप्रकरणे श्रवणाद्युक्त एकस्य कर्मणः काम्यत्वेन नित्यत्वेन च विनियोगः, यज्ञादिवाक्यस्य तु भिन्नप्रकरणत्वान्न विनियोगान्तरहेतुत्वं किन्तु कर्मान्तरविधायकत्वमेवेति, नेत्याह नहीति । यत्र कर्मविधिस्तत्र स्वभावानपायादस्तु कर्मान्तरविधानं विविदिषावाक्ये तु विधिश्रवणाभावादनुवादमात्रत्वाद्विविदिषायां विध्ययोगादयं विधिर्यज्ञादींस्तस्यां विनियुञ्जानो न यज्ञादीन् भिनत्तीत्यर्थः ।

(२) यदि प्रदेशान्तरोत्पन्नकर्मानुवादेन विविदिषासम्बन्धविधिः तदा कौण्डपायिनामयनेऽपि नित्याग्निहोत्रानुवादेन मासविधिरापद्येत तत्राह नचेति ।

(३) ननु कालोऽपि विधीयते यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यादौ तत्राह काले इति । अमावास्याकाले कर्मैव विधीयत इत्यर्थः । सायं जुहोतीत्यादौ कालविधेरुत्सर्गत इत्युक्तम् । (४) भाष्ये ।

(५) आश्रमकर्मापेक्षा विद्या फलप्रदेति वादी प्रष्टव्यः किं फले अपेक्षा उतोत्पत्तौ, नाद्य इत्याह न खल्विति । (६) द्वितीयमाशंक्य परिहरति ननु यथेत्यादिना ।

रेकासिद्धो न नियममपेक्षत इत्यर्थः । प्रतिषेधो (१)विघातस्तस्याभाव इत्यर्थः ॥ ३६-३८ ॥

यद्यनाश्रमिणामप्यधिकारो विद्यायां कृतं तर्ह्याश्रमैरतिबहुलायासैरित्याशङ्क्याह—

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

स्वस्थेनाश्रमित्वमास्थेयम् , दैवात्पुनः पत्न्यादिवियोगतः सत्यनाश्रमित्वे भवेदधिकारो विद्यायामिति श्रुतिस्मृतिसन्दर्भेण विविदिषन्ति यज्ञेनेत्यादिना ज्यायस्त्वावगतेः श्रुतिलिङ्गात्स्मृतिलिङ्गाच्चावगम्यते । तेनेति पुण्यकृदिति श्रुतिलिङ्गमनाश्रमी न तिष्ठेतेत्यादि च स्मृतिलिङ्गम् ॥ ३९ ॥

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥**

आरोहवत् प्रत्यवरोहोऽपि कदाचिदूर्ध्वरेतसां स्यादिति मन्दाशङ्कानिवारणार्थमिदमधिकरणम् । (२)पूर्वधर्मेषु यागहोमादिषु, रागतो वा गृहस्थोऽहं पत्न्यादिपरिवृतः स्यामिति नियमं व्याचष्टे "तथा ह्यत्यन्तमात्मानमि"ति । ( पृ० ८८५ पं० ११ ) अतद्रूपतामवरोहतुल्यतामावम्, व्याचष्टे "तथा च ब्रह्मचर्यं समाप्ये"ति । अभावं शिष्टाचाराभावम्, विभजते—"न चैवमाचाराः शिष्टा" इति । अतिरोहितार्थमन्यत् ॥ ४० ॥

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

(३)प्रायश्चित्तं न पश्यामीति नैष्ठिकं प्रति प्रायश्चित्ताभावस्मरणात् नैर्ऋतगर्दभालम्भः प्रायश्चित्तमुपकुर्वाणकं प्रति । तस्माच्छिन्नशिरस इव पुंसः प्रतिक्रियाभाव इति पूर्वः पक्षः । सूत्रयोजना तु न चाधिकारिकमधिकारलक्षणे प्रथमकाण्डे निर्णीतम् 'अवकीर्णिपशुश्च (४)तद्वदाधानस्याप्राप्तकालत्वादि'त्यनेन यत्प्रायश्चित्तं तन्न नैष्ठिके भवितुमर्हति । कुतः । आरूढो नैष्ठिकमिति स्मृत्या पतनश्रुत्यनुमानात् तत्प्रायश्चित्तायोगात् ॥ ४१ ॥

**उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥**

श्रुतिस्तावत्स्वरसतोऽसङ्कुचद्वृत्तिर्ब्रह्मचारिमात्रस्य नैष्ठिकस्योपकुर्वाणस्य चाविशेषेण प्रायश्चित्तमुपदिशति(५) । 'साक्षात्प्रायश्चित्तं न पश्यामी'ति तु स्मृतिस्तस्यामपि च साक्षा·

---

( १ ) प्रतिबन्धः, तदभावादनुष्ठितसाधनस्य विद्योत्पत्तिरित्यर्थः । एतेन—प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोतीति भाष्यासङ्गतिरप्रतिषिद्धानामपि केषाञ्चिद्विद्योदयादर्शनादिति निरस्तम् ।

( २ ) यदा नाश्रमकर्माणि विद्यासाधनन्तदाऽऽरूढपतितस्य पूर्वाश्रमप्रस्थितस्य कर्म किंनु वक्तव्यमिति सङ्गतिरत्र बोध्या॥ पूर्वकर्मस्वनुष्ठानचिकीर्षयेत्यादिभाष्यं व्याचष्टे पूर्वधर्मेष्वित्यादिना ।

( ३ ) प्रत्यवरोहोऽशास्त्रीय इत्युक्तम् , तत्करणे प्रायश्चित्तमस्ति नवेति चिन्तनायाधिकरणमारभ्यते। तत्र ब्रह्मचारित्वान्नैष्ठिकस्यापि नैर्ऋतालम्भप्राप्तेः पूर्वपक्षाभावमाशंक्याह प्रायश्चित्तमिति ।

( ४ ) तद्वदिति । यदाहवनीये जुह्वतीति आहवनीयस्य सर्वहोमार्थत्वात् उपनयनहोमा आहवनीये कार्या इति पूर्वपक्षे जैमिनीये सिद्धान्तितम् आधानं 'जातपुत्र आदधीते'ति वचनात्कृतदारस्य विहितमुपनयनकाले च दाराभावादाधानमप्राप्तकालन्तदभावाच्चाहवनीयाभावस्तस्माल्लौकिकाग्नाविति, एवमवकीर्णिपशुरपीत्यर्थः ।

( ५ ) ननु प्रायश्चित्तसद्भावश्रुतिः सामान्यविषया, तदभावविषया स्मृतिस्तु नैष्ठिकविशेषविषया प्रबलेत्याशंक्याह प्रायश्चित्तमिति । श्रुते नैष्ठिके प्रायश्चित्तं बोधयितुं सामान्यमेकमेव व्यवधानं स्मृतेस्तु तास्मिस्त·

त्प्रायश्चित्तं न कर्तव्यमिति प्रायश्चित्तनिषेधो न गम्यते । न पश्यामीति तु दर्शनाभावेन सोऽनुमातव्यः । तथा च स्मृतिर्निषेधार्थेति अनुमाय तदर्था श्रुतिरनुमातव्या । श्रुतिस्तु सामान्यविषया विशेषमुपसर्पन्ती शीघ्रप्रवृत्तिरिति । स्मार्तं प्रायश्चित्तादर्शनं तु यत्नगौरवार्थम् । एतदुक्तं भवति—कृतनिर्णेजनैरपि एतैर्न सव्यवहर्तव्यमिति(१) । सूत्रार्थस्तूपपूर्वमपि पातकं नैष्ठिकस्यावकीर्णित्वं न महापातकमपिरेवकारार्थे अत एके प्रायश्चित्तभावमिच्छन्तीति । आचार्याणां विप्रतिपत्तौ विशेषाभावात्साम्यं भवेत् । शास्त्रस्था या वा प्रसिद्धिः सा प्राह्या शास्त्रमूलत्वात् । (२)उपपादितं च प्रायश्चित्तभावप्रसिद्धेः शास्त्रमूलत्वमिति । सुगममितरत् ॥४२॥

यदि नैष्ठिकादीनामस्ति प्रायश्चित्तं तरिकमेतैः कृतनिर्णेजनैः संव्यवहर्तव्यमुत नेति । (३)तत्र दोषकृतत्वादसंव्यवहारस्य प्रायश्चित्तेन तन्निबर्हणाद् अनिबर्हणे वा तत्करणवैयर्थ्यात्संव्यवहार्या एवेति प्राप्त, उच्यते—

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

(४)निषिद्धकर्मानुष्ठानजन्यमेनो लोकद्वयेऽप्यशुद्धिमापादयति द्वैधम्—कस्यचिदेनसो लोकद्वयेपि अशुद्धिरपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैः, कस्यचित्तु परलोकाशुद्धिमात्रमपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैरिहलोकाशुद्धिस्त्वेनसापादिता न शक्यापनेतुम्, (५)यथा स्त्रीबालादिघातिनाम् । यथाहुः—'विशुद्धानपि धर्मतो न सम्विवेदि'ति । तथा च प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्'—(६)कामतः कृतमपि, बालघ्नादिस्तु कृतनिर्णेजनोपि वचनादव्यवहार्य इह लोके जायत इति वचनं च बालघ्नांश्चेत्यादि । तस्मात्सर्वमवदातम् ॥४३॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

(७)प्रथमे काण्डे शेषलक्षणे तथाकाम इत्यत्रर्त्विक्सम्बन्धे कर्मणः सिद्धे किं कामो याज-

---

दभावं बोधयितुं निषेधकल्पना, ततस्तन्मूलश्रुतिकल्पनेति व्यवधानद्वयमतो दुर्बला स्मृतिः श्रुत्यनुसारेण नेये त्यर्थः । (१) अन्यैरूर्ध्वरेतोभिरवकीर्णिनि व्यवहाराभावे यत्नगौरवं कर्तव्यमिति स्मृत्यर्थ इति भावः ।

(२) ननु प्रायश्चित्ताभावप्रसिद्धिरपि स्मृतिमूलैव, नेत्याह उपपादितं चेति । विप्रकृष्टार्थायाः स्मृतेः सकाशात् सन्निकृष्टार्थश्रुतेर्बलीयस्त्वात् प्रायश्चित्तभावस्मृतेस्तन्मूलत्वमुपपादितम् इत्यर्थः ।

(३) सङ्गतिपूर्वकं पूर्वपक्षमाह तत्रेति ।

(४) नैष्ठिकादीनामाश्रमच्युतेर्बहुनिन्दादर्शनात्तज्जन्यपापापूर्वे प्रायश्चित्तेन निवृत्तेऽपि तज्जन्याऽत्र लोके शिष्टासंव्यवहार्यत्वरूपाशुद्धिरनुवर्तते एव निमित्तनिवृत्तावपि कार्यानुवृत्तेरुपलम्भादित्यभिप्रायेण सिद्धान्तयति निषिद्धेति ।

(५) संन्यासाश्रमच्युतेरैहलौकिकाशुद्ध्यापादकत्वे दृष्टान्तमाह यथेति । विशुद्धानपीति । बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संविशेत् । न व्यवहरेत् ।

(६) 'कामतोऽव्यवहार्यस्तु वचनादिह जायते' इति पूर्वं याज्ञवल्क्यवचनं द्रष्टव्यम् । तदेव व्याचष्टे कामतः कृतमिति ।

(७) शास्त्रपौनरुक्त्यमाशंक्याह प्रथमे इति । ज्योतिष्टोमप्रकरणे श्रुतानि 'यदि कामयेत' इत्यादीन्यङ्गफलानि ऋत्विग्गामीनि तथैवोक्तवाक्येन फलसम्बन्धादिति पूर्वपक्षे सिद्धान्तितम्—यथा ध्यहं नारनीयादित्यादि तपो याजमानमेवं कामोङ्गफलमपि यजमानगामि अर्थसंयोगात्, यजेतेत्यात्मनेपदेन प्रधानफलस्य यजमानसम्बन्धबोधनात् । अत्राङ्गफलस्य याजमानत्वनिर्देशोऽङ्गस्य तदाश्रितोपास्तेश्चार्थादृत्विक्कर्तृकत्वमवगमयतीति पुनरुक्तिशङ्का न कार्या ऋत्विक्कर्तृकत्वस्य सिद्धवत्कारादित्यर्थः ।

मान उतार्त्विज्य इति संशय्यार्त्विज्येऽपि कर्मणि याजमान एव कामो गणफलेष्विति निर्णीतमिह त्वेवंजातीयकानि(१) चाङ्गसम्बद्धानि उपासनानि किं याजमानान्येवोतार्त्विज्यानीति विचार्यत इति न पुनरुक्तम् । (२)तत्रोपासकानां फलश्रवणादनधिकारिणस्तदनुपपत्तेर्यजमानस्य च कर्मजनितफलोपभोगभाजोऽधिकारादृत्विजां च तदनुपपत्तेर्वचनाच्च राजाज्ञास्थानीयात्क्वचिदृत्विजां फलश्रुतेरसति वचने यजमानस्य फलवदुपासनं, तस्य फलश्रुतेः तं ह बको दाल्भ्यो विदाञ्चकारेत्यादेरुपासनस्य च सिद्धविषयतया न्यायापवादसामर्थ्याभावाद् याजमानमेवोपासनाकर्मेति(३) प्राप्त उच्यते ॥ ४४ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

## श्रुतेश्च ॥ ४६ ॥

उपाख्यानात्तावद् उपासनमौद्गात्रमवगम्यते । तद्बलवति सति बाधकेऽन्यथोपपादनीयम् । (४)न चर्त्विक्कर्तृक उपासने यजमानगामिता फलस्यासम्भविनी तेन हि स परिक्रीतस्तद्गामिने फलाय घटते । तस्मान्न व्यसनितामात्रेणोपाख्यानमन्यथयितुं युक्तमिति राद्धान्तः ॥ ४६—४७ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४७॥

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य निश्चयेन लब्ध्वा बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मण इति । (५)यत्र हि विधिविभक्तिः श्रूयते स विधेयो बाल्येन तिष्ठासेदित्यत्र च सा श्रूयते न श्रूयते तु मौने । तस्माद्यथाथ ब्रह्मण इत्येतदश्रूयमाणविधिकमविधेयमेवं मौनमपि । न चापूर्वत्वाद्विधेयं, तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येति पाण्डित्यविधानादेव मौनसिद्धेः पाण्डित्यमेव मौनमिति । अथ वा भिक्षुवचनोऽयं मुनिशब्दस्तत्र दर्शनात् 'गार्हस्थ्यमाचार्यकुलं मौनवानप्रस्थमि'त्यत्र, तस्यान्यतो विहितस्यायमनुवादः । तस्माद्बाल्यमेवात्र विधीयते । मौनं तु प्राप्तं प्रशंसार्थमनूद्यत इति युक्तम् ।

(६)भवेदेवं यदि पण्डितपर्यायो मुनिशब्दो भवेदपि तु ज्ञानमात्रं पाण्डित्यं, ज्ञानातिशयसम्पत्तिस्तु मौनम् तत्रैव तत्प्रसिद्धेः, आश्रमभेदे तु तत्प्रवृत्तिर्गार्हस्थ्यादिपदसन्निधानात्तस्मादपूर्वत्वान्मौनस्य बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते । (७)एवं

---

( १ ) सदःकरणादिकार्त्विज्यजातीयानीत्यर्थः ।

( २ ) ननु 'वर्षति ह्यस्मै पर्जन्य' इत्यादौ यजमानपदाभावात्कथं याजमानत्वाशङ्का अत आह तत्रेति ।

( ३ ) अन्यार्थदर्शनं हीदमन्यतः सिद्धं विषयीकुर्यात् इह त्वन्यतः सिद्धिर्नास्ति, तत उपासनफलभावो यजमानस्यैव कर्तृत्वमिति नयनं न बाधत इत्यभिप्रायः ।

( ४ ) 'तं ह बक' इत्युपाख्यानं वाक्यशेषगतत्वान्निर्णायकं प्रापकं नापेक्षते, यस्त्वन्यत्र न्यायबाध उक्तस्तत्परिहारपरत्वेन 'तस्मै हि परिक्रीयत' इति सूत्रावयवं व्याचष्टे नचेत्यादिना । तेन यजमानेन स ऋत्विक्परिक्रीतः सन् तद्गामिने फलाय घटते संपादयितुं युज्यत इत्यर्थः ।

( ५ ) ननु बाल्येनेति विधिश्रुतेर्मौनेपि विधिः स्यादत आह यत्रेति । ( ६ ) सिद्धान्तमाह भवेदेवमिति ।

( ७ ) मौनशब्दस्यानुवादत्वं परिहृत्य विध्यश्रवणादुक्तमविधेयत्वं परिहरति एवं चेति । तत्र तावत् अमुनिरिति साकाङ्क्षत्वान्निर्देशस्य तिष्ठासेत् इति विधिरनुषज्यते, मौनं निर्विद्येति सम्पाद्यत्वं च विधेयत्वं गमयतीत्यर्थः ।

च निर्वेदनीयत्वमपि विधान आपन्नं स्याद् इत्याह—"निर्वेदनीयत्वनिर्देशादि"ति ( पृ० ८९१ पं० १४ )। कस्येदं मौनं विधीयते विद्यासहकारितयेत्यत आह—"तद्वतो विद्यावतः संन्यासिनो" भिक्षोः। पृच्छति—"कथमि"ति । विद्यावत्ता प्रतीयते न संन्यासितेत्यर्थः। उत्तरं तदधिकारात्–भिक्षोस्तदधिकारात्, तद्दर्शयति—"आत्मानं विदित्वे"ति । सूत्रावयवं योजयितुं शङ्कयते—"नन्वि"ति । (पृ० ८९२ पं० १) परिहरति "अत आह पक्षेणेति"। विद्यावानिति न (१)विद्यातिशयो विवक्षितोऽपि तु विद्योदयाद्याभ्यासे प्रवृत्तो न पुनरुत्पन्नविद्यातिशयस्तया चास्य पक्षे कदा चिद्भेददर्शनात्संभव इत्यर्थः। विध्यादिर्विधिमुख्यः प्रधानमिति यावत् । अत एव समिदादिर्विध्यन्तः स हि विधिः (२)प्रधानविधेः पश्चादिति । तत्राश्रूयमाणविधित्वे ऽपूर्वत्वाद्विधिराश्रयेय इत्यर्थः ॥ ४७ ॥

ननु यद्ययमाश्रमो बाल्यप्रधानः कस्मात्पुनर्गार्हस्थ्येनोपसंहरतीति(३) चोदयति—"एवं बाल्यादिविशिष्ट"इति । अत उत्तरं पठति—

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

छान्दोग्ये बहुलायाससाध्यकर्मबहुलत्वाद् गार्हस्थ्यस्य चाश्रमान्तरधर्माणां च केषांचिदहिंसादीनां समवायात् तेनोपसंहारो न पुनस्तेन समापनादित्यर्थः ॥ ४८ ॥

एवं तदाश्रमद्वयोपन्यासेन क्वचित्कदाचिदितरोभावशङ्का मन्दबुद्धेः स्यादिति तदपाकरणार्थं सूत्रम्—

## मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

(४)वृत्तिर्वानप्रस्थानामनेकविधैवं ब्रह्मचारिणोपीति वृत्तिभेदोऽनुष्ठातारो वा पुरुषा भिद्यन्ते । तस्माद्वित्वेऽपि बहुवचनमविरुद्धम् ॥ ४९ ॥

## अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

बाल्येनेति (५)यावद्बालचरितश्रुतेः कामचारवादभक्षताश्चात्यन्तबाल्येन प्रसिद्धेः शौचादिनियमविधायिनश्च सामान्यशास्त्रस्यानेन विशेषशास्त्रेण बाधनात्सकलबालचरितविधानमिति प्राप्तेऽभिधीयते—

विद्याङ्गत्वेन बाल्यविधानात् समस्तबालचर्यायां च प्रधानविरोधप्रसङ्गाद्यत्तदनुगुणमप्रौढेन्द्रियत्वादि भावशुद्धिरूपं (६)तदेव विधीयते । एवं च शास्त्रान्तराबाधेनाप्युपपत्तौ न

---

( १ ) साक्षात्कारवतो विद्यातिशयस्य सिद्धत्वाद्विधिवैयर्थ्यमाशङ्क्याह विद्यातिशय इति ।

( २ ) समिदादेर्विध्यन्तरत्वे हेतुमाह प्रधानविधेरिति । अतोऽङ्गस्य विध्यन्तप्रसिद्धिः प्रधानविधेर्विध्यादित्वं गमयतीत्यर्थः ।

( ३ ) उपसंहरतीति । तेनोपसंहारे हि न ततः पर आश्रम इति द्योतितं भवति, तच्चानुपपन्नं बाल्यप्रधान आश्रमान्तरे सतीत्यर्थः ।

( ४ ) वैखानस–औदुम्बर–बालखिल्य–फेनपेति चतुर्विधा वानप्रस्थवृत्तिर्बोध्या ।

( ५ ) ननु भावशुद्धिरपि बालचरितं भवति तन्मात्रमेव गृह्यतामत आह यावदिति । यावदित्ति बालचरितं तावतः सर्वस्य बाल्येनेतिश्रुतेरवगमान्न सङ्कोचो युक्त इत्यर्थः।

( ६ ) तदेवेति । यद्यपि केवलायां भावशुद्धौ बाल्यशब्दो न प्रसिद्धः तथापि कामचारादिमति बाले

शास्त्रान्तरबाधनमन्याय्यं भविष्यतीति ॥ ५० ॥

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

सङ्गतिमाह—"सर्वापेक्षा चे"ति ( पृ०८९४पं०१८ )। किं श्रवणादिभिरैहिक वा जन्मनि विद्या साध्यते उतानियम इह वामुत्र वेति । (१)यद्यपि कर्माणि यज्ञादीन्यनियतफलानि तेषां च विद्योत्पादसाधनत्वेन विद्योत्पादस्यानियमः प्रतिभाति तथा च गर्भस्थस्य वामदेवस्यात्मप्रतिबोधश्रवणात्, 'अनेकजन्मसंसिद्धस्ततो याति परां गतिमि'ति च स्मरणाद् आमुष्मिकत्वमप्यवगम्यते । तथापि यज्ञादीनां प्रमेयाणामप्रमाणत्वाच्छ्रवणादेश्च प्रमाणत्वात्तेषामेव साक्षाद्विद्यासाधनत्वम् । यज्ञादीनां सत्त्वशुद्ध्याधानेन वा विद्योत्पादकश्रवणादिलक्षणप्रमाणप्रवृत्तिविघ्नोपशमेन(२)वा विद्यासाधनत्वम् । श्रवणादीनां त्वनपेक्षाणामेव विद्योत्पादकत्वम् । न च प्रमाणेषु प्रवर्तमानाः प्रमातार ऐहिकमपि चिरभाविनं प्रमोत्पादं कामयन्ते किन्तु तादात्विकमेव प्रागेव तु पारलौकिकम् । नहि कुम्भदिदृक्षुश्चक्षुषी समुन्मीलयति कालान्तरीयाय कुम्भदर्शनाय किन्तु तादात्विकाय । तस्मादैहिक एव विद्योत्पादो नानियतकालः । श्रुतिस्मृती च पारलौकिकं विद्योत्पादं स्तुत्या ब्रूतः । इत्थंभूतानि नाम श्रवणादीन्यावश्यकफलानि यत्कालान्तरेऽपि विद्यामुत्पादयन्तीति ।

एवं प्राप्त उच्यते·(३) यत एवात्र विद्योत्पादे श्रवणादिभिः कर्तव्ये यज्ञादीनां सत्त्वशुद्धिद्वारेण वा विघ्नोपशमद्वारा वोपयोगोऽत एव तेषां यज्ञादीनां कर्मान्तरप्रतिबन्धाप्रतिबन्धाभ्यामनियतफलत्वेन तदपेक्षाणां श्रवणादीनामप्यनियतफलत्वं न्याय्यमनपहतविघ्नानां श्रवणादीनामनुत्पादकत्वादविशुद्धसत्त्वाद्वा पुंसः प्रत्यनुत्पादकत्वात् । तथा च तेषां यज्ञाद्यपेक्षाणां तेषां चानियतफलत्वेन श्रवणादीनामप्यनियतफलत्वं युक्तमेवं श्रुतिस्मृतिप्रतिबन्धो न स्तुतिमात्रत्वेन व्याख्येयो भविष्यति । पुरुषाश्च विद्यार्थिनः साधनसामर्थ्यानुसारेण तदनुरूपमेव कामयिष्यन्ते, तदिदमुक्तमभिसन्धेर्निरङ्कुशत्वादिति ॥ ५१ ॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥५२॥

यज्ञाद्युपकृतविद्यासाधनश्रवणादिवीर्यविशेषात्किल तत्फले विद्यायामैहिकामुष्मिकत्वलक्षण उत्कर्षो दर्शितः । तथा च यथा साधनोत्कर्षनिकर्षाभ्यां तत्फलस्य विद्याया उत्कर्षनिकर्षावेवं विद्याफलस्यापि मुक्तेरुत्कर्षनिकर्षौ संभाव्येते । न च मुक्तावैहिकामुष्मिकत्वलक्षणो विशेष उपपद्यते ब्रह्मोपासनापरिपाकलब्धजन्मनि विद्यायां जीवतो मुक्तेरवश्यम्भाव·

---

भावशुद्धिरस्ति, तावन्मात्रपरतया बाल्यशब्दः सङ्कोच्यत इत्यर्थः । शेषिविध्यनुग्रहरूपं सङ्कोचहेतुं प्रदर्शयितुं तद्धेतुमाह एवं चेति । ( १ ) संशयमुक्त्वा पूर्वपक्षाभावमाशङ्कते यद्यपीति ।

( २ ) श्रवणादिप्रवृत्तिप्रत्यूहोपशमेन । यज्ञादीनां श्रवणादिघटकत्वात् घटितेषु श्रवणादिषु विद्ययाऽवश्यं भवितव्यमित्यैहिकत्वनियम इति भावः ।

( ३ ) यथा श्रवणादिस्वरूपनिष्पत्त्यर्थं यथा सत्त्वशुद्धिविघ्ननिरास आवश्यकस्तथा श्रवणादिभिर्विद्योत्पत्तयेऽपि तत्र च यज्ञादिभिः सत्त्वशुद्ध्याद्युत्पत्तावपि विरोधिकर्मान्तरैः प्रारब्धफलैः प्रतिबन्धाप्रतिबन्धसम्भावना 'श्रवणायापि बहुभिर्यो न लभ्य' इत्यादिश्रुतेः, अतोऽनियतफलयज्ञादिसापेक्षत्वाच्छ्रवणादेरविधेयस्याप्यनियतफलत्वमित्यभिप्रायेण सिद्धान्तयति यत एवेति ।

नियमात् (१) सत्यप्यारब्धविपाककर्मप्रक्षये । तस्मान्मुक्तावेव (२)रूपतो निकर्षोत्कर्षौ स्याताम् । अपि च सगुणानां विद्यानामुत्कर्षनिकर्षाभ्यां तत्फलानामुत्कर्षनिकर्षौ दृष्टाविति मुक्तेरपि विद्याफलत्वाद्रूपतश्चोत्कर्षनिकर्षौ स्यातामिति प्राप्त उच्यते–

मुक्तेस्तत्रतत्रैकरूप्यश्रुतेरुपपत्तेश्च । (३) साध्यं हि साधनविशेषाद्विशेषवद् भवति । न च मुक्तिर्ब्रह्मणो नित्यस्वरूपावस्थानलक्षणा नित्या सती साध्या भवितुमर्हति । (४) न च सवासननिःशेषक्लेशकर्माशयप्रक्षयो विद्याजन्मविशेषवान् येन तद्विशेषान्मोक्षो विशेषवान् भवेत् । न च सावशेषः क्लेशादिप्रक्षयो मोक्षाय कल्पते । न च चिराचिरोत्पादानुत्पादाव-न्तरेण विद्यायामपि रूपतो भेदः कश्चिदुपलक्ष्यते तस्या अप्येकरूपत्वेन श्रुतेः । (५) सगु-णायास्तु विद्यायास्तत्तद्गुणावापोद्वापाभ्यां तत्कार्यस्य फलस्योत्कर्षनिकर्षौ युज्येते । (६)न चात्र विद्यात्वं सामान्यतो दृष्टं भवति, आगमतत्प्रभवयुक्तिबाधितत्वेन कालात्ययापदिष्ट-त्वात् । तस्मात्तस्या मुक्त्यवस्थाया ऐकरूप्यावधृतेर्मुक्तिलक्षणस्य फलस्याविशेषो युक्त इति ५२

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां

तृतीयाध्यायस्य चतुर्थः पादः ॥

अध्यायश्च समाप्तः ॥

नाभ्यर्थ्या इह सन्तः स्वयं प्रवृत्ता न चेतरे(७) शक्याः ।
मत्सरपित्तनिबन्धनमचिकित्स्यमरोचकं येषाम् ॥
(८)शङ्के संप्रति निर्विशङ्कमधुना स्वाराज्यसौख्यं बहु-
धेन्द्रः सान्द्रतपःस्थितेषु कथमप्युद्वेगमभ्येष्यति ।
यद्वाचस्पतिमिश्रनिर्मितमितव्याख्यानमात्रस्फुट-
द्वेदान्तार्थविवेकबाधितभवाः स्वर्गेऽप्यमी निस्पृहाः ॥

## आवृत्तिरसकृदुपदेशात् ॥ १ ॥

---

(१) ननु विद्यावतोऽपि शरीरधारणात्कथं मुक्तिरत आह सत्यपीति ।

(२) रूपतः–स्वरूपतः । स्यातामिति । तथाच सातिशयत्वात्कर्मसाध्यत्वमिति पुरुषार्थोऽत इत्यस्या-क्षेप इत्यर्थः । तथाच मोक्षः सातिशयः विलम्बिताविलम्बितसाधनसाध्यत्वात्कर्मफलवदित्यनुमानप्रयोगो द्रष्टव्यः । (३) उपपत्तिमाह साध्यं हीति ।

(४) ननु मा भूत्स्वरूपावस्थानरूपायां मुक्तौ सातिशयत्वमनर्थनिवृत्तिलक्षणायां तु स्यादित्यत आह नचेति । विरोधिकार्योदय एव पूर्वप्रध्वंस इति मतमाश्रित्य क्लेशादिक्षयो विद्याजन्मेति सामानाधिकरण्यम् । विद्याजन्मरूपोऽविद्याध्वंस एकरूपः । निवर्त्यविशेषोपाधिकस्तु तस्यापि विशेष इत्यर्थः । तर्हि स एवास्तु तत्राह नचेति ।

(५) द्वितीयानुमाने सगुणविषयत्वरूपमुपाधिमाह सगुणाया इति । तत्कार्यस्य–विद्याकार्यस्य ।

(६) बाधितत्वमप्याह नचात्रेति ।

(७) मत्सरिणः, श्रवणाय प्रवर्तयितुं न शक्याः, तत्र हेतुर्मत्सरेति ।

(८) सनातनाख्यछात्रकृतां वाचस्पतिमिश्रस्तुतिं तत्प्रीतये स्वीयप्रबन्धे निबध्नाति शङ्के इति । यस्मा-द्वाचस्पतिकृतव्याख्यानाविज्ञातवेदान्तार्थज्ञानतत्त्वसाक्षात्कारवत्त्वे दूरीकृतस्वर्गादिसंसाराशास्सर्वेऽपि लोका अतो न तदाऽऽक्रमजभयमिन्द्रस्येति श्लोकाभिप्रायः ।

साधनानुष्ठानपूर्वकत्वात्फलसिद्धेर्विषयक्रमेण(१) विषयिणोरपि तद्विचारयोः क्रममाह—"तृतीयेऽध्याय" इति (पृ०८९९पं०७)। मुक्तिलक्षणस्य(२) फलस्यात्यन्तपरोक्षत्वात् तदर्थानि दर्शनश्रवणमनननिदिध्यासनानि चोद्यमानान्यदृष्टार्थानीति यावद्विधानमनुष्ठेयानि न तु ततोऽधिकमावर्तनीयानि प्रमाणाभावात्। (३)यत्र पुनः सकृदुपदेशादुपासीतेत्यादिषु तत्र सकृदेव प्रयोगः प्रयाजादिवदिति प्राप्ते—

उच्यते-(४)यद्यपि मुक्तिरदृष्टचरी तथापि सवासनाविद्योच्छेदेनात्मनः स्वरूपावस्थानलक्षणायास्तस्याः श्रुतिसिद्धत्वाद् अविद्यायाश्च विद्योत्पादविरोधितया विद्योत्पादेन समुच्छेदस्याहिविभ्रमस्येव रज्जुतत्त्वसाक्षात्कारेण समुच्छेदस्योपपत्तिसिद्धत्वाद् (५)अन्वयव्यतिरेकाभ्यां च श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कारफलत्वेन लोकसिद्धत्वात्सकलदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्यपरोक्षरूपानुभवस्यापि श्रवणाद्यभ्याससाधनत्वेनानुमाना(६)त्तदर्थानि श्रवणादीनि दृष्टार्थानि भवन्ति। न च दृष्टार्थत्वे सत्यदृष्टार्थत्वं युक्तम्। नचैतान्यनावृत्तानि सत्कारदीर्घकालनैरन्तर्येण साक्षात्कारवते तादृशानुभवाय कल्पन्ते। न चात्रासाक्षात्कारवद्विज्ञानं साक्षात्कारवतीमविद्यामुच्छेत्तुमर्हति। न खलु पित्तोपहतेन्द्रियस्य गुडे तिक्ततासाक्षात्कारो न्तरेण माधुर्यसाक्षात्कारं सहस्रेणाप्युपपत्तिभिर्निवर्तितुमर्हति। अतद्वतो नरान्तरवचांसि वोपपत्तिसहस्राणि वा परामृशतोऽपि थूत्कृत्य गुडस्यागात्। तदेवं दृष्टार्थत्वाद्ध्यानोपासनयोश्चान्तर्णीतावृत्तिकत्वेन लोकतः प्रतीतेरावृत्तिरेवेति सिद्धम् ॥१॥

## लिङ्गाच्च ॥ २ ॥

अधिकरणार्थमुक्त्वा निरुपाधिब्रह्मविषयत्वमस्याक्षिपति—"अत्राह भवतु नामे"ति (पृ० ९०१ पं० ११)। (७)साध्ये ह्यनुभवे प्रत्ययावृत्तिरर्थवती नासाध्ये, नहि ब्रह्मानुभवो ब्रह्मसाक्षात्कारो नित्यशुद्धस्वभावाद् ब्रह्मणोऽतिरिच्यते, तथा च नित्यस्य ब्रह्मणः स्वभावो नित्य एवेति कृतमत्र प्रत्ययावृत्त्या। तदिदमुक्त"मात्मभूत"मिति। आक्षेप्तारं प्रति शङ्कते—"सकृच्छ्रुता"विति। अयमभिसन्धिः-(८)न च ब्रह्मात्मभूतस्तत्साक्षात्कारोऽविद्यामुच्छिनत्ति तया सहानुवृत्तेरविरोधात्, विरोधे वा तस्य नित्यत्वान्नाविद्योदीयेत कुत

---

(१) अध्यायविषययोः साधनफलयोः क्रमेण।

(२) ननु ज्ञानार्थकत्वाद्दृष्टफलेषु गान्धर्वशास्त्रश्रवणादिवदविधेयेषु श्रवणादिषु यावत्फलमावृत्तिसिद्धौ कथं सकृत्प्रयोगशङ्का तत्राह मुक्तिलक्षणस्येति। पूर्वपक्षी मुक्त्यर्थत्वात् श्रवणादीनामदृष्टार्थत्वं विधयत्वं च मन्यते विधिषु चावृत्त्यश्रवणात्सकृत्प्रयोगशङ्केत्यर्थः।

(३) श्रवणादिवदहंग्रहोपास्तिषु सकृत्प्रयोगमाह यत्रेति।

(४) अत्र किं विद्याया मुक्तिसाधनत्वमदृष्टमित्युच्यते, श्रवणादेर्वा विद्यासाधनत्वम्। नाद्य इत्याह यद्यपीति सिद्धान्ती। विद्योत्पादविरोधितयेति समुच्छेदे हेतुः। अनेनाविद्या विद्यानिवर्त्या अनिर्वाच्यत्वादहिविभ्रमवदित्यनुमानं सूचितम्। (५) न द्वितीय इत्याहान्वयव्यतिरेकाभ्यां चेति।

(६) ब्रह्मसाक्षात्कारः श्रवणाद्यभ्याससाध्यः शास्त्रार्थसाक्षात्कारत्वात् षड्जादिसाक्षात्कारवदित्यनुमानात्।

(७) अहङ्ग्रहोपास्तिषु यस्य स्याद्द्धेति वचनादुपासनसाध्य उपास्यसाक्षात्कारः प्रतीयते तत्तत्रावृत्तिरर्थवती न निर्गुणब्रह्मसाक्षात्कार इत्याह साध्ये इति।

(८) ननु स्वरूपप्रकाशेन ब्रह्मप्रथनासिद्धौ किमावृत्त्या अत आह नचेति।

एव तु तेन सहानुवर्तेत, तस्मात्तन्निवृत्तये आगन्तुकस्तत्साक्षात्कार एषितव्यः, तथा च प्रत्ययानुवृत्तिरर्थवती । आक्षेप्ता सर्वपूर्वोक्ताक्षेपेण(१) प्रत्यवतिष्ठते—"नावृत्तावपी"ति (पृ० ९०२ पं० १)। न खलु ज्योतिष्टोमवाक्यार्थप्रत्ययः शतशोऽप्यावर्तमानः साक्षात्कारप्रमाणं स्वविषये जनयति, उत्पन्नस्यापि तादृशो दृष्टव्यभिचारत्वेन प्रातिभत्वात् । ब्रह्मात्मत्वप्रतीतिं–ब्रह्मात्मसाक्षात्कारम् । पुनः शङ्कते—"न केवलं वाक्य"मिति । आक्षेप्ता दूषयति—"तथाप्यावृत्त्यानर्थक्य"मिति । वाक्यं चेद्युक्त्यपेक्षं साक्षात्काराय प्रभवति, तथासति कृतमावृत्त्या, सकृत्प्रवृत्तस्यैव तस्य सोपपत्तिकस्य यावत्कर्तव्यकरणादिति । पुनः शङ्कते—"अथापि स्यादि"ति । न युक्तिवाक्ये साक्षात्कारफले प्रत्यक्षस्यैव प्रमाणस्य तत्फलत्वात् । ते तु परोक्षार्थावगाहिनी सामान्यमात्रमभिनिविशेते न तु विशेषं साक्षात्कुरुत इति तद्विशेषसाक्षात्कारायावृत्तिरुपास्यते । सा हि सत्कारदीर्घकालनैरन्तर्यसेविता सती दृढभूमिर्विशेषसाक्षात्काराय प्रभवति कामिनीभावनेव स्त्रैणस्य पुंस इति । आक्षेप्ताह—"नासकृदपी"ति । (२)स खल्वयं साक्षात्कारः शास्त्रयुक्तियोनिर्वा स्याद्भावनामात्रयोनिर्वा ? न तावत्परोक्षाभासविज्ञानफले शास्त्रयुक्ती साक्षात्कारलक्षणं प्रत्यक्षप्रमाणफलं प्रसोतुमर्हतः, न खलु कुटजबीजाद्वटाङ्कुरो जायते, न च भावनाप्रकर्षपर्यन्तजमपरोक्षावभासमपि ज्ञानं प्रमाणं व्यभिचारादित्युक्तम् । आक्षेप्ता स्वपक्षमुपसंहरति "तस्माद्यदी"ति । आक्षेप्ता (३)आक्षेपान्तरमाह—"न च सकृत् प्रवृत्ते" इति । कश्चित् खलु शुद्धसत्त्वे गर्भस्थ इव वामदेवः श्रुत्वा च मत्वा च क्षणमवधाय जीवात्मनो ब्रह्मात्मतामनुभवति, ततो.. ऽप्यावृत्तिरनर्थिकेति । आतश्चा(४)वृत्तिरनर्थिका यन्निरंशस्य ग्रहणमग्रहणं वा न तु व्यक्ताव्यक्तत्वे सामान्यविशेषवत्पद्मरागादिवदित्यत आह—"अपि चानेकांश"इति । समाधत्ते—"अत्रोच्यते भवेदावृत्त्यानर्थक्यमि"ति (पृ० ९०३ पं० १)। अयमभिसन्धिः । (५)सत्यं न ब्रह्मसाक्षात्कारः साक्षादागमयुक्तिफलमपि तु युक्त्यागमार्थज्ञानाहितसंस्कारसचिवं चित्तमेव ब्रह्मणि साक्षात्कारवतीं बुद्धिवृत्तिं समाधत्ते । सा च नानुमानितवह्निसाक्षात्कारवत्प्रातिभत्वेनाप्रमाणं तदानीं वह्निस्वलक्षणस्य परोक्षत्वात्सदातनं तु ब्रह्मस्वरूपस्योपाधिरूषितस्य जीवस्यापरोक्षत्वम् , (६)नहि शुद्धबुद्धत्वादयो वस्तुतस्ततो ऽतिरिच्यन्ते, जीव एव

(१) वृत्तिरूपसाक्षात्कारं प्रमानुपेत्य तस्यामप्यावृत्त्याक्षेपेण ।

(२) यद्यप्यभ्यासमिति शास्त्रयुक्ती साक्षात्कारं कुरुत इति शङ्कितम् , तथाप्यन्यतरोपकृतावन्यतरस्करणमिति वक्तव्यं, करणप्रयुक्तं च प्रतीतेरापरोक्ष्यं यथा प्रत्यभिज्ञायाम् , तत्र किं शास्त्रयुक्त्योः करणत्वं भावनाया वेति विकल्प्य दूषयति स खल्वयमित्यादिना ।

(३) आवृत्तानावृत्तशास्त्रयुक्त्योः परोक्षज्ञानजनकत्वान्न साक्षात्कारहेतुत्वमित्युक्तमधुनाऽपरोक्षज्ञानजनकत्वमभ्युपेत्यापि अभ्यासवैफल्यमाह पूर्वपक्षीत्याहाक्षेपान्तरमिति ।　　(४) अवश्यं च ।

(५) अपरोक्षप्रमोत्पत्त्यर्थ आवृत्त्याक्षेपः किमावृत्त्युपकार्यप्रमाणाभावादुत साक्षात्कारयोग्यप्रमेयाभावात् । नाद्यः, सोपाधिकात्मन्यहंप्रत्ययरूपसाक्षात्कारकरणतया क्लृप्तशक्तेर्मनस एव शास्त्रयुक्त्यभ्यासवासितस्य ब्रह्मसाक्षात्कारकरणत्वसम्भवादित्याह सत्यमित्यादिना ।

(६) ननु जीवस्वरूपस्य सदातनमापरोक्ष्यं भवतु तथाप्यात्म्यस्य तु ब्रह्मस्वभावस्य नित्यशुद्धत्वादेः परोक्षत्वात्तद्भावनाभिः साक्षात्कृतिर्भ्रमः स्यादत आह नहीति ।

तु तत्तदुपाधिरहितः शुद्धादिस्वभावो ब्रह्मेति गम्यते । (१)न च तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिवेन श्रोत्रेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षेणेक्षते एवं वेदान्तार्थज्ञानाहितसंस्कारो जीवस्य ब्रह्मस्वभावमन्तःकरणेनेति । **"यस्तत्त्वमसीति सकृदुक्तमेवे"ति** । श्रुत्वा मत्वा क्षणमवधाय प्राग्भवीयाभ्यासजातसंस्कारादित्यर्थः । **"यस्तु न शक्नोती"ति** । प्राग्भवीयब्रह्माभ्यासरहित इत्यर्थः । **"नहि दृष्टेऽनुपपन्नं नामे"ति** । यत्र परोक्षप्रतिभासिनि वाक्यार्थेऽपि व्यक्ताव्यक्तत्वतारतम्यम् , तत्र मननोत्तरकालमाध्यासनाभ्यासनिकर्षप्रकर्षक्रमजन्मनि प्रत्ययप्रवाहे साक्षात्कारावधौ व्यक्तितारतम्यं प्रति कैव कथेति भावः । तदेवं वाक्यमात्रस्या(२)र्थेपि न द्रागित्येव प्रत्यय इत्युक्तम् , तत्त्वमसीति तु वाक्यम(३)त्यन्तदुर्ग्रहपदार्थं न पदार्थज्ञानपूर्वके स्वार्थे ज्ञाने द्रागित्येव प्रवर्तते, किन्तु विलम्बिततमपदार्थज्ञानमतिविलम्बेनेत्याह—**"अपि च तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्ये"ति** । स्यादेतत् , पदार्थसंसर्गात्मा वाक्यार्थः पदार्थज्ञानक्रमेण तदधीननिरूपणीयतया क्रमवत्प्रतीतिर्युज्यते, ब्रह्म तु निरंशत्वेनासंसृष्टनानात्वपदार्थकमिति कस्यानुक्रमेण क्रमवती प्रतीतिरिति सकृदेव तद्गृह्येत न वा गृह्येतेत्युक्तमित्यत आह—**"यद्यपि च प्रतिपत्तव्य आत्मा निरंश"**इति ( पृ० ९०४ पं० १ )। निरंशोऽप्ययमपरोक्षोप्यात्मा तत्तद्देहाद्यारोपव्युदासाभ्यामंशवानिवात्यन्तपरोक्ष इव । ततश्च वाक्यार्थतया क्रमवत्प्रत्यय उपपद्यते । तत्किमियमेव वाक्यजनिता प्रतीतिरात्मनि तथा च न साक्षात्प्रतीतिरात्मन्यनागतफलत्वादस्या इत्यत आह—**"तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः साक्षात्कारवत्याः"**। एतदुक्तं भवति—वाक्यार्थश्रवणमननोत्तरकाला विशेषणत्रयवती(४) भावना ब्रह्मसाक्षात्काराय कल्पत इति वाक्यार्थप्रतीतिः साक्षात्कारस्य पूर्वरूपमिति । शङ्कते—**"सत्यमेवमि"ति** । समारोपो हि तत्त्वप्रत्ययेनापोद्यते न तत्त्वप्रत्ययः, दुःखित्वादिप्रत्ययश्चात्मनि सर्वेषां सर्वदोत्पद्यत इत्यबाधितत्वात्समीचीन इति बलवान्न शक्योपनेतुमित्यर्थः । निराकरोति—**"न देहाद्यभिमानवदि"ति** । नहि सर्वेषां सर्वदोत्पद्यत इत्येतावता तात्त्विकत्वम्, देहात्माभिमानस्यापि सत्यत्वप्रसङ्गात्सोऽपि सर्वेषां सर्वदोत्पद्यते । उक्तं चास्य तत्रतत्रोपपत्त्या बाधनमेवं दुःखित्वाद्यभिमानोऽपि तथा, नहि नित्यशुद्धबुद्धस्वभावस्यात्मन उपजनापायधर्माणो दुःखशोकादय आत्मनो भवितुमर्हन्ति । नापि धर्मास्तेषां ततोऽत्यन्तभिन्नानां(५) तद्धर्मत्वानुपपत्तेः । नहि गौरश्वस्य धर्मः (६)सम्बन्धस्यापि व्यतिरेका-

---

(१) एवं चेदुपाधिविरहस्य जीवान्यत्वात्परोक्षतया निरुपाधिब्रह्मापरोक्षप्रतीतिर्भ्रमः स्यान्नेत्याह नचेति । नन्वेवं संसारदशायामिव मोक्षेपि जीवरूपभावे शास्त्रीयज्ञानवैयर्थ्यापत्तिरत आह तस्मादिति । अयं भावः—अविकलानधिकेऽवभासमानेपि वस्तुनि येन क्रमेणारोपप्रवृत्तिस्तद्विपरीताकारप्रमाणवृत्त्युदयव्यतिरेकेण न भ्रमनिवृत्तिर्यथा देवदत्ते तदैक्ये चाभिज्ञासिद्धेप्यन्योयमन्यः स इत्यारोपः सोयमित्याकारप्रत्यभिज्ञया विना न निवर्तत इति । (२) परोक्षार्थकस्य ।

(३) वाक्यार्थसाक्षात्कारार्थमावृत्त्युपयोगमुक्त्वा तत्त्वम्पदार्थविवेकद्वारा वाक्यमात्राद् परोक्षज्ञानोत्पादनेप्यावृत्त्युपयोग उच्यत इत्याह अत्यन्तदुर्ग्रहेति । (४) दीर्घकाल–नैरन्तर्य–सत्कारवती ।

(५) इदमुपलक्षणमभिन्नानामित्यपि द्रष्टव्यम् ।

(६) नन्वश्वस्य गोऽधर्मत्वं नान्यत्वात्किन्तु गव्यसमवेतत्वात् दुःखादयस्तु भिन्ना अप्यात्मसमवेतत्वाद्धर्मा इत्याशङ्क्य, सम्बन्ध एव वास्तविको नास्तीत्याह सम्बन्धस्यापीति ।

व्यतिरेकाभ्यां सम्बन्धासम्बन्धाभ्यां च विचारासहत्वात्, (१)भेदाभेदयोश्च परस्परविरोधेनैकत्रासम्भवादिति । सर्वमेतदुपपादितं द्वितीयाध्याये । तदिदमुक्तं "देहादिवदेव चेतन्याद्बहिरुपलभ्यमानत्वा"दिति । इतश्च दुःखित्वादीनां न तादात्म्यमित्याह–"सुखदुःखादिषु चे"ति । स्यादेतत्, कस्मादनुभवार्थ एवावृत्त्युभ्युपगमो यावता 'द्रष्टव्यः श्रोतव्य' इत्यादिभिस्तत्त्वमसिवाक्यविषयादन्यविषयैवा(२)वृत्तिर्विधास्यत इत्यत आह— "तत्रापि न तत्त्वमसिवाक्यार्थादि"ति (पृ० ९०५ पं० ६)। 'आत्मा वा अरे द्रष्टव्य' इत्याद्यात्मविषयं दर्शनं विधीयते(३), न च तत्त्वमसिवाक्यविषयादन्यदात्मदर्शनमाम्नातं येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थः । सदेव सौम्येदमिति चोपक्रम्य तत्त्वमसीत्युपसंहृत इति स एव वाक्यार्थः । तदितः(४) प्रच्याव्यावृत्तिमन्यत्र विदधानः प्रधानमङ्गेन विहन्ति, वरो हि कर्मणाभिप्रेयमाणत्वात् सम्प्रदानं प्रधानम्, तमुद्वाहेन कर्मणाङ्गेन न विघ्नन्तीति । ननु विधिप्रधानत्वाद्वाक्यस्य न भूतार्थप्रधानत्वं भूतस्त्वर्थस्तदङ्गतया प्रत्याय्यते । यथाहुः–'चोदना हि भूतं भवन्तमि'त्यादि शाबरं वाक्यं व्याचक्षाणाः–कार्यमर्थमवगमयन्ती चोदना तच्छेषतया भूतादिकं मवगमयतीत्याशंक्याह । "नियुक्तस्य चास्मिन्नधिकृतोऽहमि"ति । यथा तावद्भूतार्थपर्यवसिता वेदान्ता न कार्यविधिनिष्ठास्तथोपपादितं तत्तु समन्वयादित्यत्र । प्रत्युत विधिनिष्ठत्वे मुक्तिविरुद्धप्रत्ययोत्पादान्मुक्तिविहन्तृत्वमेवास्येत्यभ्युच्चयमात्र(५)मत्रोक्तमिति ॥ २ ॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

(६)यद्यपि 'तत्त्वमसी'त्याद्याः श्रुतयः संसारिणः परमात्मभावं प्रतिपादयन्ति, तथापि तयोरपहतपाप्मत्वानपहतपाप्मत्वादिलक्षणविरुद्धधर्मसंसर्गेण नानात्वस्य विनिश्चयात् श्रुतेश्च तत्त्वमसीत्याद्याया 'मनो ब्रह्म आदित्यो ब्रह्मे'त्यादिवत्प्रतीकोपदेशपरतयाप्युपपत्तेः प्रतीकोपदेश एवायम् । (७)न च यथा समारोपितं सर्पत्वमनूद्य रज्जुत्वं पुरोवर्तिनो द्रव्यस्य विधीयत एवं प्रकाशात्मनो जीवभावमनूद्य परमात्मत्वं विधीयते इति युक्तम् । युक्तं हि पुरोवर्तिनि द्रव्ये द्राघीयसि(८) सामान्यरूपेणालोचिते विशेषरूपेणागृहीते विशेषान्तरसमारोपणमिह तु प्रकाशात्मनो निर्विशेषसामान्यस्यापराधीनप्रकाशस्य नागृहीतमस्ति किञ्चिद्रूपमिति कस्य विशेषस्याग्रहे किं विशेषान्तरं समारोप्यताम् । तस्माद्ब्रह्मणो जीवभावारोपासम्भवाज्जीवो जीवो

---

(१) ननु दुःखादयो नात्यन्तभिन्ना आत्मनः किन्तु भिन्नाभिन्ना इत्याशङ्क्याह भेदाभेदयोश्चेति ।

(२) सम्पदादिविषयैव ।

(३) आत्मस्तुतिद्वारा दर्शनं पुरुषप्रवृत्त्यतिशयविषयत्वमापद्यत इत्यर्थः ।

(४) तत्त्वमसिवाक्यात् ।

(५) समन्वयसूत्रोक्तयुक्त्या वेदान्तानां सिद्धब्रह्मपरत्वे सिद्धे तादृशब्रह्मज्ञानादेव मुक्तिरिति सिद्ध्यति तथाभ्युपगमे मुक्तिविरोध उक्त इत्यर्थः ।

(६) शब्दादेव प्रमित (अ० १ पा० १ सू० २४) इत्यत्र श्रुतिभिर्ब्रह्मजीवैक्ये निर्णीतेपि विरुद्धार्थत्वादुपचरितश्रुतिविषयत्वाभिप्रायेणाशङ्क्यत इत्याह यद्यपीत्यादिना ।

(७) जीवपरविभागस्याध्यस्तत्वादविरोधमाशङ्क्य स्वप्रकाशस्य भ्रमाधिष्ठानत्वानुपपत्तेरध्यासायोगमाह नचेति । (८) दीर्घतरे ।

ब्रह्म च ब्रह्मेति तत्त्वमसीति प्रतीकोपदेश एवेति प्राप्तम् ।

एवं प्राप्तेऽभिधीयते—श्वेतकेतोरात्मैव परमेश्वरः प्रतिपत्तव्यो न तु श्वेतकेतोर्व्यतिरिक्तः परमेश्वरः । भेदे हि गौणत्वापत्तिर्न च मुख्यसम्भवे गौणत्वं युक्तम् । अपि च प्रतीकोपदेशे सकृद्वचनं तु प्रतीयते भेददर्शननिन्दा च । अभ्यासे हि भूयस्त्वमर्थस्य भवति, नाल्पत्वमतिदवीय एवोपचरितत्वम् । तस्मात्पौर्वापर्यालोचनया श्रुतेस्तावज्जीवस्य परमात्मता वास्तवीत्येतत्परता लक्ष्यते । न च मानान्तरविरोधादत्राप्रामाण्यं श्रुतेः, न च मानान्तराविरोध इत्यादि तु सर्वमुपपादितं प्रथमेऽध्याये(१) । (२)निरंशस्यापि चानाद्यनिर्वाच्याविद्यातद्वासनासमारोपितविविधप्रपञ्चात्मनः सांशस्येव कस्यचिदंशस्याग्रहणाद्विभ्रम इव परमार्थस्तु न विभ्रमो नाम कश्चिन्न च संसारो नाम किन्तु सर्वमेतत्सर्वानुपपत्तिभाजनत्वेनानिर्वचनीयमिति युक्तमुत्पश्यामः । तदनेनाभिसन्धिनोक्तम्—**"यद्येवं प्रतिबुद्धोसि नास्ति कस्यचिदप्रतिबोध"** इति ( पृ० ९०८ पं० १ ) अन्येप्याहुः—

यद्यद्वैतेन तोषोऽस्ति युक्त एवासि सर्वदेति ।

अतिरोहितार्थमन्यदिति ॥ ३ ॥

## न प्रतीकेन हि सः ॥ ४ ॥

(३)यथा हि शास्त्रोक्तं शुद्धमुक्तस्वभावं ब्रह्मात्मत्वेनैव जीवेनोपास्यते 'ऽहं ब्रह्मास्मि तत्त्वमसि श्वेतकतो' इत्यादिषु तत्कस्य हेतोर्जीवात्मनो ब्रह्मरूपेण तात्त्विकत्वा'दद्वितीयत्वमि'ति श्रुतेश्च । (४)जीवात्मानश्चाविद्यादर्पणा ब्रह्मप्रतिबिम्बकाः । यथायथा यत्रयत्र मनो ब्रह्मादित्यो ब्रह्मेत्यादिषु ब्रह्मदृष्टेरुपदेशस्तत्र सर्वत्राहं मन इत्यादि द्रष्टव्यम् । **"ब्रह्मणो मुख्यमात्मत्वमि"**ति । (५)उपपन्नं च मनःप्रभृतीनां ब्रह्मविकारत्वेन तादात्म्यम्, घटशरावोदञ्चनादीनामिव मृद्विकाराणां मृदात्मकत्वम्, तथा च तादृशानां प्रतीकोपदेशानां क्वचित्कस्यचिद्विकारस्य प्रविलयावगमाद्भेदप्रपञ्चप्रविलयपरत्वमेवेति प्राप्ते,

उच्यते—(६) न तावदहं ब्रह्मेत्यादिभिर्यथाहंकारास्पदस्य ब्रह्मात्मत्वमुपदिश्यते एवं मनो ब्रह्मेत्यादिभिरहङ्कारास्पदत्वं मनःप्रभृतीनां, किन्त्वेषां ब्रह्मत्वेनोपास्यत्वम् । (७)अहंकारास्पदस्य

---

( १ ) प्रमाणान्तराणामविद्यावत्त्वापितव्यावहारिकविषयत्वमध्यासभाष्ये उक्तमित्यर्थः ।

( २ ) यथाऽऽकाशस्य निरंशस्याप्युपाध्यवच्छेदभेदाद्ग्रहणाग्रहणे इत्यर्थः ।

( ३ ) पूर्वोक्तं जीवब्रह्मणोरभेदमुपजीव्य ब्रह्मदृष्टिरस्तु मनआदिष्वहमिति ब्रह्माभिन्नजीवदृष्टिः कर्तव्येत्यभिप्रायेण पूर्वपक्षमाह यथाहीति ।

( ४ ) ननु मनआदिषु ब्रह्मात्मकजीवदृष्टेरध्यासे तदात्मकाकाशादिदृष्टिः कुतो नेत्यत आह जीवेति । आकाशादिः स्वरूपेण कल्पितो जीवानान्तु भेदमात्रं कल्पितं तत्स्वरूपं तु ब्रह्मैवेत्यर्थः । अविद्यादर्पणा-अविद्योपाधिकाः ।

( ५ ) पूर्वाधिकरणे ब्रह्मण्यात्मत्वमतिः कार्येत्युक्तत्वाद्ब्रह्माभिन्नमनआदावप्यहंमतिर्विधेयेत्याहोपपन्नं चेति ।

( ६ ) अत्र मनआदावात्मत्वदृष्टिः श्रुतिबलादाशङ्क्यते अर्थाद्वा, नाद्यः, इति वदन् पूर्वाधिकरणवैषम्यमाह न तावदिति ।

( ७ ) द्वितीयेपि किं मनआदिषु ब्रह्माध्यासाद् ब्रह्माभिन्नजीवविषयाऽहंदृष्टिराशङ्क्यते किंवा प्रतीकानां ब्रह्मविकारत्वेन तदभेदाद्ब्रह्मणि चात्मत्वप्रतीतेः प्रतीकेष्वहंदृष्टिरापाद्यते, प्रथममाशङ्कते अहङ्कारास्पदस्येति ।

ब्रह्मतया ब्रह्मत्वेनोपासनीयेषु मनःप्रभृतिष्वपि अहङ्कारास्पदत्वेनोपासनमिति चेत् । न,(१) एवमादिष्वहमित्यश्रवणात् । ब्रह्मात्मतया त्वहंकारास्पदत्वकल्पने तत्प्रतिबिम्बस्यैव तद्विकारान्तरस्याप्याकाशादेर्मनःप्रभृतिषूपासनप्रसङ्गः । तस्माद्यस्य यन्मात्रात्मतयोपासनं विहितं तस्य तन्मात्रात्मतयैव प्रतिपत्तव्यं 'यावद्वचनं वाचनिकमिति' न्यायान्नाधिकमध्याहर्तव्यमतिप्रसङ्गात् । न च सर्वस्य वाक्यजातस्य प्रपञ्चस्य विलयः प्रयोजनम्, तदर्थत्वे हि मन इति प्रतीकग्रहणमनर्थकं विरतमिति वाच्यम् यथा सर्वं खल्विदं ब्रह्मेति । न च सर्वोपलक्षणार्थं मनोग्रहणं युक्तम्, मुख्यार्थमनोग्रहणं युक्तम्, मुख्यार्थसम्भवे लक्षणाया अयोगात्, आदित्यो ब्रह्मेत्यादीनां चानर्थक्यापत्तेः । "नह्युपासकः प्रतीकानी"ति । अनुभवाद्वा प्रतीकानां मनःप्रभृतीनामात्मत्वेनाकलनं श्रुतेर्वा, न त्वेतदुभयमस्तीत्यर्थः । "प्रतीकाभावप्रसङ्गादि"ति । (२)ननु यथावच्छिन्नस्याहङ्कारास्पदस्यानवच्छिन्नब्रह्मात्मतया भवत्यभाव एवं प्रतीकानामपि भविष्यतीत्यत आह—"स्वरूपोपमर्दे च नामादीनामि"ति (पृ०९०९पं०१)। (३) इह हि प्रतीकान्यहङ्कारास्पदत्वेनोपास्यतया प्रधानत्वेन विधित्सितानि न तु तत्त्वमसीत्यादावहङ्कारास्पदमुपास्यमवगम्यते किन्तु सर्पत्वानुवादेन रज्जुतत्त्वज्ञापन इवाहङ्कारास्पदस्यावच्छिन्नस्य प्रविलयोऽवगम्यते। किमतो यद्येवम्, एतदतो भवति–प्रधानीभूतानां न प्रतीकानामुच्छेदो युक्तो न च तदुच्छेदे विधेयस्याप्युपपत्तिरिति । (४) अपि च–"न च ब्रह्मण आत्मत्वादि"ति । नह्युपासनविधानानि जीवात्मनो ब्रह्मस्वभावप्रतिपादनपरैस्तत्त्वमस्यादिसंदर्भैरेकवाक्यभावमापद्यन्ते येन तदेकवाक्यतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्पेत भिन्नप्रकरणत्वात्तथा च तत्र यथा लोकप्रतीतिव्यवस्थितो जीवः कर्ता भोक्ता च संसारी न ब्रह्मेति कथं तस्य ब्रह्मात्मतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिरुपादिश्येतेत्यर्थः । "अतश्चोपासकस्य प्रतीकैः समत्वादि"ति । यद्यप्युपासको जीवात्मा न ब्रह्मविकारः, प्रतीकानि तु मनःप्रभृतीनि ब्रह्मविकारस्तथाप्यवच्छिन्नतया जीवात्मनः प्रतीकैः साम्यं द्रष्टव्यम् ॥ ४ ॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

यद्यपि सामानाधिकरण्यमुभयथापि घटते तथापि(५) ब्रह्मणः सर्वाध्यक्षतया फलप्रसवसामर्थ्येन फलवत्त्वात्प्राधान्येन तदेवादित्यादिदृष्टिभिः संस्कर्तव्यमित्यादित्यादिदृष्टयो ब्रह्मण्येव कर्तव्या न तु ब्रह्मदृष्टिरादित्यादिषु । न चैवंविधेऽवधृते शास्त्रार्थे निकृष्टदृष्टिर्नोत्कृष्ट इति लौकिको न्यायोऽपवादाय प्रभवत्यागमविरोधेन तस्यैवापोदितत्वादिति पूर्वपक्षसंक्षेपः ।

---

(१) यदि श्रुतेः प्रतीकेष्वहम्मतिरभिमता तर्हि ब्रह्मणीव तां वेदः श्रावयेत् न चैवमित्याह नेति ।

(२) स्वयमेवोद्भाव्य दूषयिष्यतीत्युक्तामिदानीं निराकरोति ननु यथेत्यादिना ।

(३) जीवलयादन्यादिलयस्य वैषम्यमाह इह हीत्यादिना ।

(४) न च ब्रह्मण इति भाष्यगतचशब्दार्थमाहापि चेति । पूर्वोक्तातिप्रसङ्गेन सह समुच्चय इत्यर्थः ।

(५) यथा पूर्वत्र ब्रह्माभिन्नजीवदृष्टेर्नामादिषु करणे घटादिदृष्टेरपि प्रसङ्ग इत्यतिप्रसङ्गात् प्रतीकेष्वहम्मतिक्षेप इत्युक्तमेवमिहापि यद्यादित्यादिषूपास्यमानेषु ब्रह्म फलप्रदमभिमतं तदा चैत्रे उपास्यमाने मैत्रात् फलप्रसङ्गाद्ब्रह्मैव फलप्रदत्वादुपास्यमिति सङ्गत्यभिप्रायेण पूर्वपक्षमाह ब्रह्मण इत्यादिना। प्रयोजनवत्तया ब्रह्मणः संस्कारपेक्षत्वात्तत एव च प्रधानत्वात्तद्वाचिब्रह्मशब्दस्य प्रतीतिलक्षकत्वायोगाद्ब्रह्मैवेत्यादिदृष्टिभिः संस्कार्यमित्यर्थः ।

(१)सत्यं सर्वाध्यक्षतया फलदातृत्वेन ब्रह्मण एव सर्वत्र वास्तवं प्राधान्यं तथापि शब्दगत्यनुरोधेन क्वचित्कर्मण एव प्राधान्यमवसीयते । यथा 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः, (२) चित्रया यजेत पशुकाम' इत्यादौ । अत्र हि सर्वत्र यागाद्याराधिता यद्यपि देवतैव फलं प्रयच्छतीति स्थापितं तथापि शब्दतः कर्मणः करणत्वावगमेन फलत्वप्रतीतेः प्राधान्यम् । (३) क्वचिद् द्रव्यस्य यथा व्रीहीन्प्रोक्षतीत्यादौ । तदुक्तं 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेते'ति(४) । तदिह यद्यपि सर्वाध्यक्षतया वस्तुतो ब्रह्मैव फलं प्रयच्छति तथापि शास्त्रं ब्रह्म बुद्ध्यादित्यादौ प्रतीके उपास्यमाने ब्रह्मफलाय कल्पते इति अभिवदति किंवाऽऽदित्यादिबुद्ध्या ब्रह्मैव विषयीकृतं फलायेत्युभयथापि ब्रह्मणः सर्वाध्यक्षस्य फलदानोपपत्तेः शास्त्रार्थसंदेहे लोकानुसारतो निर्धीयते । तदिदमुक्तम् । "निर्धारिते शास्त्रार्थे एतदेवं स्यादि"ति ( पृ०९१६पं१७ ) । न केवलं लौकिको न्यायो निश्चये हेतुरपि तु आदित्यादिशब्दानां प्राथम्येन मुख्यार्थत्वमपीत्याह—"प्राथम्याच्चे"ति (पृ०९११पं०१) इतिपरत्वमपि ब्रह्मशब्दस्यामुमेव न्यायमवगमयति । तथाहि स्वरसवृत्त्या आदित्यादिशब्दा यथा स्वार्थे वर्तन्ते तथा ब्रह्मशब्दोऽपि स्वार्थे वर्त्स्यति यदि स्वार्थोऽस्य विवक्षितः स्यात्, तथा चेतिपरत्वमनर्थकम् तस्मादितिना(५) स्वार्थात्प्रच्याव्य ब्रह्मपदं ज्ञानपरं स्वरूपपरं वा कर्तव्यम् । (६)न च ब्रह्मपदमादित्यादिपदार्थ इति प्रतीतिपर एवायमितिपरः शब्दो यथा गौरिति मे प्रतीतिरभवदिति । तथा चादित्यादयो ब्रह्मेति प्रतिपत्तव्या इत्यर्थो भवतीत्याह "इतिपरत्वादपि ब्रह्मशब्दस्ये'ति । शेषमतिरोहितार्थम् ॥ ५ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

"अथवा नियमेनोद्गीथादिमतयश्चादित्यादिष्वध्यस्येरन्नि"ति ( पृ०९१२ पं०९ ) । सत्स्वपि आदित्यादिषु फलानुत्पादादुत्पत्तिमतः कर्मण एव फलदर्शनात् कर्मैव फलव(७)त्तथा चादित्यादिमतिभिर्यद्युद्गीथादिकर्माणि विषयीक्रियेरन् तत आदित्यादिदृष्टिभिः

(१) यथा राजपुरुष आगत इत्युक्ते वस्तुतः प्रधानस्यापि राज्ञ आगमनं न प्रतीयते किन्तु पुरुषस्य तथाऽत्रापि आदित्यादिरेव शब्दतः प्रधानत्वेनावगत उपास्तिकर्मेति वक्तुं श्रौतदृष्टान्तमाह सत्यमित्यादिना ।

(२) इदमैहिकफलककर्मोदाहरणम् ।

(३) आदित्यादिद्रव्यस्य प्राधान्यसिध्यर्थं दृष्टान्तान्तरमाह क्वचिद्द्रव्यस्येति ।

(४) यैर्व्रीहीनित्यादिशब्दैर्द्रव्यं सञ्चिकीर्ष्यत इति प्रतीयते तत्र क्रिया प्रोक्षणाद्यात्मिका गुणत्वेन प्रतीयेतेत्यर्थः ।

(५) इतिशब्देन । स्वरूपेति । ब्रह्मपदमेव स्वरूपं तत्परं ब्रह्मेति शब्द इति वा ज्ञावर्थाविति शब्दाशिरस्कब्रह्मशब्दात् प्रतीयेते इत्यर्थः ।

(६) उपास्तिविधिसिद्धये शब्दपरत्वं दूषयन्नाह नचेति । य आदित्यः स ब्रह्मेति अयंशब्द इति सामानाधिकरण्यं विरुद्धमित्यर्थः । ननु प्रतीतिपरत्वमपि न युक्तं या ब्रह्मेति प्रतीतिः सा आदित्य इत्यस्याप्यर्थस्य विरुद्धत्वादत आह गौरितीति । भ्रान्तो हि गवयादिकं गौरितिप्रतिपद्य बाधोत्तरकालं वदति गौरिति मेऽभवत गवय इति गवात्मत्वेन प्रतीत इत्यर्थः ।

(७) भाष्ये क्रियात्मकत्वादित्यसाधकम्, सिद्धरूपादित्यादिदृष्टयध्यासेऽप्युद्गीथादिगतक्रियात्वभावस्यानपायात्तत्फलसिध्युपपत्तेरित्याशङ्कयाह तथाचेति । शुक्त्यादौ रजतबुध्युत्पत्तौ तत्प्रयुक्तव्यवहारप्रतिबन्धवत् सिद्धरूपादित्यादिदृष्टावुद्गीथादिगतक्रियात्वमभिभूयेतेत्यर्थः ।

कर्मरूपाण्यभिभूयेरन् । एवं च कर्मरूपेष्वसत्कल्पेषु कुतः फलमुत्पद्येत । (१)आदित्यादिषु पुनरुद्गीथादिदृष्टावुद्गीथादिषुध्योपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलाय कल्पिष्यन्त इति । अत एव च पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोग उपपन्नो यतः पृथिव्यामृग्दृष्टिरध्यस्ताग्नौ च सामदृष्टिः, साम्नि पुनरग्निदृष्टौ ऋचि च पृथिवीदृष्टौ विपरीतं भवेत् । तस्मादप्येतदेव युक्तमित्याह—"तथा चेयमेवे"ति । उपपत्त्यन्तरमाह—"अपि च लोकेष्वि"ति । एवं खल्वधिकरणनिर्देशो विषयत्वप्रतिपादनपर उपपद्यते यदि लोकेषु सामदृष्टिरध्यस्येत नान्यथेति । पूर्वाधिकरणराद्धान्तोपपत्तिमत्रैवार्थे ब्रूते—"प्रथमनिर्दिष्टेषु चे"ति ( पृ०९१३पं०१ ) । सिद्धान्तमत्र प्रक्रमते—"आदित्यादिमतय एवे"ति । (२) यद्युद्गीथादिमतय आदित्यादिषु क्षिप्येरन् तत आदित्यानां स्वयमकार्यत्वादुद्गीथादिकृतेस्तत्र वैयर्थ्यं प्रसज्येत, नह्यादित्यादिभिः किंचित्क्रियते यद्विद्यया वीर्यवत्तरं भवेद् आदित्यादिमत्या विद्ययोद्गीथादिकर्मसु कार्येषु यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीत्यादित्यमतीनामुपपद्यते उद्गीथादिषु संस्कारकत्वेनोपयोगः । चोदयति—"भवतु कर्मसमृद्धिफलेष्वेवामि"ति । यत्र हि कर्मणः फलं तत्रैवं भवतु यत्र तु गुणात्फलं तत्र गुणस्य सिद्धत्वेनाकार्यत्वात्करोतीत्येव नास्तीत्यत्र विद्यायाः क उपयोग इत्यर्थः । परिहरति—"तेष्वपी"ति । न तावद्गुणः सिद्धस्वभावः कार्याय फलाय पर्याप्तो मा भूत्प्रकृतकर्मानिवेशिनो यत्किञ्चित्फलोत्पादः, तस्मात्प्रकृतापूर्वसन्निवेशितः फलोत्पाद इति, तस्य क्रियमाणत्वेन विद्यया वीर्यवत्तरत्वोपपत्तिरिति । 'फलात्मकत्वाच्चादित्यादीनामि'ति । यद्यपि ब्रह्मविकारत्वेनादित्योद्गीथयोरविशेषस्तथापि फलात्मकत्वेनादित्यादीनामस्त्युद्गीथादिभ्यो विशेष इत्यर्थः । द्वितीयानिर्देशादप्युद्गीथादीनां प्राधान्यमित्याह—अपि चोमिति । (३) स्वयमेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः । ननूक्तं सिद्धरूपैरादित्यादिभिरध्यस्तैः साध्यभूतत्वमभिभूतं कर्मणामत आह—"आदित्यादिभावेनापि दृश्यमानानामि"ति ( पृ० ९२४ पं० २ ) । भवेदेतदेवं यद्यध्यासेन कर्मरूपमभिभूयेतापि तु माणवक इवाग्निदृष्टिः केनचित्तीव्रत्वादिना गुणेन गौण्यनभिभूतमाणवकत्वा त्तथेहापि । नहीयं शुक्तिकायां रजतधीरिव बहिर्धीर्येन माणवकत्वमभिभवेत्, किन्तु गौणी, तथेयमप्युद्गीथादावादित्यदृष्टिर्गौणीति भावः । "तदेतस्यामृच्यध्यूढं सामेति दिवमे"ति । (४) अन्यथापि लक्षणोपपत्तौ न ऋक्सामेत्यध्यासकल्पना पृथिव्यग्न्योरित्यर्थः ।

---

( १ ) उद्गीथादिमतिभिरित्यादिभाष्यं व्याचष्टे आदित्यादिषु पुनरिति । अत एवेति । अत्र हेतुवाक्ये 'तदेतदेतस्यामृच्यध्यूढं सामे'त्यत्र पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगः पृथिव्यग्न्योर्ऋक्सामदृष्टिः पूर्ववाक्येऽभिहितेति ज्ञापयति, आरोप्यवाचकशब्दस्यैव वन्ह्यादेर्माणवकादावुपचारदर्शनादित्यर्थः ।

( २ ) उद्गीथादीनां क्रियात्वात् प्रकृतज्योतिष्टोमाद्युपकारस्य तैः करिष्यमाणत्वाच्च तान्येवादित्यादिमतिभिरातिशयाय संस्क्रियेरन्नित्याह यदीति ।

( ३ ) भवन्तूत्कृष्टा आदित्यादयः तेभ्यस्त्वक्रियारूपेभ्यः कथं फलसिद्धिरित्याशङ्क्य तद्दृष्टेः फलं भवेदित्याह स्वयमेवेति ।

( ४ ) अन्यथापीति । सत्यां लक्षणायां न गौणी वृत्तिर्दौर्बल्यात, तथाच ऋक्सामसम्बन्धमात्रं पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगे कारणम्, सम्बन्धश्च ऋक्सामाध्यस्तत्वमपीत्यर्थः ।

(१) अक्षरन्यायालोचनया तु विपरीतमेवेत्याह—"इयमेवर्गि"ति। (२) लोकेषु पञ्चविधं सामोपासीतेति द्वितीयानिर्देशात्साम्नामुपास्यत्वमवगम्यते। तत्र यदि सामधीरध्यस्येत ततो न सामान्युपास्येरन् अपि तु लोकाः पृथिव्यादयः। तथा च द्वितीयार्थं परित्यज्य तृतीयार्थः परिकल्प्येत(३), साम्नेति लोकेष्विति सप्तमी द्वितीयार्थे कथंचिन्नीयते, अगारे गावो वास्यन्तां प्रावारे कुसुमानीतिवत्। तेनोक्तन्यायानुरोधेन(४) सप्तम्याश्चोभयथाप्यवश्यं कल्पनीयार्थत्वाद् वरं यथा श्रुतद्वितीयार्थानुरोधाय तृतीयार्थे सप्तमी व्याख्यातव्या। लोकपृथिव्यादिबुद्ध्या पञ्चविधं हिङ्कारप्रस्तावोद्गीथप्रतीहारनिधनप्रकारं सामोपासीतेति निर्णीयते। (५)ननु यत्रोभयत्रापि द्वितीयानिर्देशो यथा खल्वमुमेवादित्यं सप्तविधं हिङ्कारप्रस्तावोङ्कारोद्गीथप्रतीहारोपद्रवनिधनप्रकारं सामोपासीतेति, तत्र को विनिगमनायां हेतुरित्यत आह "तत्रापी"ति। तत्रापि समस्तस्य सप्तविधस्य साम्न उपासनमिति साम्न उपास्यत्वश्रुतेः। साध्विति पञ्चविधस्य साधुत्वं चास्य धर्मत्वम्। तथा च श्रुतिः 'साधुकारी साधुर्भवती'ति। (६) हिङ्कारानुवादेन पृथिवीदृष्टिविधाने हिंकारपृथिवीति प्राप्ते विपरीतनिर्देशः पृथिवीहिङ्कारः॥ ६॥

## आसीनः सम्भवात्॥ ७॥

## ध्यानाच्च॥ ८॥

## अचलत्वं चापेक्ष्य॥ ९॥

## स्मरन्ति॥ १०॥

(७)कर्माङ्गसम्बन्धिषु यत्र हि तिष्ठतः कर्म चोदितं तत्र तत्सम्बन्धोपासनापि तिष्ठतैव कर्तव्या, यत्र त्वासीनस्य, तत्रोपासनाप्यासीनेनैवेति। नापि सम्यग्दर्शने वस्तुतन्त्रत्वात्प्रमाणतन्त्रत्वाच्च प्रमाणतन्त्रा च वस्तुव्यवस्था प्रमाणं नापेक्षत इति तत्राप्यनियमः। यन्महता प्रयत्नेन विनोपासितुमशक्यम्—यथा प्रतीकादि, यथा वा सम्यग्दर्शनमपि(८) तत्त्वमस्यादि तत्रैषा चिन्ता। तत्र चोदकशास्त्राभावादनियमे प्राप्ते यथा शक्यत इत्युपबन्धादासीनस्यैव सिद्धम्। (९)ननु यस्यामवस्थायां ध्यायतिरुपचर्यते प्रयुज्यते किमसौ तदा

---

(१) अन्यथोपपत्तिमभ्याहाक्षरन्यासेति।

(२) 'लोकेषु पञ्चविधमि'त्यादिभाष्यतात्पर्यमाह लोकेष्वित्यादिना।

(३) परिकल्पनामाभिनयेनाह साम्नेतीति। सप्तमीभङ्गे लोकसिद्धमुदाहरणमाहागारे इति। अगारे गृहे गावो वास्यन्तामितिप्रयोगे गवां सञ्चारेणागारं पवित्रीक्रियतामितिसप्तमीं भङ्क्त्वा कर्मत्वं लक्ष्यते एवमन्यत्रापीत्यर्थः। (४) सामोपासीतेति द्वितीयाभङ्गप्रसङ्गानुरोधेन।

(५) यत्र द्वितीयासप्तम्यौ भवतः तत्र श्रुतिद्वयभङ्गगौरवपरिहारार्थमङ्गेष्वनङ्गदृष्टिर्भवतु यत्र तूभयत्र द्वितीया निर्दिश्यते तत्रान्यतरश्रुतिमात्रभङ्गस्य पूर्वपक्षोत्तरपक्षयोस्समत्वात् कथं नियम इत्याशङ्क्याह नन्विति।

(६) निर्देशविरोधमाशङ्क्य परिहरति हिङ्कारानुवादेनेति। हिङ्कारादिसामोद्देशेन साम्नि पृथिव्यादिदृष्टिविधौ हिङ्कारादेः प्रथमनिर्देशः स्यात् तस्मिन्प्राप्ते यो विपरीतनिर्देशः स भञ्जनीय इत्यर्थः।

(७) अङ्गावबद्धोपासनचिन्तान्ते सिद्धं तत्पर्युदासमादायेतरेषूपासनेष्वासनानियमाचिन्तनात्सङ्गतिमभिप्रेत्य विषयं परिशिनष्टि कर्माङ्गेति।

(८) तत्त्वमस्यादिवाक्यजन्यज्ञानाभ्यासात्मकमित्यर्थः।

(९) ध्यायतिश्चेत्यादिभाष्यमाक्षिपति नन्विति। भाष्यगतोपचारशब्दो न युक्तः बकादिष्वपि ध्यानप्र-

तिष्ठतो न भवति, न भवतीत्याह—आसीनश्चाविद्यमानायाचो भवतीति । अतिरोहितार्थमितरत् ॥ ७—१० ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

(१)'समे शुचौ शर्करावह्निवालुकाविवर्जित'इत्यादिवचनान्नियमे सिद्धे दिग्देशादिनियममवाचनिकमपि प्राचीनप्रवणे वैश्वदेवेन यजेतिवद्वैदिकारम्भसामान्यात्स्यादिति कश्चिदाशङ्कते । तमनुगृहीतमाचार्यः सुहृद्भावेनैव तदाह स्म । यत्रैकाग्रता मनसस्तत्रैव भावनां प्रयोजयेत्, अविशेषात् । (२) नह्यत्रास्ति वैश्वदेवादिवद्वचनं विशेषकं तस्मादिति ॥ ११ ॥

## आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

अधिकरणविषयं विवेचयति"तत्र यानि ताव"दिति । अविद्यमाननियोज्या या ब्रह्मात्मप्रतिपत्तिस्तस्याः शास्त्रं(३) हि नियोज्यस्य कार्यरूपनियोगसम्बन्धमवबोधयति तस्यैव कर्मण्यस्वर्यलक्षणमधिकारं तच्चैतदुभयमतीन्द्रियत्वाद्भवति शास्त्रलक्षणं प्रमाणान्तराप्राप्ये शास्त्रस्यार्थवत्त्वाद्ब्रह्मात्मत्वप्रतीतेस्तु जीवन्मुक्तेन दृष्टत्वान्नास्तीह तिरोहितमिव किंचनेति किमत्र शास्त्रं करिष्यति । (४) नन्वेवमप्यभ्युदयफलान्युपासनानि तत्र नियोज्यनियोगलक्षणस्य च कर्मणि स्वामितालक्षणस्य च सम्बन्धस्यातीन्द्रियत्वात्तत्र सकृत्करणादेव शास्त्रार्थसमाप्तौ प्राप्तायामुपासनपदवेदनीयावृत्तिमात्रमेव कृतवत उपरमः प्राप्तस्तावतैव कृतशास्त्रार्थत्वादिति प्राप्ते, अभिधीयते-सविज्ञानो भवतीत्यादिश्रुतेर्यत्र स्वर्गादिफलानामपि कर्मणां प्रायणकाले स्वर्गादिविज्ञानापेक्षकत्वं तत्र केव कथा ऽतीन्द्रियफलानामुपासनानाम् । (५)तानि खलु आ प्रायणं तत्तदुपास्यगोचरबुद्धिप्रवाहवाहितया दृष्टेनैव रूपेण प्रायणसमये तद्बुद्धिं भावयिष्यन्ति, किमत्र फलवत्प्रायणसमये बुद्ध्याक्षेपेण, नहि दृष्टे सम्भवत्यदृष्टकल्पना युक्ता, तस्मादा प्रायणं प्रत्ययावृत्तिरिति । तदिदमुक्तम् "प्रत्ययास्त्वेत"इति । तथा च श्रुतिः सर्वातीन्द्रियविषया 'स यथा क्रतुरस्माल्लोकात् प्रैति तावत्क्रतुर्हामुं लोकं प्रेत्याभिसंभवती'ति । क्रतुः सङ्कल्पविशेषः । स्मृतयश्चोदाहृता इति ॥ १२ ॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् १३

गतस्तृतीयशेषः साधनगोचरो विचारः । इदानीमेतदध्यायगतफलविषया चिन्ता प्रतन्यते । तत्र तावत्प्रथममिदं विचार्यते किं ब्रह्माधिगमे ब्रह्मज्ञाने सति ब्रह्मज्ञानफलान्मोक्षा-

---

द्भावादत आह प्रयुज्यते इति । असावस्या किं तिष्ठतो न भवति अपितु भवत्येव तिष्ठतोप्यैकाग्र्यसम्भवादित्यर्थः । (१) ननु 'समे शुचा'वि'तिदेशनियमस्य श्रुतत्वात्कथं विचारावसर इत्यत्राह सम इति ।

(२) यदुक्तमङ्गोपास्त्यतिरिक्तोपास्तिर्दिगादिनियमवती वैदिकानुष्ठानत्वाद्वैश्वदेववदिति तत्र श्रुतदेशादिमत्त्वमुपाधिरिति वदन् अविशेषादिति सोत्रं हेतुं व्याचष्टे नह्यत्रेति ।

(३) तस्या इति । शास्त्राविषयत्वादिति शेषः । ब्रह्मात्मत्वप्रतिपत्तेर्नियोज्यरहितत्वं विध्यविषयत्वं च दृष्टफलत्वेनोपपादयन्नाह शास्त्रं हीति ।

(४) अहङ्ग्रहोपास्तीनामदृष्टार्थत्वेन सम्यग्ज्ञानोदयस्यतत्र ज्योतिष्टोमादिवत्करणमित्याह नन्वेवमित्यादिना ।

(५) ननु तर्हि कर्मवदेवोपासनान्येव विहितत्वसामर्थ्यात्स्वफलं यथाकालान्तरे आक्षिपन्ति तथान्त्यकालिकं स्वफलसाक्षात्कारमप्याक्षिपन्तु किं प्रायणान्तादृत्त्येति, तत्राह तानीति ।

द्विपरीतफलं दुरितं (१)बन्धनफलं क्षीयते न क्षीयते इति संशयः । किं तावत्प्राप्तं, शास्त्रेण हि फलाय यद्विहितं प्रतिषिद्धं चानर्थपरिहारायाश्वमेधादि ब्रह्महत्यादि चापूर्वावान्तरव्यापारं किं तदपूर्वमुपरतेऽपि कर्मण्यत्र सुखदुःखोपभोगात्प्राङ् नाविरन्तुमर्हति । स हि तस्य विनाशहेतुस्तदभावे कथं विनश्येदिति, तस्याकस्मिकत्वप्रसङ्गात् शास्त्रव्याकोपाच्चेति । अदत्तफलं चेत्कर्मापूर्वं विनश्यति कर्मण एव फलप्रसवसामर्थ्यबोधकशास्त्रमप्रमाणं भवेत् । न च प्रायश्चित्तमिव ब्रह्मज्ञानमदत्तफलान्यपि कर्मापूर्वाणि क्षिणोतीति साम्प्रतम् , प्रायश्चित्तानामपि तदप्रक्षयहेतुत्वात्तद्विधानस्य(२) चैनस्विनराधिकारिप्राप्तिमात्रेणोपपत्तावुपात्तदुरितनिबर्हणफलाक्षेपकत्वायोगात् । अत एव स्मरन्ति-'नाभुक्तं क्षीयते कर्मे'ति । (३)यदि पुनरपेक्षितोपायतास्मा प्रायश्चित्तविधिर्न नियोज्यविशेषप्रतिलम्भमात्रेण निर्वृणोतीत्यपेक्षिताकाङ्क्षायां दोषसंयोगेन श्रवणात्तन्निबर्हणफलः कल्पेत । तथाऽपि ब्रह्मज्ञानस्य तत्संयोगेनाश्रवणान्न दुरितनिबर्हणसामर्थ्ये प्रमाणमस्ति, मोक्षवत्तस्यापि स्वर्गादिफलवद्देशकालनिमित्तापेक्षयोपपत्तेः । (४)शास्त्रप्रामाण्यात्सम्भविष्यति असाववस्था यस्यामुपभोगेन समस्तकर्मक्षये ब्रह्मज्ञानं मोक्षं प्रसोष्यति, (५)योगर्द्ध्यैव वा दिवि भुव्यन्तरिक्षे बहूनि शरीरेन्द्रियाणि निर्माय फलान्युपभुञ्जानेन योगसामर्थ्येन योगी कर्माणि क्षपयित्वा मोक्षी संपत्स्यते । स्थिते चैतस्मिन्नर्थे न्यायबलाद्यथा पुष्करपलाश इत्यादिव्यपदेशो ब्रह्मविद्यास्तुतिमात्रपरतया व्याख्येय इति प्राप्ते,

उच्यते—(६)व्याख्यायेतैवं व्यपदेशो यदि कर्मविधिविरोधः स्यान्न त्वयमस्ति । शास्त्रं हि फलोत्पादनसामर्थ्यमात्रं कर्मणामवगमयति न तु कुतश्चिदागन्तुकान्निमित्ततः प्रायश्चित्तादेस्तदप्रतिबन्धमपि, तस्य तत्रौदासीन्यात् । यदि शास्त्रबोधितफलप्रसवसामर्थ्यमप्रतिबद्धमागन्तुकेन केनचित्कर्मणा ततस्तत्फलं प्रसूत एवेति न शास्त्रव्याघातः । नाभुक्तं कर्म क्षीयत इति च स्मरणमप्रतिबद्धसामर्थ्यकर्माभिप्रायम् । दोषक्षयोद्देशेन चापरविद्यानामस्ति प्रायश्चित्तवद्विधानमैश्वर्यफलानाम(७)प्युभयसंयोगाविशेषात् । यत्रापि निर्गुणायां परविद्यायां दोषोद्देशो नास्ति तत्रापि तत्स्वभावालोचनादेव(८) तत्प्रक्षयप्रसवसामर्थ्यमवसीयते, नहि तत्त्वमसिवाक्यार्थपरिभावनाभुवा प्रसंख्यानेन निर्मृष्टनिखिलकर्तृभोक्तृत्वादिविभ्रमो जीवः

---

( १ ) विपरीतफलत्वमेवाह बन्धनफलमिति ।

( २ ) ननु स्वर्गकामस्य यागविधिसामर्थ्याद्यथा यागस्य स्वर्गसाधनत्वमेवमनर्थफलपापवतः प्रायश्चित्तविधिवशात् प्रायश्चित्तस्य पापनिवृत्त्यर्थता कुतो नेष्यत आह तद्विधानस्य चेति । एनस्वी पापी नरस्तस्मिन्नधिकारिणि प्राप्ते तद्विधीयते यथा गृहदाहवति प्राप्ते क्षामवतीष्टिः, अधिकारिप्रवृत्तिपरं विशेषणं न फलपरमित्यर्थः ।

( ३ ) निष्पन्नगृहदाहादेर्निष्पादयितुमशक्यत्वादधिकारिप्रवृत्त्यर्थत्वमस्तु पापनिवृत्तेस्तु कर्तुं शक्यत्वादिष्टसाधनत्वबोधी प्रायश्चित्तविधिस्तन्निवृत्तिफल इत्याशङ्क्य तदभ्युपगमेन प्रकृते वैषम्यमाह यदीति ।

( ४ ) अथ देशाद्यपेक्षत्वे मोक्षोऽनित्यः स्यात्तदा प्रकारान्तरेण कर्मनिवृत्तिमाह शास्त्रेति ।

( ५ ) यदि चैकेन देहेनाविषमकर्मफलभोगो नानुपपन्नस्तर्हि कल्पान्तरमाह योगर्द्ध्यैव वेति ।

( ६ ) न प्रबलत्वादेव दुर्बलं बाधते किन्तु विरोधसत्त्वे न चेह स इत्याह सिद्धान्ती व्याख्यायेतेति ।

( ७ ) नन्वैश्वर्यफलानां सगुणविद्यानां कथं पापनिवर्तकत्वमत आहोभयेति । वाक्यद्वयेन 'तद्यथेषीकातूलं, सर्वेष्वात्मस्ववमत्ती'त्यादिवाक्यैर्विद्याया उभयसंयोगस्याविशेषादुभयार्थत्वमित्यर्थः ।

( ८ )पापं ज्ञाननिवर्त्यमध्यस्तत्वाद्रज्जुसर्पवदिति तत्स्वभावालोचनादिति भावः ।

फलोपभोगेन युज्यते । नहि रज्ज्वां भुजङ्गसमारोपनिबन्धना भयकम्पादयः सति रज्जुतत्त्वसाक्षात्कारे प्रभवन्ति, किन्तु संस्कारशेषात्किञ्चित्कालमनुवृत्त्यापि निवर्तन्त एव । (१) अमुमेवार्थमनुवदन्तो यथा पुष्करपलाश इत्यादयो व्यपदेशाः समवेतार्थाः सन्तो न स्तुतिमात्रतया कथंचिद्व्याख्यानमर्हन्ति । ननूक्तं सम्भविष्यति सावस्था जीवात्मनो यस्यां पर्यायेणोपभोगाद्वा योगर्द्धेः प्रभावतो युगपन्नैकविधकायनिर्माणेनापर्यायेणोपभोगाद्वा जन्तुः कर्माणि क्षपयित्वा मोक्षी संपत्स्यत इत्यत आह--"एवमेव च मोक्ष उपपद्यत" इति । अनादिकालप्रवृत्ता हि कर्माशया अनियतकालविपाकाः क्रमवता तावद्भोगेन क्षेतुमशक्याः, भुञ्जानः खल्वयमपरानपि सञ्चिनोति कर्माशयानिति । नाप्यपर्यायमुपभोगेनासक्तः(२) कर्मान्तराण्यसञ्चिन्वानः क्षेप्स्यतीति साम्प्रतम्, कल्पशतानि क्रमकालभोग्यानां सम्प्रति भोक्तुमसामर्थ्यात् । दीर्घकालफलानि च कर्माणि कथमेकपदे क्षेप्स्यन्ति । तस्मान्नान्यथा मोक्षसम्भवः । ननु सत्स्वपि कर्माशयान्तरेषु सुखदुःखफलेषु मोक्षफलस्य शास्त्रकर्मणः समुदाचरतो ब्रह्मभावमनुभूयार्थलब्धविपाकानां कर्मान्तराणां फलानि भोक्ष्यन्त इत्यत आह--'न च देशकालनिमित्तापेक्ष' इति । नहि कार्यः सन् मोक्षो मोक्षो भवितुमर्हति ब्रह्मभावो हि सः, न च ब्रह्म क्रियते नित्यत्वादित्यर्थः । परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य । ज्ञानफलं खलु मोक्षोऽभ्युपेयते, ज्ञानस्य चानन्तरभाविनी ज्ञेयाभिव्यक्तिः फलं सैवाविद्योच्छेदमादधती ब्रह्मस्वभावस्वरूपावस्थानलक्षणाय मोक्षाय कल्पते । एवं हि दृष्टार्थता ज्ञानस्य स्यात् । अपूर्वाधानपरम्परया ज्ञानस्य मोक्षफले कल्प्यमाने ज्ञानस्य परोक्षफलत्वमदृष्टार्थत्वं भवेत् । न च दृष्टे सम्भवत्यदृष्टकल्पना युक्तेत्यर्थः । तस्माद्ब्रह्माधिगमे ब्रह्मज्ञाने सत्यद्वैतसिद्धौ दुरितक्षय इति सिद्धम् ॥ १३ ॥

## इतरस्याप्येवमसंश्लेपः पाते तु ॥ १४ ॥

अधर्मस्य स्वाभाविकत्वेन(३) रागादिनिबन्धनत्वेन शास्त्रीयेण ब्रह्मज्ञानेन प्रतिबन्धो युक्तः, धर्मज्ञानयोस्तु शास्त्रीयत्वेन ज्योतिष्टोमदर्शपौर्णमासवदविरोधान्नोच्छेद्योच्छेत्तृभावो युज्यते । (४)पाप्मनश्च विशेषतो ब्रह्मज्ञानोच्छेद्यत्वश्रुतेर्धर्मस्य न तदुच्छेद्यत्वम् । विशेषविधानस्य शेषप्रतिषेधनान्तरीयकत्वेन लोकतः सिद्धेः, यथा देवदत्तो दक्षिणेनाक्ष्णा पश्यतीत्युक्ते न वामेन पश्यतीति गम्यते । 'उभे ह्येवैष एते तरतीति' च यथासम्भवं ब्रह्मज्ञानेन दुष्कृतं भोगेन सुकृतमिति । 'क्षीयन्ते चास्य कर्माणि' इति च सामान्यवचनं 'सर्वे पाप्मान' इति विशेषश्रवणात् पापकर्माणीति विशेष उपसंहरणीयम् । तस्माद्ब्रह्मज्ञानाद्दुष्कृतस्यैव क्षयो न सुकृतस्येति प्राप्ते, पूर्वाधिकरणराद्धान्तोऽतिदिश्यते--(५)नो खलु ब्रह्मविद्या केनचिद्-

---

(१) न्यायसिद्धार्थे लिङ्गदर्शनमाहामुमेवेति । उक्तविद्यासामर्थ्यवक्ष्यमाणमोक्षशास्त्रान्यथानुपपत्तिभ्यामुपबृंहिताज्ञानदुरितनिवृत्त्योरेकपुरुषसम्बन्धनिर्देशान्यथानुपपत्तिः सत्यपि विरोधे निषेधान्यथानुपपत्तिर्बलीयसीति भावः।

(२) आसक्तिरहितः। (३) शास्त्रोपदेशानपेक्षत्वेन ।

(४) धर्मस्य ज्ञानानिवर्त्यत्वं स्वभावविरोधाद्वा शास्त्रान्निवृत्त्यवगमाद्वेति विकल्प्य प्रथमं निरस्यति पाप्मनश्चेत्यादिना। (५) ज्ञानसुकृतयोः स्वभावाविरोधाभिप्रायेण सिद्धान्तयति नो खल्वित्यादिना ।

दृष्टेन द्वारेण दुष्कृतमपनयत्यपि तु दृष्टेनैव भोक्तृभोक्तव्यभोगादिप्रविलयद्वारेण तच्चैतत्तुल्यं सुकृतेपीति कथमेतदपि नोच्छिन्द्यात् । एवं च सति न शास्त्रीयत्वसाम्यमात्रमविरोधहेतुर्न हि प्रत्यक्षत्वसामान्यमात्रादविरोधो जलानलादीनाम् । (१)न च सुकृतशास्त्रमनर्थकमब्रह्मविदं प्रति तद्विधेरर्थवत्त्वात् । एवमवस्थिते च पाप्मश्रुत्या पुण्यमपि प्रहीतव्यम् । ब्रह्मज्ञानमपेक्ष्य पुण्यस्य निकृष्टफलत्वात्तत्फलं हि क्षयातिशयवत् । नह्येवं मोक्षो निरतिशयत्वान्नित्यत्वाच्च । दृष्टप्रयोगश्चायं पाप्मशब्दो वेदे पुण्यपापयोः, तद्यथा पुण्यपापे अनुक्रम्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यत्र, तस्मादविशेषेण पुण्यपापयोरश्लेषविनाशाविति सिद्धम् ॥१४॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

यद्यद्वैतज्ञानस्वभावालोचनयोत्तरपूर्वसुकृतदुष्कृतयोरश्लेषविनाशौ, हन्त आरब्धानारब्धकार्ययोरप्यविशेषेणैव विनाशः स्यात् , कर्तृकर्मादिप्रविलयस्योभयत्राविशेषात् , तन्निबन्धनत्वाच्च विनाशस्य । (२)न च संस्कारशेषात् कुलालचक्रभ्रमणवदनुवृत्तिः, वस्तुनः खल्वनुवृत्तिः, मायावादिनश्च पुण्यपापयोश्च मायामात्रविनिर्मितत्वेन मायानिवृत्तौ न पुण्यापुण्ये न तत्संस्कारो वस्तु सन्तीति कस्यानुवृत्तिः । न च रज्जौ सर्पादिविभ्रमजनिता भयकम्पादयो निवृत्तेऽपि विभ्रमे यथानुवर्तन्ते तथेहापीति युक्तम् । (३)तत्रापि सर्पासत्त्वेपि तज्ज्ञानस्य सत्त्वे तज्जनितभयकम्पादीनां तत्संस्काराणां च वस्तुसत्त्वेन निवृत्तेपि विभ्रमेऽनिवृत्तेः । अत्र तु न माया न तज्जः संस्कारो न तद्गोचर इति तुच्छत्वात्किमनुवर्तेत । न संस्कारशेषो न कर्मेत्यविशेषेणारब्धकार्याणामनारब्धकार्याणां च निवृत्तिः । न च 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत' इति श्रुतेर्देहपातप्रतीक्षारब्धकार्याणां युक्ता । नह्येषा श्रुतिरवधिभेदविधायिन्यपि तु क्षिप्रतापरा । यथा लोक एतावन्मे चिरं यत् स्नातो भुञ्जानश्चेति । नहि तत्र स्नानभोजने अवधित्वेन विधीयेते किन्तु क्षेपीयस्ता प्रतिपाद्यते । उभयविधाने हि वाक्यं भिद्येतावधिभेदः चिरता चेति प्राप्ते,

अभिधीयते—(४)यद्यप्यद्वैतब्रह्मतत्त्वसाक्षात्कारोऽनाद्यविद्योपदर्शितप्रपञ्चमात्रविरोधितया तन्मात्रविरोधितया तन्मध्यपतितसकलकर्मविरोधी । तथाप्यनारब्धविपाकं कर्मजातं प्रागित्येव समुच्छिनत्ति न त्वारब्धविपाकं सम्पादितजात्यायुर्विततपूर्वापरीभूतसुखदुःखोपभोगप्रवाहं कर्मजातं, तद्धि समुदाचरद्वृत्तितयेतरेभ्यः प्रसुप्तप्रवृत्तिभ्यो बलवदन्यथा देवर्षीणां हिर-

(१) यद्यदत्तफलमपि सुकृतं विद्या निवर्तयति तर्हि तद्विधेर्वैयर्थ्यं स्यादत आह नचेति ।

(२) ननु निवृत्तेऽपि सर्वकर्मणि तत्संस्कारात्कर्मानुवृत्तिः स्यादत आह नचेति ।

(३) वस्तुन एव संस्कारद्वारानुवृत्तिरिति व्याप्तेर्व्यभिचारमाशङ्क्योत्तरमपि तत्रापीति । रज्जुसर्पविषयज्ञानस्यास्माकं सत्यत्वात्तज्जन्यभयादीनां संस्कारवशादनुवृत्तिर्युक्ता, प्रस्तुते तु वैषम्यमित्याह अत्र तु नेति । न मायेति भ्रमनिषेधः ।

(४) यथा स्वयंप्रकाशब्रह्मसाक्षात्कारे नित्यभवनयोग्येपि नास्ति ब्रह्मेत्यादिभ्रमान्यथानुपपत्त्याऽविद्याऽऽच्छादिका कल्प्यते एवं हिरण्यगर्भादीनां ज्ञानिनामपि श्रुतिप्रतीतदेहधारणान्यथानुपपत्त्या तत्त्वसाक्षात्कारस्य प्रारब्धकर्मप्रतिबन्धाद्भोगसमाप्तौ सततमनुवर्तमानेन साक्षात्कारेणाविद्यालेशानिवृत्तिः, न च पुनस्तस्या अनुवृत्तिः, शाब्दबोधेन निवृत्तायामविद्यायां साक्षात्कारानिरस्यस्यैकदेशान्तरस्यादर्शनादित्यभिप्रायेण सिद्धान्तयति यद्यपीति ।

ण्यगर्भमनूद्दालकप्रभृतीनां विगलितनिखिलक्लेशजालावरणतया परितः प्रद्योतमानबुद्धिसत्त्वानां न ज्योग्जीविता(१) भवेत् । श्रूयते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता च महाकल्पकल्पमन्वन्तरादिजीविता च । न चैते महाधियो न ब्रह्मविदो ब्रह्मविदश्चाल्पपुण्यमेधसो मनुष्या इति श्रद्धेयम् । तस्मादागमानुसारतोऽस्ति प्रारब्धविपाकानां कर्मणां प्रक्षयाय तदीयसमस्तफलोपभोगप्रतीक्षा सत्यपि तत्त्वसाक्षात्कारे । (२)तावदेव चिरमिति न चिरता विधीयते अपि तु श्रुत्यन्तरसिद्धां चिरतामनूद्य देहपातावधिमात्रविधानम् । तदेतदभिसन्धायौचित्यमात्रतयाह स्म भगवान् भाष्यकारः—"न तावदनाश्रित्यारब्धकार्यं कर्माशय"मिति । न चेदं न जातु दृष्टं यद्विरोधिसमवाये(३) विरोध्यन्तरमनुवर्तेत इत्याह—"अकर्त्रात्मबोधोऽपी"ति । (४)यदा लोकेऽपि विरोधिनोः किञ्चित्कालं सहानुवृत्तिरुपलब्धा तदेहागमबलाद्दीर्घकालमपि भवन्तीति न शक्या निवारयितुम्, प्रमाणसिद्धस्य नियोगपर्यनुयोगानुपपत्तेः । तदेवं मध्यस्थान् प्रतिपाद्य ये भाष्यकारप्रातं मन्यन्ते तान्प्रत्याह—"अपि च नैवात्र विवदितव्य"मिति । (५)स्थितप्रज्ञश्च न साधकस्तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात्, निरतिशयस्तु स्थितप्रज्ञः, स च सिद्ध एव । न च ज्ञानकार्या भयकम्पादयो ज्ञानमात्रादनुत्पादात् । सर्पावच्छेदो हि तस्य भयकम्पादिहेतुः । स चासन्न निर्वचनीय इति कुतो वस्तुसतः कार्योत्पादः । न च कार्यमपि भयकम्पादि वस्तुसत्, तस्यापि विचारासहत्वेनानिर्वाच्यत्वात् । अनिर्वाच्याच्चानिर्वाच्योत्पत्तौ नानुपपत्तिः । यादृशो हि यक्षस्तादृशो बलिरिति सर्वमवदातम् ॥ १५ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

(६)यदि पुण्यस्याप्यश्लेषविनाशौ हन्त नित्यमप्यग्निहोत्रादि न कर्तव्यं योगमारुरुक्षुणा, तस्यापीतरपुण्यवद्विद्यया विनाशात्, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि'ति न्यायात् । न च 'विविदिषन्ति यज्ञेन दानेनेति' मोक्षलक्षणैककार्यतया विद्याकर्मणोरविरोधः, सहासम्भवेनैककार्यत्वासम्भवात् । नह्येतमात्मानं विदुषो विगलिताखिलकर्तृभोक्तृत्वादिप्रपञ्चविभ्रमस्य पूर्वोत्तरे(७) नित्ये क्रियाजन्ये पुण्ये सम्भवतः । तस्माद्विविदिषन्ति यज्ञेनेति वर्तमानापदेशो

---

(१) उज्ज्वलजीविता ।    (२) उभयविधाने वाक्यभेददोषं निरस्यन्नाह तावदेवेति ।

(३) सन्निधाने । यथा प्रतिबिम्बद्विचन्द्रभ्रमस्यौपाधिकत्वाच्चन्द्रैकत्वसाक्षात्कारेण सहानुवृत्तिरुपाधिनिवृत्तौ निवृत्तिस्तथा निरुपाधिकभ्रमस्यापि सान्तःकरणस्य कर्तृत्वादेस्तदुपादानाविद्यालेशस्य च ब्रह्मसाक्षात्कारेण सहानुवृत्तिः प्रारब्धोपरमे च निवृत्तिः श्रुतिप्रसिद्धा स्वीकर्तव्येत्यर्थः ।

(४) ननु द्विचन्द्रादिभ्रमस्याल्पकालं तत्त्वज्ञानेन सहानुवृत्तावपि कर्तृत्वादेः कथं बहुकालं विरोधिना सहानुवृत्तिरत आह यदेति ।

(५) भाष्ये स्थितप्रज्ञलक्षणनिर्देशो जीवन्मुक्तिसाधक उक्तस्तत्र स्थितप्रज्ञः साधको न साक्षात्कारवानिति मण्डनमिश्रोक्तं दूषणमुद्धरति स्थितप्रज्ञश्चेति ।

(६) उत्पन्नविद्याजन्यकर्मचयस्य प्रारब्धकर्मस्वपवाद उक्तः इदानीमप्रारब्धफलेष्वपि केषुचित्तस्यापवादोऽभिधीयत इति सङ्गत्यभिप्रायेण पूर्वपक्षमाह यदीति ।

(७) विद्याजन्मन इति शेषः । पूर्वस्य क्षयादुत्तरस्याश्लेषादित्यर्थः ।

ब्रह्मज्ञानस्य यज्ञादीनां वा स्तुतिमात्रं न तु मोक्षमाणस्य मुक्तिसाधनं यज्ञादिविधिरिति(१)प्राप्ते उच्यते—सत्यं न विद्यैककार्यत्वं कर्मणां परस्परविरोधेन सहासम्भवात्, विद्योत्पादकतया तु कर्मणामाराdुपकारकाणामस्तु मोक्षोपयोगः। न च कर्मणां विद्यया विरुध्यमानानां न विद्याकारणत्वं स्वकारणविरोधिनां कार्याणां बहुलमुपलब्धेः। तथा च विद्यालक्षणकार्योपायतया कार्यविनाश्यानामपि कर्मणामुपादानमर्थवत्। तदभावे तत्कार्यस्यानुत्पादेन मोक्षस्यासम्भवात्। (२)एवं च विविदिषन्ति यज्ञेनेति यज्ञसाधनत्वं विद्याया अपूर्वमर्थं प्रापयतः पञ्चमलकारस्य नात्यन्तपरोक्षवृत्तितया ज्ञानस्तुत्यर्थतया कथंचिद्व्याख्यानं भविष्यति। तदनेनाभिसन्धिनोक्तम् "ज्ञानस्यैव हि प्रापकं कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते"। (३)यत एव न विद्योदयसमये कर्मास्ति नापि परस्तात् अपि तु प्रागेव विद्यायाः, अत एव चातिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम्। एतदेव स्फोरयति—"नहि ब्रह्मविद" इति ॥ १६ ॥

सूत्रान्तरमवतारयितुं पृच्छति "किं विषयं पुनरिद"मिति। अस्योत्तरं सूत्रम्—

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

काम्यकर्मविषयमश्लेषविनाशवचनं शाखान्तरीयवचनं च तस्य पुत्रा दायमुपयन्तीति ॥१७॥

## यदेव विद्ययेति हि ॥ १८ ॥

अस्ति विद्यासंयुक्तं यज्ञादि 'य एवं विद्वान् यजेते'त्यादिकम्। अस्ति च केवलम्। तत्र (४)*यथा ब्राह्मणाय हिरण्यं दद्यादित्युक्ते विदुषे ब्राह्मणाय दद्यान्न ब्राह्मणब्रुवाय मूर्खायेति* विशेषप्रतिलम्भः तत्कस्य हेतोस्तस्यातिशयवत्त्वात्। एवं विद्यारहिताद्यज्ञादेर्विद्यासहितमतिशयवदिति तस्यैव परविद्यासाधनत्वमुपात्तदुरितक्षयद्वारा नेतरस्य। तस्माद्विविदिषन्ति यज्ञेनेत्यविशेषश्रुतमपि विद्यासहिते यज्ञादावुपसंहर्तव्यमिति प्राप्ते, ऽभिधीयते—(५)'यदेव विद्यया करोति तदेवास्य वीर्यवत्तरमि'ति तरबर्थश्रुतेर्विद्यारहितस्य वीर्यवत्तामात्रमवगम्यते। न च सर्वथाऽकिञ्चित्करस्य तदुपपद्यते। तस्मादस्त्यस्यापि कयापि मात्रया परविद्योत्पादोपयोग इति विद्यारहितमपि यज्ञादि परविद्यार्थिनाऽनुष्ठेयमिति सिद्धम् ॥१८॥

---

(१) न विज्ञानसाधनविधिरिति पूर्वपक्षाभिप्रायः।

(२) प्रमाणदृषगमुद्धरति एवं चेति।

(३) एवं निर्गुणविद्यापरत्वेनाधिकरणं व्याख्याय सगुणपरत्वेन वर्णयति यत एवेति।

(४) ननु तन्निर्धारणानियम इत्यनेनैतद्गतं स्वर्गादाविव विद्याफलसिद्धप्रतिबन्धस्य पृथक्सम्भवादित्यत आह यथेति। विद्यायुक्तकर्मप्रशंसया विद्याविहीननिषेधः कल्प्यते, न च विधिविरोधः केवलं कर्म कुर्यादित्यश्रवणात्कर्मस्वरूपविधश्च पारशाखिकाङ्गनियमे इत्योपास्तिनियमेऽप्युपपत्तेः अतश्च विद्यानां पुनरङ्गत्वोन्मज्जने तन्निवृत्त्यर्थं आरम्भ इत्यर्थः।

(५) यदि विद्यायुक्तं कर्म वीर्यवदित्युच्येत तत इतरस्यार्थादवीर्यत्वेन निन्दा गम्येत, नचैवमत्र हि तरप्प्रयोगेन विद्यासंयुक्तस्य वीर्यवत्त्वातिशयबोधनादर्थात्केवलकर्मणोऽपि वीर्यवत्त्वमात्रं विधिबलप्राप्तमभ्यनुज्ञायते।ऽतो न निन्दावकाश इति सिद्धान्तयति यदेवेति।

## भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

अनारब्धकार्य इत्यस्य नञः फलं भोगेन निवृत्तिं दर्शयत्यनेन सूत्रेणास्य (१)तूपपादनं पुरस्तादपकृष्य कृतमिति नेह क्रियते पुनरुक्तभयात् ॥ १९ ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ॥

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अथास्मिन् फलविचारलक्षणे वाङ्मनसि सम्पद्यत इत्यादिविचारो ऽसङ्गत इत्यत आह—"अथापरासु विद्यासु फलप्राप्तय" इति । (२)अपरविद्याफलप्राप्त्यर्थं देवयानमार्गार्थत्वादुत्क्रान्तेस्तद्गतो विचारः पारम्पर्येण भवति फलविचार इति नासङ्गत इत्यर्थः । नन्वयमुत्क्रान्तिक्रमो विदुषो नोपपद्यते 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त' इति श्रवणात् तत्कथमस्य विद्याधिकार इत्यत आह—"समाना हि विद्वदविदुषो"रिति । विषयमाह—"अस्ती"ति । विमृशति—"किमिहे"ति । विशयः संशयः । पूर्वपक्षमाह—"तत्र वागेवे"ति । श्रुतिलक्षणा । विशये संशये । सिद्धान्तसूत्रं पूरयित्वा पठति—"वाग्वृत्तिर्मनसि सम्पद्यत" इति । वृत्त्यध्याहारप्रयोजनं प्रश्नपूर्वकमाह—"कथमि"ति । उत्तराधिकरणपर्यालोचनेनैवं पूरितमित्यर्थः । तत्रतत्र धर्मिणो वाचः प्रलयविवक्षायां त्विह सर्वत्रैव परत्रेह चाविभागसाम्यात्किं परत्रैव विशिष्यादविभाग इति न त्वत्रापि(३) । तस्मादिहाविभागेनाविशिषतोऽत्र वृत्त्युपसंहारमात्रविवक्षा सूत्रकारस्येति गम्यते । सिद्धान्तहेतुं प्रश्नपूर्वकमाह—"कस्मादि"ति । (४)सत्यामेव मनोवृत्तौ वाग्वृत्तेरुपसंहारदर्शनात्, वाचस्तूपसंहारमदृष्टं नागमोऽपि गमयितुमर्हति, आगमप्रभवमुक्तिविरोधादागमो हि दृष्टानुसारतः प्रकृतौ हि विकाराणां लयमाह । न च वाचः प्रकृतिर्मनो येनास्मिन् विलीयेत, तस्माद्वृत्तिवृत्तिमतोरभेदविवक्षया वाक्पदं तद्वृत्तौ व्याख्येयम् । सम्भवति च वाग्वृत्तेर्वागप्रकृतावपि मनसि लयः, तथा तत्रतत्र दर्शनादित्याह—"वृत्त्युद्भवाभिभवा"विति ॥ १ ॥

## (५)अत एव च सर्वाण्यनु ॥ २ ॥

(१) ननु विद्ययैवारब्धकर्मणोऽपि लयः कुतो नेत्यत आह अस्य त्विति । पुरस्तात्—अनारब्धकार्ये इत्यत्रैवेत्यर्थः । प्रारब्धकर्मफलभोगानन्तरं मोक्षेऽपि तत्कर्मजन्यानेकदेहसम्भवात्तत्र च विद्याप्रमोषसम्भवात्तत्कृतकर्मणामश्लेषाभावेन मुक्त्यर्थत्वं विदुषो जन्मान्तरस्य संस्कारे प्रमोषानापादकत्वं च कल्पनीयमतः प्रारब्धभोगान्ते मुक्तिरवश्यंभाविनीति सिद्धान्त्यभिप्रायः ।

(२) सगुणविद्याफलस्यार्चिरादिगतिभाव्यस्य ब्रह्मलौकिकस्य प्राप्त्यसम्भवात् तदर्थमुत्क्रान्तिवर्णनं व्याविब्रह्मात्मभावे निर्गुणविद्याफले निषेधार्थं चेत्यभिप्रेत्य पादस्याध्यायसङ्गतिमाह अपरेति ।

(३) किं विशिष्यादित्यनुषज्यते ।

(४) वाक्छब्दो वृत्तिलक्षण इति सिद्धान्ताभिप्रायमाह सत्यामेवेति । मनोवृत्तिसत्त्वकथनं वाग्वृत्तिलये हेतुत्वोपपत्त्यर्थम् अन्यथा तत्प्रलीनवृत्तिकं न हेतुर्भवेदिति ।

(५) वाङ्मनसीत्युदाहृतवाक्ये वाच एव श्रवणादिन्द्रियान्तराणां मनसि वृत्तिलय इति भ्रमापनोदाया—

यतश्च प्रकृतिविकारभावाभावान्मनसि न स्वरूपलयो वाचोऽपि तु वृत्तिलयः, अत एव सर्वेषां चक्षुरादीनामिन्द्रियाणां सत्येव सवृत्तिके मनसि वृत्तेरनुगतिर्लयो न स्वरूपलयः, वाचस्तु पृथक् ग्रहणं पूर्वसूत्रे उदाहरणापेक्षं न तु तदेवेह विवक्षितमित्यर्थः ॥ २ ॥

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

यदि स्वप्रकृतौ विकारस्य लयस्ततो मनः प्राणे सम्पद्यते इत्यत्र मनःस्वरूपस्यैव प्राणे सम्पत्त्या भवितव्यम् । तथाहि मन इति नोपचारतो व्याख्यानं भविष्यति, सम्भवति हि प्रकृतिविकारभावः प्राणमनसोरन्नमयं हि सोम्य मन इत्यत्रान्नात्मतामाह मनसः श्रुतिरापोमयः प्राण इति च प्राणस्याबात्मताम् , (१)प्रकृतिविकारयोस्तादात्म्यात्तथा च प्राणो मनसः प्रकृतिरिति मनसो वृत्तिमतः प्राणे लय इति प्राप्ते, ऽभिधीयते—सत्यमापोऽन्नमसृजन्त इति श्रुतेरबन्नयोः प्रकृतिविकारभावोऽवगम्यते, न तु तद्विकारयोः प्राणमनसोः, (२)स्वयोनिप्रणाडिकया तु मिथो विकारयोः प्रकृतिविकारभावाभ्युपगमे सङ्करादतिप्रसङ्गः स्यात । तस्माद्यो यस्य साक्षाद्विकारस्तस्य तत्र लय इत्यन्नस्याप्सु लयो न त्वब्विकारे प्राणे ऽन्नविकारस्य मनसस्तथा चात्रापि मनोवृत्तेर्वृत्तिमति प्राणे लयो न तु वृत्तिमतो मनस इति सिद्धम् ॥ ३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

प्राणस्तेजसीति तेजःशब्दस्य भूतविशेषवचनत्वाद्विज्ञानात्मनि चाप्रसिद्धेः प्राणस्य जीवात्मन्युपगमानुगमावस्थानश्रुतीनां च तेजोद्वारेणाप्युपपत्तेस्तेजसि(३) समापन्नवृत्तिः खलु प्राणस्तेजस्तु जीवात्मन्यवतिष्ठते, तद्द्वारा जीवात्मसमापन्नवृत्तिः प्राण इत्युपपद्यते, तस्मात्तेजस्येव प्राणवृत्तिप्रविलय इति प्राप्ते, ऽभिधीयते—स प्रकृतः प्राणोऽध्यक्षे विज्ञानात्मन्यवतिष्ठते तत्तन्त्रवृत्तिर्भवति । कुतः ? उपगमानुगमावस्थानेभ्यो हेतुभ्यस्तत्रोपगमश्रुतिमाह—'एवमेवेममात्मानमि'ति । अनुगमनश्रुतिमाह—"तमुत्क्रामन्त"मिति । अवस्थानश्रुतिमाह—"सविज्ञानो भवती चे"ति। विज्ञायतेऽनेनेति विज्ञानं पञ्चवृत्तिप्राणसहित इन्द्रियग्रामस्तेन सहावतिष्ठत इति सविज्ञानः । चोदयति—"ननु प्राणस्तेजसीति श्रूयत" इति । (४) अधिकावापो ऽशब्दार्थव्याख्यानम् । परिहरति—"नैष दोष इति" । यद्यपि प्राणस्तेजसीत्यतस्तेजसि प्राणवृत्तिलयः प्रतीयते, तथापि सर्वशाखाप्रत्ययत्वेन विद्यानां श्रुत्यन्तरालोचनया विज्ञानात्मनि लयोऽवगम्यते । न च तेजसस्तत्र लय इति साम्प्रतम् । तस्यानिलाकाशक्रमेण परमात्मनि तत्त्वलयावगमात् । तस्मात्तेजोग्रहणेनोपलक्ष्यते तेजःसहचरितदेहबीजभूतपञ्चभूतसूक्ष्मपरिचाराध्यक्षो जीवात्मा तस्मिन्प्राणवृत्तिरप्येतीति ॥ ४ ॥

---

वान्तरसूत्रमत एवेति । (१) प्राणमनसोरबन्नात्मत्वे हेतुमाह प्रकृतीति ।

(२) प्राणमनसोः किं साक्षात्प्रकृतिविकारभाव उत स्वप्रकृतिभूताबन्नद्वारेण, तत्राद्यं निरस्याऽन्त्यं निरस्यन्नाह स्वयोनीति । एवं हि घटस्यापि शरावे लयापत्तिरित्यर्थः ।

(३) तेजोद्वारेणेति उपपादयति तेजसीति । प्राणवृत्तिलयात्प्राणस्य जीवे वृत्तिलय उपचर्यते इत्यर्थः ।

(४) कथं प्राणोऽध्यक्ष इति अधिकावापः क्रियत इति भाष्यम् , तदनुपपन्नम् , तेजःशब्देन तेजोध्यक्षजीवलक्षणासम्भवादधिकशब्दप्रक्षेपाप्रातेरत आहाधिकावापोऽशब्दार्थेति । श्रौतोऽर्थो हि शब्दे भाति अतोऽश्रौतार्थप्रक्षेपोऽधिकावाप इत्यर्थः ।

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

चोदयति—"ननु चेयं श्रुति"रिति ( पृ०९३३पं०४ )। (१) तेजःसहचरितानि भूतान्युपलक्षयन्ती तेजःशब्देनाध्यक्षे तु किमायातं तस्य तदसाहचर्यादित्यर्थः। परिहरति–"सोऽध्यक्ष इत्यध्यक्षापी"ति। यदा ह्ययं प्राणोऽन्तरालेऽध्यक्षं प्राप्या(२)ध्यक्षसम्पर्कवशादेव तेजःप्रभृतीनि भूतसूक्ष्माणि प्राप्नोति तदोपपद्यते प्राणस्तेजसीति। अत्रैव दृष्टान्तमाह–"योपि स्रुघ्नादि"ति ॥ ५ ॥

सूत्रान्तरमवतारयितुं पृच्छति–"कथं तेजःसहचरितेष्वि"ति ॥

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

अत्र भाष्यकारोऽनुमानदर्शनमाह–"कार्यस्य शरीरस्ये"ति। (३) स्थूलशरीरानुरूपमनुमेयं सूक्ष्ममपि शरीरं पञ्चात्मकार्यमित्यर्थः। दर्शयत इति सूत्रावयवं व्याचष्टे "दर्शयतश्चैतमर्थमि"ति। प्रश्नप्रतिवचनाभिप्रायं द्विवचनं श्रुतिस्मृत्यभिप्रायं वा। अण्व्यो मात्राः सूक्ष्मा दशार्धानां पञ्चभूतानामिति। श्रुत्यन्तरविरोधं चोदयति–"ननु चोपसंहृतेषु वागादिष्वि"ति ( पृ०९३४पं०३ )। कर्माश्रयतेति प्रतीयते न भूताश्रयतेत्यर्थः। परिहरति–"अत्रोच्यत"इति। ग्रहा इन्द्रियाणि अतिग्रहास्तद्विषयाः। कर्मणा प्रयोजकत्वेनाश्रयत्वं भूतानां तूपादानत्वेनेत्यविरोधः। प्रशंसाशब्दोपि कर्मणो प्रयोजकतया प्रकृष्टमाश्रयत्वं भूते सति निकृष्ट आश्रयान्तरे तदुपपत्तेरित्याह "प्रशंसाशब्दादपि तत्रे"ति ॥ ६ ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

(४)अत्रामृतत्वप्राप्तिश्रुतेः परविद्यावन्तं प्रत्येतदिति मन्वानस्य पूर्वः पक्षः। विषयानां सन्दिहानानां पुंसाम्। चोदयति–"ननु विद्याप्रकरण"इति। परिहरति—"न स्वापादिवदि"ति ( पृ०९३५पं०१ )। परविद्ययैवामृतत्वप्राप्त्यवस्थामाख्यातुं तत्सधर्माश्च(५)तद्विधर्माश्चान्या अप्यवस्थास्तदनुगुणतया व्याख्यायन्ते। साधर्म्यवैधर्म्याभ्यां हि स्फुटतरः प्रतिपिपादयिषिते वस्तुनि प्रत्ययो भवतीति। (६)न तु विदुषः सकाशाद्विशेषवन्तोऽविद्वांसो विधीयन्ते येन विद्याप्रकरणव्याघातो भवेदपि तु विद्यां प्रतिपादयितुं लोकसिद्धानां

---

(१) यद्यप्यत्र चोद्यभाष्ये प्राणसहितस्याध्यक्षस्य भूतेष्ववस्थितिराक्षिप्यत इति प्रतिभाति, तथापि भूतसहिताध्यक्षे प्राणस्थितिराक्षिप्यत इत्येवम्परतया व्याख्येयमित्याह तेजःसहचरितानीति।

(२) परिहारभाष्येऽपि अध्यक्षं प्राप्य पूर्वव्यापारान्तरात्तेजआदिभूतप्राप्तिः प्राणस्य नाभिधीयते उपहितप्राप्तेरुपाधिप्राप्तिनान्तरीयकत्वादित्यभिप्रेत्याहाध्यक्षसम्पर्कवशादिति।

(३) प्राण एकस्मिन्नेव तेजःसूक्ष्मे नावतिष्ठत इति, अनेकस्य कार्यस्यानेकात्मकत्वादिति च हेतुप्रतिज्ञयोर्वैयधिकरण्यमाशङ्क्याह स्थूलेति। कार्यानेकात्मकत्वेनानुमितं कारणानेकत्वमेकत्र प्राणस्थित्यभावे हेतुरित्यर्थः। (४) अत्र सगुणस्यापि ब्रह्मणो व्यापित्वान्न तत्प्राप्त्युत्क्रान्त्यपेक्षेति पूर्वपक्षः।

(५) तस्याः मुक्तेः सधर्मा अवस्थाः सुषुप्त्याद्याः, विधर्मा जाग्रदाद्याः।

(६) ननु एता अपि प्रतिपाद्यन्तां किं मुक्त्यर्थतया तदनुवादेनेत्यत आह नत्विति। येन हेतुना विद्याप्रकरणे व्याघातस्तेन विदुषः सकाशादविद्वांस उत्क्रान्त्यादिविशेषवन्तो न प्रतिपाद्यन्ते नापि विद्वान् अमृतत्वश्रुतिविरोधादेवेत्यर्थः।

तदनुगुणतया तेषामनुवाद इति ।

एवं प्राप्ते ऽभिधीयते—"**समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्वदविदुषोः**" कुतः ? "**आसृत्युपक्रमात्**" । सृतिः सरणं देवयानेन पथा कार्यब्रह्मलोकप्राप्तिरासृतेराकार्यब्रह्मलोकप्राप्तेः । अयं विद्योपक्रम आरम्भः प्रयत्न इति यावत् । तस्मादेतदुक्तं भवति—नेयं परा विद्या यतो न मोक्षनाडीद्वारमाश्रयते, अपि त्वपरविद्येयम् । न चास्यामात्यन्तिकः क्लेशप्रदाहो यतो न तत्रोत्क्रान्तिर्भवेत् । तस्मादपरविद्यासामर्थ्यादापेक्षिकमाभूतसम्प्लवस्थानममृतत्वं प्रेप्सते (१) पुरुषार्थाय सम्भवत्येव उत्क्रान्तिभेदवान् सृत्युपक्रमोपदेशः । (२)उपपूर्वादुष दाह इत्यस्मादुपोष्येति प्रयोगः ॥ ७ ॥

**तदाऽऽपीतेः संसारव्यपदेशात् ॥ ८ ॥**

(३) सिद्धां कृत्वा बीजभावावशेषां परमात्मसम्पत्तिं विद्वदविदुषोरुत्क्रान्तिः समर्थिता, सैव सम्प्रति चिन्त्यते—किमात्मनि तेजःप्रभृतीनां भूतसूक्ष्माणां तत्त्वप्रविलय एव सम्पत्तिराहोस्विद्बीजभावावशेषेति । यदि पूर्वः पक्षः, नोत्क्रान्तिः । अथोत्तरस्ततः सेति । तत्राप्रकृतौ न विकारतत्त्वप्रविलयो यथा मनसि न वागादीनाम् । सर्वस्य च जनिमतः प्रकृतिः परा देवतेति तत्त्वप्रलय एवात्यन्तिकः स्यात्तेजःप्रभृतीनामिति प्राप्ते, ऽभिधीयते—

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्ये ऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥

इत्यविद्यावतः संसारमुपदिशति श्रुतिः, सेयमात्यन्तिके तत्त्वलये नोपपद्यते । न च प्रायणस्यैवैष महिमा विद्वांसमविद्वांसं चाप्रतीति साम्प्रतमित्याह—"**अन्यथा हि सर्वः प्रायणसमय एवे**"ति ( पृ०९३६पं०११ ) । विधिशास्त्रं ज्योतिष्टोमादिविषयमनर्थकं, प्रायणादेवात्यन्तिकप्रलये पुनर्भवाभावात् । मोक्षशास्त्रं चाप्रयत्नलभ्यात् प्रायणादेव जन्तुमात्रस्य मोक्षप्राप्तेः । न केवलं शास्त्रानर्थक्यमयुक्तश्च प्रायणमात्रान्मोक्ष इत्याह—"**मिथ्याज्ञाने**"ति । नासति निदानप्रशमे प्रशमस्तद्वतो युज्यत इत्यर्थः ॥ ८ ॥

अथेतरभूतसहितं तेजो जीवस्याश्रयभूतमुत्क्रमद्देहाद्देहान्तरं वा सञ्चरत्कस्मादस्माभिर्न निरीक्ष्यते, तद्धि महत्त्वाद्वानेकद्रव्यत्वाद्वा(४) रूपवदुपलब्धव्यम्, कस्मान्न मूर्तान्तरैः प्रतिबध्यत इति शङ्कामपाकर्तुमिदं सूत्रम्—

**सूक्ष्मं परिमाणतश्च तथोपलब्धेः ॥ ९ ॥**

चकारो भिन्नक्रमः । न केवलमापीतेस्तदवतिष्ठते । तच्च सूक्ष्मं स्वरूपतः परिमाण-

---

( १ ) प्राप्तुमिच्छति ।

( २ ) अनुपोष्येति सूत्रांशस्य वस निवास इत्यस्माद्धातोर्न सिद्धिस्तथासति तस्य मुक्त्वेत्यर्थः स्यादतो व्याचष्टे उपेति ।

( ३ ) ननु वर्णितोत्क्रान्तिसामर्थ्यादेव सविशेषस्तेजआदिलयः सिद्ध्यति किं विचारेणेत्यत आह सिद्धां कृत्वेति । उत्क्रान्तिः सावशेषलयं विना न सम्भवति स एवाद्यापि न सिद्ध इति समर्थ्यत इत्यर्थः ।

( ४ ) अनेन लिङ्गशरीरं चक्षुःस्पर्शनाभ्यामुपलब्धव्यं मूर्तान्तरैः प्रतिहन्येत च महत्त्वे सति रूपवत्त्वात् बहुद्रव्यारब्धत्वे सति रूपवत्त्वाद्वा कलशवदिति अनुमानद्वयं द्रष्टव्यं पूर्वपक्षिमतेनेति सूचितम् ।

तथ । स्वरूपमेव हि तस्य (१)तादृशमदृश्यम्, यथा चाक्षुषस्य तेजसो महतोऽपि । अदृष्टवशादनुद्भूतरूपस्पर्शं हि तत् । परिमाणतः सौक्ष्म्यं यतो नोपलभ्यते, यथा त्रसरेणवो जालसूर्यमरीचिभ्यो ऽन्यत्र । प्रमाणतस्तथोपलब्धिरिति व्याचष्टे—"तथाहि नाडीनिष्क्रमणे"ति । आदिग्रहणेन चक्षुषो वा मूर्ध्नो वा ऽन्येभ्यो वा शरीरदेशेभ्य इति संगृहीतम् । अप्रतिघाते हेतुमाह—"स्वच्छत्वाच्चे"ति । एतदपि(२) हि सूक्ष्मत्वेनैव संगृहीतम् । (३)यथा हि काचाभ्रपटलं स्वच्छस्वभावस्य न तेजसः प्रतिघातकम्, एवं सर्वमेव वस्तुजातमस्येति ॥ ९ ॥

## नोपमर्देनातः ॥ १० ॥

अत एव च स्वच्छतालक्षणात्सौक्ष्म्यादशक्तत्वापरनाम्नः(४) ॥ १० ॥

## अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

उपपत्तिः प्राप्तिः । एतदुक्तं भवति—दृष्टश्रुताभ्यामूष्मणोऽन्वयव्यतिरेकाभ्यामस्ति स्थूलाद्देहादतिरिक्तं किञ्चित्, तच्चागमात्सूक्ष्मं शरीरमिति ॥ ११ ॥

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

अधिकरणतात्पर्यमाह—"अमृतत्वं चानुपोष्येत्यतो विशेषणादि"ति ( पृ० ९३७ पं० १२ )। विषयमाह—"अथाकामयमान"इति । सिद्धान्तिमतमाशङ्क्य तन्निराकरणेन पूर्वपक्षी स्वमतमवस्थापयति—"अतः पराविद्याविषयात्प्रतिषेधादि"ति । यदि हि प्राणोपलक्षितस्य सूक्ष्मशरीरस्य जीवात्मनः स्थूलशरीरादुत्क्रान्तिं प्रतिषेधेत् श्रुतिः तत एतदुपपद्यते, न त्वेतदस्ति । 'न तस्मात्प्राणा उत्क्रामन्ती'ति हि तदा सर्वनाम्ना प्रधानावमर्शिनाभ्युदयनिःश्रेयसाधिकृतो देही प्रधानं परामृश्यते । तथा च तस्माद्देहिनो न प्राणाः सूक्ष्मं शरीरमुत्क्रामन्त्यपि तु तत्सहितः क्षेत्रज्ञ एवोत्क्रामतीति गम्यते । (५)स पुनरतिक्रम्य ब्रह्मनाड्या संसारमण्डलं हिरण्यगर्भपर्यन्तं सलिङ्गो जीवः परस्मिन्ब्रह्मणि लीयते तस्मात्परामपि देवतां विदुष उत्क्रान्तिरत एव मार्गश्रुतयः । स्मृतिश्च मुमुक्षोः शुकस्यादित्यमण्डलप्रस्थानं दर्शयतीति प्राप्तम् ॥ १२ ॥

एवं प्राप्ते प्रत्युच्यते—

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

## स्मर्यते च ॥ १४ ॥

नायं देह्यपादानस्य प्रतिषेधः, अपि तु देहापादानस्य । तथा ह्यार्तभागप्रश्नोत्तरे ह्येकस्मिन् पक्षे (६)संसारिण एव जीवात्मनो ऽनुत्क्रान्तिं परिगृह्य न तर्ह्येव मृतः प्राणानामनु-

---

( १ ) अनुद्भूतरूपस्पर्शम् । ( २ ) स्वच्छत्वमपि सूक्ष्मत्वेन संगृहीतमुपलक्षितमित्यर्थः ।

( ३ ) एवं चाक्षुषत्वानुमाने उद्भूतरूपत्वमुपाधिमनैकान्तिकत्वं चोक्त्वा प्रतीघातानुमानेऽप्यस्वच्छत्वमुपाधिमनैकान्तिकत्वं चाह यथेति । ( ४ ) नोपमृद्यत इति शेषः ।

( ५ ) नन्वेवं विदुषोऽप्युत्क्रान्तिश्चेत्कथं तस्य मुक्तिसिद्धिरत आह स पुनरिति ।

( ६ ) सिद्धान्ते । हिरण्यगर्भपर्यन्तमुत्क्रान्तस्य जीवस्य लिङ्गशरीरात्प्रलय इति यदुक्तं तत्राह संसारिण एवेति । यत्रायं पुरुषो म्रियत इति निर्देशात्संसारे वर्तमानस्येत्यर्थः ।

त्क्रान्तेरिति स्वयमाशङ्कय प्राणानां प्रविलयं प्रतिज्ञाय तत्सिद्ध्यर्थमुत्क्रान्त्यवधेरुच्छ्वयनाध्माने ब्रुवन्यस्योच्छ्वयनाध्माने तस्य तदवधित्वमाह । शरीरस्य च ते इति शरीरमेव तदपादानं गम्यते । नन्वेवमप्यस्त्यविदुषः संसारिणो विदुषस्तु किमायातमित्यत आह—"**तत्सामान्यादि**"ति ( पृ० ९३८ पं० १५ )। ननु तदा सर्वनाम्ना प्रधानतया देही परामृष्टः तत्कथमत्र देहावगतिरित्यत आह-(१)"**अभेदोपचारेण**" देहदेहिनोर्देहिपरामर्शिना सर्वनाम्ना देह एव परामृष्ट इति । पञ्चमीपाठे व्याख्येयम् । षष्ठीपाठे तु नोपचार इत्याह—"**येषां तु षष्ठी**"ति ( पृ० ९३९ पं० २ )। अपि च प्राप्तिपूर्वः प्रतिषेधो भवति नाप्राप्ते, अविदुषो हि देहादुपक्रमणं दृष्टमिति विदुषोऽपि तत्सामान्याद्देहादुपक्रमणे प्राप्ते प्रतिषेध उपपद्यते न तु प्राणानां जीवावधिकं क्वचिदुत्क्रमणं दृष्टं येन तन्निषिध्यते । (२)अपि चाद्वैतपरिभावनाभुवा प्रसंख्यानेन निर्लुठितनिखिलप्रपञ्चावभासजातस्य गन्तव्याभावादेव नास्ति गतिरित्याह—"**न च ब्रह्मविद**"इति। अपदस्य(३) हि ब्रह्मविदो मार्गे पदैषिणोऽपि देवा इति योजना । चोदयति—"**ननु गतिरपी**"ति । परिहरति—"**सशरीरस्यैवायं योगबलेन**" ( पृ० ९४० पं० ३ )। अपरविद्याबलेनेति ॥ १३-१४ ॥

## तानि परे तथा ह्याह ॥ १५ ॥

प्रतिष्ठाविलयनश्रुत्योर्विप्रतिपत्तेर्विमर्शस्तमपनेतुमयमारम्भः । तानि पुनः प्राणशब्दोदितानीन्द्रियाण्येकादश सूक्ष्माणि च भूतानि पञ्च । "**ब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनी**"ति । आरम्भबीजं विमर्शमाह—"**ननु गताः कला**" इति । (४)प्राणमनसोरेकप्रकृतित्वं विवक्षित्वा पञ्चदशत्वमुक्तम् । अत्र श्रुत्योर्विषयव्यवस्थया विप्रतिपत्त्यभावमाह—"**सा खल्वि**"ति । व्यवहारो लौकिकः । सांव्यवहारिकप्रमाणापेक्षेयं श्रुतिः, न तात्त्विकप्रमाणापेक्षा, इतरा तु एवमेवास्य परिद्रष्टुरित्यादिका विद्वत्प्रतिपत्त्यपेक्षा तात्त्विकप्रमाणापेक्षा । तस्माद्विषयभेदादविप्रतिपत्तिः श्रुत्योरिति ॥ १५ ॥

## अविभागो वचनात् ॥ १६ ॥

निमित्तापाये नैमित्तिकस्यात्यन्तिकापायः, अविद्यानिमित्तश्च विभागो नाविद्यायां विद्यया समूलघातमपहतायां सावशेषो भवितुमर्हति । तथापि प्रविलयसामान्यात् सावशेषताशङ्कामतिमन्दामपनेतुमिदं सूत्रम् ॥ १६ ॥

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥१७॥

अपरविद्याविदोऽविदुषश्चोत्क्रान्तिरुक्ता । तत्र किं विद्वानविद्वांश्चाविशेषेण मूर्धादिभ्य उत्क्रामत्याहो विद्वान्मूर्धस्थानादेव, अपरे तु स्थानान्तरेभ्य इति । अत्र विद्यासामर्थ्यमप-

---

( १ ) उत्क्रान्त्यवधेरुच्छ्वयनादिभिर्निर्देशस्यान्यथा नेतुमशक्यत्वात् तद्दर्शनोपचार इत्यर्थः ।

( २ ) पञ्चमीपाठे उपचाराश्रयणे न्यायद्वयमाहापि चेति ।

( ३ ) गन्तव्यान्तराभाववतः । इदं भाष्योदाहृतस्मृतिव्याख्यानम् ।

( ४ ) ननु बाह्येन्द्रियदशकं भूतपञ्चकं मन इति षोडशकलानां सम्भवात्कथं श्रुतौ पञ्चदशत्वोक्तिस्तत्राह प्राणेति । प्राणस्य पार्थिवत्वात् मनसश्चान्नमयत्वश्रुतेरेकप्रकृतित्वाभिप्रायेण पञ्चदशत्वोक्तिरिति भावः ।

स्यतः पूर्वपक्षः । तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषितो विज्ञानात्मन ओक आयतनं हृदयं तस्याग्रं तस्य ज्वलनं(१) यत् तत्प्रकाशितद्वारो विनिष्क्रमद्वारो विद्वान्मूर्धस्थानादेव निष्क्रामति नान्येभ्यश्चक्षुरादिस्थानेभ्यः । कुतो? विद्यासामर्थ्यात् । हार्दविद्यासामर्थ्यादुत्कृष्टस्थानप्रतिलम्भाय हि हार्दविद्योपदेशः मूर्धस्थानादनिष्क्रमणे च नोत्कृष्टदेशप्राप्तिरथ स्थानान्तरेभ्योऽप्युत्क्रामन्कस्माल्लोकमुत्कृष्टं न प्राप्नोतीत्यत आह—तच्छेषगत्यनुस्मृतियोगाच्च ( पृ० ९४२ पं० ११ )। हार्दविद्याशेषभूता हि मूर्धन्या नाडी गत्यै उपदिष्टा, तदनुशीलनेन खल्वयं जीवो हार्देन सुपासितेन ब्रह्मणानुगृहीतस्तस्यानुस्मरंस्तद्भावमापन्नो मूर्धन्ययैव शताधिकया नाड्या निष्क्रामति । (२)हृदयादुद्गता हि ब्रह्मनाडी भास्वरा तालुमूलं भित्वा मूर्धानमेत्य रश्मिभिरेकीभूता आदित्यमण्डलमनुप्रविष्टा तामनुशीलयतस्तयैवान्तकाले निर्गमनं भवतीति ॥ १७ ॥

## रश्म्यनुसारी ॥ १८ ॥

रात्रावहनि चाविशेषेण रश्म्यनुसारी सन्नादित्यमण्डलं प्राप्नोतीति सिद्धान्तपक्षप्रतिज्ञा ॥ १८ ॥

पूर्वपक्षमाशङ्कते सूत्रावयवेन—

## निशि नेति चेत् न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च ॥ १९ ॥

सूत्रावयवान्तरेण निराकरोति—यावद्देहभावी हि शिराकिरणसम्पर्कः प्रमाणान्तरा(३)त्प्रतीयते । दर्शयति चैतमर्थं श्रुतिरप्यविशेषेण—अमुष्मादादित्यात् प्रतायन्ते रश्मयस्त आसु नाडीषु सृप्ता भवन्ति य आभ्यो नाडीभ्यः प्रतायन्ते विस्तार्यन्ते ते रश्मयोऽमुष्मिन्नादित्ये सृप्ताः । "प्रतापादिकार्यदर्शनादिति" ( पृ० ९४४ पं० ५ )। (४)आदिग्रहणेन चन्द्रातपः संगृह्यते । चन्द्रमसा खल्वम्मयेन सम्बध्यमानानां सौरीणां भासां चन्द्रिकात्वम् , तस्मादप्यस्ति निशि सौर्यरश्मिप्रचार इति । ये त्वाहुः—'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छेदिति निरपेक्षश्रवणाद्रात्रौ प्रेते नास्ति रश्म्यपेक्षेति'—तान्प्रत्याह "यदि च रात्रौ प्रेत"इति । न ह्येतद्विशेष्याधीयते ऽध्येतारः । ये तु मन्यन्ते 'विद्वानपि रात्रिप्रायणापराधेन नोर्ध्वमाक्रमत' इति, तान्प्रत्याह—"अथ तु विद्वानपी"ति । नियतवरफलसम्बन्धेन विहिता विद्या न पाक्षिकफला युक्तेति । ये तु रात्रौ प्रेतस्य विदुषा ऽहरपेक्षां सूर्यमण्डलप्राप्तिमाचक्षते तन्मतमाशङ्क्याह—"अथापि रात्रावि"ति । (५)यावत्तावदुपसम्बन्धेनानपेक्षा गतिः श्रुता न चापेक्षा शक्यावगमोपबन्धविरोधादिति १९

## अतश्चायनेऽपि हि दक्षिणे ॥ २० ॥

---

( १ ) भविष्यत्कर्मप्रकाशः ।

( २ ) ननु मूर्धन्यनाड्या देहमात्रव्याप्तित्वात्कथं तया ब्रह्मलोकप्राप्तिस्तत्राह हृदयादुद्गतेति । ता आसु नाडीषु सृप्ता इति श्रुतिसिद्धत्वादित्यर्थः ।　( ३ ) निशि ऽप्यगताग्राहकादित्यर्थः ।

( ४ ) चन्द्रगतप्रकाशान्यथानुपपत्त्याऽस्ति रात्रावपि सूर्यरश्मिरित्याहादिग्रहणेनेति ।

( ५ ) रात्रिमृतस्याहःप्रतीक्षा नास्तीत्यत्र हेतुमाह यावत्तावदिति । स यावत्क्षिप्येन्मनस्तावदादित्यं

अत एवेत्युक्तहेतुपरामर्श इत्याह—"अत एवापेक्षानुपपत्ते"रिति ( पृ० ९४५ पं० १ )। पूर्वपक्षबीजमाह—"उत्तरायणप्राशस्त्ये"ति। अपनोदमाह—"प्राशस्त्यप्रसिद्धिरि"ति। (१)अतःपदपरामृष्टहेतुबलादविदुषो मरणं प्रशस्तमुत्तरायणे विदुषस्तूभयत्राप्यविशेषो विद्यासामर्थ्यादिति। विदुषोपि च भीष्मस्योत्तरायणप्रतीक्षणमविदुष आचारं ग्राहयति 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन'इति न्यायात्। आपूर्यमाणपक्षादित्या या च श्रुतिर्न कालविशेषप्रतिपत्त्यर्था, अपि त्वातिवाहिकीर्देवताः प्रतिपादयतीति वक्ष्यति। तस्मादविरोधः॥ २०॥

सूत्रान्तरावतरणाय चोदयति—"ननु च यत्र काले त्वि"ति। काल एवात्र प्राधान्येनोच्यते न त्वातिवाहिकी देवतेत्यर्थः॥

**योगिनः प्रति स्मर्यते स्मार्ते चैते॥ २१॥**

स्मार्तीमुपासनां प्रत्ययं स्मार्तः कालभेदविनियोगः प्रत्यासत्तेः न तु श्रौतीं प्रतीत्यर्थः। अत्र यदि स्मृतौ कालभेदविधिः श्रुतौ चाग्निज्योतिरादिविधिस्तत्राग्न्यादीनामतिवाहिकतया विषयव्यवस्थ(२)या विरोधाभाव उक्तः। अथ तु प्रत्यभिज्ञानं तथापि यत्र काल इत्यत्रापि कालाभिधानद्वारेणातिवाहिक्य एव देवता उक्ता इत्यविरोध एवेति॥ २१॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभाष्यविभागे भामत्यां
चतुर्थस्याध्यायस्य द्वितीयः पादः॥

---

## अर्चिरादिना तत्प्रथितेः॥ १॥

भिन्नप्रकरणस्थत्वाद्भिन्नोपासनयोगतः।
अनपेक्षा मिथो मार्गास्त्वरातो ऽश्रुतेरपि॥

गन्तव्यमेकं नगरं प्रति वक्रेणाध्वना गतिमपेक्ष्य ऋजुना ऽध्वना गतिस्त्वरावती कल्प्यते। एकमार्गत्वे तु किमपरमपेक्ष्य त्वरा स्यात्। अथ तैरेव रश्मिभिरित्यवधारणं नोपपद्यते पथ्यन्तरस्य निवर्तनीयस्याभावात्, तस्मात्परानपेक्षा एवैते पन्थान एकब्रह्मलोकप्राप्त्युपाया व्रीहियवाविव (३)विकल्पेरन्निति प्राप्ते,

प्रत्युच्यते—

(४)एकत्वेऽपि पथोनेकपर्वसंसर्गसम्भवात्।
गौरवाच्चैव नानात्वं प्रत्यभिज्ञानलिङ्गतः॥

---

गच्छतीति श्रुतौ यावच्छब्दोपबन्धेन शैघ्र्यपरेणानपेक्षागतिः श्रुता एवं चापेक्षा न शक्यावगमा यावत्तावच्छब्दयोरुपबन्धेनैव निरोधादिति भावः। (१) प्राशस्त्यप्रसिद्धेरबुधविषयत्वेन सङ्कोचे हेतुमाह अतःपदेति।

(२) स्मार्तकालविधेर्निर्गुणपुरुषमात्रविवेकचिन्तावृत्तिनिरोधात्मकसांख्ययोगविषयत्वेन श्रौतातिवाहिकदेवताविधेः सगुणविद्याविषयत्वेन च व्यवस्थयेत्यर्थः। प्रत्यभिज्ञानं—स्मृतावग्न्यादिशब्दैः श्रौतार्चिरादिदेवतानां प्रत्यभिज्ञानम्। (३) एकस्मिन्गन्तव्येऽनेकमार्गवैयर्थ्यमित्याशङ्क्याह विकल्पेरन्निति।

(४) एकत्वेपीति। मार्गस्य नानात्वं न, तस्यैकत्वेपि अनेकैर्गुणभूतैः पर्वभिरर्च्यादिभिरवच्छेदः सङ्गमसम्भवेन गुणानां प्रधानेन समुच्चयोपपत्तेः, मार्गभेदकल्पनायां च गौरवात् आदित्यादिबहुविशेषणानां च

(१)सपर्वा हि पन्था नगरादिकमेकं गन्तव्यं प्रापयति नाभागः। तत्र किमेते रश्म्यहर्वायुसूर्यादयोऽध्वनः पर्वाणः सन्तोऽध्वनैकेन युज्यन्ते, आहो यथायथमध्वानमपि भिन्दन्तीति सन्देहे ऽभेदेऽप्यध्वनो भागभेदोपपत्तेर्न भागिभेदकल्पनोचिता, गौरवप्रसङ्गात्। एकदेशप्रत्यभिज्ञानाच्च विशेषणविशेष्यभावोपपत्तेर्नानेकाध्वकल्पना। अथैतैरेव रश्मिभिरित्येवावधारणं न तावदर्थान्तरनिवृत्त्यर्थं तत्प्रापकैरेव वाक्यान्तरैर्विरोधात्तस्मादन्यानपेक्षामस्यावधारयतीति वक्तव्यम्। (२)न चैकं वाक्यमप्राप्तमध्वानं प्रापयति, तस्य चानपेक्षतां प्रतिपादयतीत्यर्थद्वयाय पर्याप्तम्, तस्माद्विधिसामर्थ्यप्राप्तमयोगव्यवच्छेदमेवकारो वदतीति युक्तम्। "त्वरावचनं चेति" ( पृ०९४७पं०९ )। (३)न खल्वेकस्मिन्नेव गन्तव्ये पथि भेदमपेक्ष्य त्वरा ऽवकल्प्यते किन्तु गन्तव्यभेदादपि तदुपपत्तिः, यथा कश्मीरेभ्यो मथुरां क्षिप्रं याति चैत्र इति, तथेहाप्यन्यतः कुतश्चिद्गन्तव्या(४)दनेनोपायेन ब्रह्मलोकं क्षिप्रं प्रयातीति। "भूयांस्यर्चिरादिश्रुतौ मार्गपर्वाणी"ति। ( पृ० ९४८ पं० १८ )। (५)अयमर्थः। एकत्वात्प्राप्तव्यस्य ब्रह्मलोकस्याल्पपर्वणा मार्गेण तत्प्राप्तौ सम्भवन्त्यां बहुमार्गोपदेशो व्यर्थः प्रसज्यते, तत्र चेतनस्याप्रवृत्तेः। तस्माद्भूयसां पर्वणामविरोधेनाल्पानां तदनुप्रवेश एव युक्त इति ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

(६)श्रुत्याद्यभावे पाठस्य क्रमं प्रति नियन्तृता।
ऊर्ध्वाक्रमणमात्रे च श्रुता वायोर्निमित्तता ॥

"स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमत" इति हि वायुनिमित्तमूर्ध्वाक्रमणं श्रुतं न तु वायुनिमित्तमादित्यगमनम्। "स आदित्यं गच्छती"त्यादित्यगमनमात्रप्रतीतेर्न च तेनेत्यनन्तरश्रुतोर्ध्वाक्रमणक्रियासम्बन्धि निराकाङ्क्षमादित्यगमनक्रिययापि सम्बद्धुमर्हति,(७) न चादित्यगमनस्य तेनेति विना का चिदनुपपत्तिर्येनान्यसम्बन्धमप्यनुषज्यते। तत्राग्निलोकमागच्छति स वायुलोकमित्यादिसन्द

---

सर्वत्र प्रत्यभिज्ञानालिङ्गेन मार्गैक्यावगमादित्यर्थः। भिन्नप्रकरणस्थत्वं ब्रह्मवदेकत्वेऽप्यविरुद्धम् भिन्नोपासनशेषत्वं च भिन्नोपासनकर्तृचैत्रवदविरुद्धमिति दोषः।

( १ ) अनेकस्यैकमार्गस्यानेकार्थसम्भवं लोके दर्शयति सपर्वेति।

( २ ) यदुक्तमवधृतेरिति तत्राह न चैकमिति।

( ३ ) त्वरात इति यदुक्तं तत्परिहारार्थं भाष्ये 'त्वरावचन'मित्यादि, तदनुपपन्नम्, पूर्वपक्षे शैघ्र्यस्यैवानपेक्षत्वसाधकत्वेनोपपादितत्वादतो व्याचष्टे न खल्विति। ( ४ ) स्वर्गादेः।

( ५ ) भूयांसीति भाष्ये मार्गैक्यं किमर्चिरादिनेत्युक्तं न पुना रश्म्यादिनेति शङ्कोत्तरमिवाभाति तथाऽपि चातोपीत्युपरितनोपिशब्दो न सङ्गच्छेतेति मत्वा व्याचष्टेऽयमर्थ इति।

( ६ ) नन्वत्र पाठादग्न्यानन्तर्यं वायोर्वक्तुमशक्यन्तस्य दुर्बलत्वादिशङ्क्याह श्रुत्याद्यभाव इति। ननु 'स वायुमागच्छती'त्यादिवाक्याद्वायोरादित्यात्पूर्वत्वरूपः क्रमस्तेनेति श्रुत्या प्रतीतिस्तद्बलात्त एतमित्यर्थः पाठक्रमो बाध्यतामत आहोर्ध्वाक्रमणेति।

( ७ ) नन्वादित्यप्राप्तेर्वायुदत्तावकाशेन वाय्वतिक्रमाद्विनाऽनुपपत्तेस्तेनेत्येतदादित्येनाप्यनुषञ्जनीयमत आह नचेति। छिद्रेणोर्ध्वदेशप्राप्तेर्जातत्वात्पुनरादित्यागमनस्य तेनेत्यस्मिन्नपेक्षा नास्तीत्यर्थः।

-भगतस्य पाठस्य (१)क्वचिन्नियामकत्वेन क्लृप्तसामर्थ्यात् । अग्निवायुवरुणक्रमानियामकत्व-श्रुत्याद्यभावादिति प्राप्ते, प्रत्युच्यते—

(२) ऊर्ध्वशब्दो न लोकस्य कस्याचित्प्रतिपादकः ।
तद्भेदापेक्षया युक्तमादित्येन विशेषणम् ॥

भवेदेतदेवं यद्यूर्ध्वशब्दात्कश्चिल्लोकभेदः प्रतीयते स तुपरिदेशमात्रवाची लोकभेदाद्विना-ऽपर्यवस्यल्लोकभेदवाचिनाऽऽदित्यपदेनाऽऽदित्ये व्यवस्थाप्यते तथा चाऽऽदित्यलोकगमनमेव वायु-निमित्तमिति श्रौतक्रमनियमे पाठः पदार्थमात्रप्रदर्शनार्थो न तु क्रमाय प्रभवति श्रुतिविरो-धादिति सिद्धम् । वाजसनेयिनां संवत्सरलोको न पठ्यते छान्दोग्यानां देवलोको न पठ्यते तत्रोभयानुरोधादुभयपाठे(३) माससम्बन्धात्संवत्सरः पूर्वः पश्चिमो देवलोकः । नहि मासो देवलोकेन सम्बध्यते, किन्तु संवत्सरेण । तस्मात्तयोः परस्परसम्बन्धान्मासारभ्यत्वाच्च संवत्सरस्य मासानन्तर्ये स्थिते देवलोकः संवत्सरस्य परस्ताद्भवति । (४)तत्रादित्यानन्त-र्याय वायोः संवत्सरादित्यस्य स्थाने देवलोकाद्वायुमिति पठितव्यम् । वायुमब्दादिति तु सूत्रमत्रापि वाचकमेव तथापि संवत्सरात्पराञ्चमादित्यादर्वाञ्चं वायुमभिसम्भवन्तीति छा-न्दोग्यपाठमात्रापेक्षयोक्तं, तदिदमाह—"वायुमब्दादिति त्वि"ति (पृ०२५०पं०११)२॥

## तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

(५)तडिदन्तेऽर्चिराद्येष्वन्यप्यातिस्तडितः परः ।
तत्सम्बन्धात् तथेन्द्रादिरप्यतः पर इष्यते ॥
आगन्तूनां निवेशान्ते स्थानाभावात् प्रबाधितः ।
तथा चेन्द्रादिरागन्तुः पठ्यते चाप्यतः परः ॥ ३ ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥
## उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

(६)मार्गचिन्हस्वरूपत्वाच्चिन्हान्येवार्चिरादयः ।
मर्तृभोगभुवो वा स्युर्लोकत्वान्नातिवाहिकाः ॥

---

(१) वरुणलोकादौ ।

(२) अत्रोर्ध्वादित्यलोकशब्दयोर्विशेषणविशेष्यभावादेकार्थत्वेन तेनेतिश्रुत्या वायुदत्तस्यादित्यगमनं प्रति हेतुत्वस्य नियतप्राक्सत्त्वात्मकत्वेन क्रमरूपस्य प्रतीतेः श्रुत्या पाठक्रमबाध इति सिद्धान्तयति ऊर्ध्व-शब्द इति । (३) उभयोः संवत्सरदेवलोकयोरश्रुतस्थलेऽपि पाठे कर्तव्ये सतीत्यर्थः ।

(४) देवलोकः संवत्सरस्य परस्ताद्भवतु वायुः क्व निवेशनीयस्तत्राह तत्रेति । 'तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती'ति वायोरादित्यानन्तर्याय निरन्तरत्वाय संवत्सरादित्यस्य स्थाने एतस्योपरि देवलोकं देवलोकाद्वायुमिति पाठः कर्तव्य इत्यर्थः ।

(५) 'स वायुलोकं स वरुणलोकमि'त्यत्रोक्ता वरुणादयो न तावत्पाठक्रमाद्वायोरुपरि निविशेरन् तेना-दित्यमितिश्रुतिविरोधादेव न च वायोरिव स्थानविशेषसम्बन्धग्राहकमस्त्येषां श्रुत्यादिकमतो नामीषां मार्गे निवेश इति पूर्वपक्षमाशंक्य सिद्धान्तमाह तडिदन्त इति । वरुणस्याब्द्वारा विद्युत्सम्बन्धादागन्तुकानामन्ते निवेश इति न्यायाच्च विद्युदानन्तर्ये सति यथा पाठमिन्द्रप्रजापत्योः क्रम इति सिद्धान्ताभिप्रायः ।

(६) सम्बन्धात्तडित उपरि वरुणमित्युक्तमिहापि सादृश्यसम्बन्धादर्चिरादीनां मार्गपर्वत्वमिति पूर्व-पक्षमाह मार्गेति ।

अर्चिरादिशब्दा हि ज्वलनादावचेतनेषु निरूढवृत्तयो लोके न चैषां स्वावधिकानामिव नियमवती संवहनस्वरूपा स्वतन्त्रक्रिया बुद्धिपूर्वा सम्भवत्यचेतनानाम् । तस्माल्लोकशब्दवाच्यत्वाद्भर्तुर्जीवात्मनो भोगभूमय एवेति मन्यामहे ।

(१)अपि चार्चिष इत्यस्मादपादानं प्रतीयते ।
न हेतुर्नागुणे हेतौ पञ्चमी दृश्यते क्वचित् ॥

जाड्याद्बद्ध इत्यादिषु गुणवचनेषु जाड्यादिषु हेतुपञ्चमी दृष्टा, न चार्चिरादिशब्दा गुणवाचिनो येन पञ्चम्या तेषां वहनं प्रति हेतुत्वमुच्यते, अपादानत्वं चाचेतनेष्वप्यस्तीति नातिवाहिकाः । न चामानवस्य पुरुषस्य विद्युदादिषु वोढृत्वदर्शनादर्चिरादीनामपि वोढृत्वमुन्नेयं, यावद्वचनं हि वाचनिकं न तदवाच्ये संचारयितुमुचितम् । अपि चार्चिरादीनां वोढृत्वे विद्युदादीनामपि वोढृत्वान्नामानवः पुरुषो वोढा श्रूयते, ततोऽवगच्छामो विद्युदादिवन्नार्चिरादीनां वोढृत्वमिति । तस्माद्भोगभूमय एवार्चिरादयो नातिवाहिका इति प्राप्ते,

प्रत्युच्यते—

(२)सपिण्डकरणानां हि सूक्ष्मदेहवतां गतौ ।
न स्वातन्त्र्यं न चाज्ञत्वान्नेतारोऽचेतनास्तु ते ॥

ईदृशी हि नियमवती गतिः स्वयं वा प्रेक्षावतो ऽप्रेक्षावतो वा प्रेक्षावत्प्रयुक्तस्य । न तावद्विगलितस्थूलकलेवराः सूक्ष्मदेहवतः सम्पिण्डितकरणग्रामा उत्क्रान्तिमन्तो जीवात्मानो मत्तमूर्छितवत्स्वयं प्रेक्षावन्तो यदेवं स्वातन्त्र्येण गच्छेयुस्तथार्चिरादयोऽपि मार्गचिन्हानि वा शमीकारस्करा(३)दिवत् भोगभूमयो वा सुमेरुशैलेलावृतादिवदुभयथाऽप्यचेतनतया न नयनं प्रत्येषामस्ति स्वातन्त्र्यम् । न चैतेभ्योऽन्यस्य चेतनस्य नेतुः कल्पना सति श्रुतानां चैतन्यसम्भवे । न च परमेश्वर एवास्तु नेतेति युक्तम्, तस्यात्यन्तसाधारणतया लोकपालप्रहादीनामकिंचित्करत्वात् । तस्माद् व्यवस्थित एव परमेश्वरस्य सर्वाध्यक्षत्वे यथायथास्वं लोकपालादीनां स्वातन्त्र्यम् । एवमिहाप्यर्चिरादीनामातिवाहिकत्वमेव दर्शनानुसाराच्छब्दार्थ इति युक्तम् । (४) इममेवार्थममानवं पुरुषातिवाहनलक्षणं लिङ्गमुपोद्बलयतीत्युक्तम्—"अनवस्थितत्वादर्चिरादीनामिति ( पृ०६५२पं०१६ )। अवस्थितं हि मार्गचिन्हं भवत्यव्यभिचारान्नानवस्थितं व्यभिचारादिति । अर्चिष इति च हेतौ पञ्चमी नापादाने । गुणत्वं चाश्रिततया । (५)न च वैशेषिकपरिभाषया नियम आस्थेयो लोकवि-

---

(१) ननु अर्चिष इत्यादिपञ्चमीभिरर्चिरादीनां भोक्तृगमनहेतुत्वप्रतीतेश्चेतनत्वमिति तत्राह अपि- चेति । हेतावित्यधिकारे 'विभाषा गुणेऽस्त्रियां'मिति विहिता हेतुपञ्चमी नागुणाद्दृश्यते किन्तु गुणादावेव तत्रोदाहरणमाह—जाड्यादिति ।

(२) स्वप्रयत्नहीनस्य चेतनस्योर्ध्वदेशगमनं चेतनान्तराधीनमिति सिद्धान्तयति संपिण्डेति । सङ्कुचितकरणानामित्यर्थः, तत्र हेतुभूतविशेषणमाह सूक्ष्मदेहवतामिति । भूतसूक्ष्मात्मकसूक्ष्मदेहमात्रवतां स्थूलदेहरहितानामित्यर्थः । (३) कारस्करो वृक्षविशेषः । (४) न्यायसिद्धेऽर्थे द्योतकं लिङ्गमाहेममेवेति ।

(५) ननु वैशेषिकैरमूर्तवृत्तिवृत्त्यपरजात्याधारे गुणत्वमङ्गीकृतमर्चिरादयस्तु न तथेति कथं तच्छब्देषु हेतुपञ्चमीत्यत आह नचेति । गन्तृप्रधानान्प्रति अर्चिरादेः सहायत्वादस्ति गुणभूतत्वं लोकव्यवहारसिद्धमिति युक्ता हेतुपञ्चमीत्यर्थः ।

रोधात् । अपि च तेऽर्चिरभिसम्भवन्तीति सम्बन्धमात्रमुक्तमिति । सामान्यवचने शब्दे विशेषाकाङ्क्षिणि स्फुटं यद्विशेषपदं तेन तत्सामान्यं नियम्यते । यथा ब्राह्मणमानय भोजयितव्य इति तद्विशेषापेक्षायां यदा तत्सन्निधावुपनिपतति पदं कण्ठादि तदा तेनैतन्नियम्यते "एवमिहापी"ति ॥ ४ ॥ ५ ॥

**वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥**

विद्युल्लोकमागतो मानवः पुरुषो वैद्युतस्तेनैव न तु वरुणादिना स्वयमुह्यते । तच्छ्रुतेस्तस्यैव स्वयं वोढृत्वश्रुतेः । (१)वरुणादयस्तु तत्साहायके वर्तमाना वोढारो भवन्तीति च वैधर्म्यं न वोढृत्व इति सर्वमवदातम् ॥ ६ ॥

पाठक्रमादर्थक्रमो बलवानिति, यथार्थक्रमं पठ्यन्ते सूत्राणि–परं जैमिनिर्मुख्यत्वात् । स एतान् ब्रह्म गमयतीति विचिकित्स्यते–किं परं ब्रह्म गमयत्याहो स्वित्परं कार्यं ब्रह्मेति ।

(२)मुख्यत्वादमृतप्राप्तेः परप्रकरणादपि ।
गन्तव्यं जैमिनिर्मेने परमेवार्चिरादिना ॥

ब्रह्म गमयतीत्यत्र हि नपुंसकब्रह्मपदं परस्मिन्नेव ब्रह्मणि निरूढत्वाद् अनपेक्षतया मुख्यमिति सति सम्भवे न कार्ये ब्रह्मणि गुणकल्पनया व्याख्यातुमुचितम् । (३) अपि चामृतत्वफलावाप्तिर्न कार्यब्रह्मप्राप्तौ युज्यते, तस्य कार्यत्वेन मरणधर्मवत्त्वात् । (४)किञ्च तत्रतत्र परमेव ब्रह्म प्रकृत्य प्रजापतिसद्मप्रतिपत्त्यादय उच्यमाना नापरब्रह्मविषया भवितुमर्हन्ति प्रकरणविरोधात् । न च परस्मिन् सर्वगते गतिर्नोपपद्यते प्राप्तत्वादिति युक्तम् । प्राप्तेऽपि हि प्राप्तिफला गतिर्दृश्यते, यथैकस्मिन्न्यग्रोधपादपे मूलादग्रमग्राच्च मूलं गच्छतः शाखामृगस्यैकेनैव न्यग्रोधपादपेन निरन्तरं संयोगविभागा भवन्ति । (५)न चैते तदवयवविषया न तु न्यग्रोधविषया इति साम्प्रतम्, तथा सति न शाखामृगो न्यग्रोधेन युज्यते, न्यग्रोधावयवस्य तदवयवयोगात् । एवं दृश्यमानानापि तदवयवानां न योगः, तदवयवयोगात्तदनेन क्रमेण तदवयवेषु परमाणुषु व्यवतिष्ठते । ते चातीन्द्रिया इति कस्मिन्नु नामायमनुभवपद्धतिमध्यास्तां संयोगप्रत्ययः । तस्मादकामेनाप्यनुभवानुरोधेन प्राप्त एव प्राप्तिफलत्वावगतिरेषितव्या । तद् ब्रह्म प्राप्तमपि प्राप्तिफलायावगतेर्गोचरो भविष्यति । ब्रह्मलोकेष्विति च बहुवचनमेकस्मिन्नपि प्रयोगसाधुतामात्रेण गमयितव्यम् । लोकशब्दश्चालोकने प्रकाशे वर्तयितव्यो न तु संनिवेशवति देशविशेषे । तस्मात्परब्रह्मप्राप्त्यर्थो गत्युपदेशसामर्थ्यादयमर्थो भवति । यथा विद्याकर्मवशादर्चिरादिना गतस्य सत्यलोकमतिक्रम्य परं जग

---

(१) ननु यदि विद्युत्स्थानादारभ्यामानवो नेता तदा वरुणादीनामनेतृत्वं वैधर्म्यं वाच्यम्, उभयनेतृत्वे वैयर्थ्यादत आह वरुणादयस्त्विति । अमानवः प्रधानो नेता, वरुणादयस्तु नयनेऽपि सहकारिण इत्येवं वैधर्म्यं न वोढृत्वे वैधर्म्यमित्यर्थः ।

(२) गतिनिरूपणान्ते गन्तव्यं निरूप्यते, तत्र पूर्वपक्षमाह मुख्यत्वादिति । ब्रह्मशब्दस्येति शेषः ।

(३) अमृतत्वप्राप्तेरिति व्याचष्टे अपि चेति । (४) परप्रकरणादिति हेतुं व्याचष्टे किञ्चेति ।

(५) न्यग्रोधेऽपि न प्राप्तस्य प्राप्तिरवयवानामप्राप्तानां पुनः प्राप्तेरित्याशङ्क्याह न चैते इति । शाखामृगो वानरोऽवयवी न न्यग्रोधावयविना युज्यते किन्तु वानरावयवस्य न्यग्रोधावयवस्य योग इत्यर्थः ।

त्कारणं ब्रह्मलोकमालोकं स्वयंप्रकाशकमिति यावत् प्राप्तस्य तत्रैव लिङ्गं प्रलीयते न तु गति-मेवंभूतां विना लिङ्गप्रविलय इति । अत एव श्रुतिः 'पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' । तदनेनाभिसंबन्धिना परं ब्रह्म गमयत्यमानव इति मेने जैमिनिराचार्यः ।

तत्त्वदर्शी बादरिर्ददर्श–

**कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥**

**विशेषितत्वाच्च ॥ ८ ॥**

**सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥**

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥**

**स्मृतेश्च ॥ ११ ॥**

**परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥**

**दर्शनाच्च ॥ १३ ॥**

**न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥**

(१)कार्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गतिः ।
प्रापयेद् ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम् ॥

(२)तत्त्वमसिवाक्यार्थसाक्षात्कारात् प्राक्किल जीवात्मा ऽविद्याकर्मवासनाद्युपाध्यवच्छेदा-द्वस्तुतो ऽनवच्छिन्नो ऽवच्छिन्नमिवाभिन्नोऽपि लोकेभ्यो भिन्नामिवात्मानमभिमन्यमानः स्वरूपा-दन्यानप्राप्तानर्चिरादीन् लोकान् गत्वाप्नोतीति युज्यते । अद्वैततत्त्वब्रह्मसाक्षात्कारवतस्तु विगलितनिखिलप्रपञ्चावभासविभ्रमस्य न गन्तव्यं न गतिर्न गमयितार इति किं केन सङ्ग-तम् । तस्मादनिदर्शनं न्यग्रोधसंयोगविभागा न्यग्रोधवानरतद्वृत्तितत्संयोगविभागानां मिथो भेदात् । (३)न च तत्रापि प्राप्तप्राप्तिः, कर्मजेन हि विभागेन निरुद्धायां पूर्वप्राप्तावप्राप्त-स्यैवोत्तरप्राप्तिरुत्पत्तेः । एतदपि वस्तुतो विचारासहतया सर्वमनिर्वचनीयविजृम्भितमविद्यायाः समुत्पन्नाद्वैततत्त्वसाक्षात्कारो न विद्वानभिमन्यते । (४)विदुषोऽपि देहपातात्पूर्वं स्थितप्रज्ञस्य त-थाभासमात्रेण सांसारिकधर्मानुवृत्तिरभ्युपेयते, एवमालिङ्गशरीरपातात्, विदुषस्तद्धर्मानुवृत्ति-स्तथा चाप्राप्तप्राप्तेर्गत्युपपत्तिस्तद्देशप्राप्तौ च लिङ्गदेहनिवृत्तेर्मुक्तिः श्रुतिप्रामाण्यादिति चेत् । न । परविद्यावत उत्क्रान्तिप्रतिषेधाद् 'ब्रह्मैव सन् ब्रह्माप्येति न तस्मात्प्राणा उत्क्रामन्ति अत्रैव समवनीयन्त' इति । यथा विद्याब्रह्मप्राप्त्योः समानकालता श्रूयते—'ब्रह्म वेद ब्रह्मैव

(१) सिद्धान्तं संगृह्णाति कार्यमिति । अर्चिरादिगतिरुपासकान् कार्यब्रह्म प्रापयेदप्राप्तपूर्वत्वेन गमन-योग्यत्वान्न परं ब्रह्म तस्य जगदात्मकतया प्राप्तत्वादिति श्लोकार्थः ।

(२) ननु न्यग्रोधं इव शाखामृगेण प्राप्तमपि परं ब्रह्म प्राप्यतामित्याशंक्य विद्ययाऽविद्यादाहे भेदबाधा-दिह न तादृश्यपि गतिरित्याह तत्त्वमसीत्यादिना ।

(३) वस्तुतो दृष्टान्तेऽपि न प्राप्तप्राप्तिरित्याशयेनाह नचेति । एतदपीति । काल्पनिकविभागापेक्षया न्यग्रोधप्राप्त्यप्राप्ती वास्तवे ब्रह्मणि प्रतिबुद्धे न युक्ते इत्यर्थः ।

(४) ननु ज्ञानोत्तरकालं देहधारणवदर्चिरादिगतिर्देशविशेषप्राप्तये किं न स्यादित्याक्षिपति विदुषोपीति ।

भवति' 'आनन्दं ब्रह्मणो विद्वान्न बिभेति' 'तदात्मानमेव वेदाहं ब्रह्मास्मीति तत्सर्वमभवत्' 'तत्र को मोहः कः शोक एकत्वमनुपश्यत' इति पौर्वापर्यश्रवणात्परविद्यावतो मुक्तिं प्रति नोपायान्तरापेक्षेति लक्ष्यते अभिसन्धिः श्रुतेः। (१)उपपन्नं चैतत्, न खलु ब्रह्मैवेदं विश्वमहं ब्रह्मास्मीति परिभावनाभुवा जीवात्मनो ब्रह्मभावसाक्षात्कारेणोन्मूलितायामनवयवेनाविद्यायामस्ति गन्तव्यगन्तृविभागो विदुषस्तदभावे कथमयमर्चिरादिमार्गे प्रवर्तेत। (२)न च छायामात्रेणापि सांसारिकधर्मानुवृत्तिस्तत्र प्रवृत्त्यङ्गं, यादृच्छिकप्रवृत्तेः श्रद्धाविहीनस्य दृष्टार्थानि कर्माणि फलन्ति न फलन्ति च, अदृष्टार्थानां तु फले का कथेत्युक्तं प्रथमसूत्रे। (३)न चार्चिरादिमार्गभावनायाः परब्रह्मप्राप्त्यर्थमविदुषः प्रत्युपदेशस्तथा च कर्मान्तरेष्विव नित्यादिषु तत्रापि श्राद्धस्य प्रवृत्तिरिति साम्प्रतम्। विकल्पासहत्वात्—किमियं परविद्यानपेक्षा परब्रह्मप्राप्तिसाधनं तदपेक्षा वा। न तावदनपेक्षा 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाये'ति परब्रह्मविज्ञानादन्यस्याध्वनः साक्षात्प्रतिषेधात्, परविद्यापेक्षत्वे तु मार्गभावनायाः किमियं विद्याकार्ये मार्गभावना साहायकमाचरत्यथ विद्योत्पादे। न तावद्विद्याकार्ये, तया सह तस्याद्वैताद्वैतगोचरतया मिथो विरोधेन सहासंभवात्। नापि यज्ञादिवद्विद्योत्पादे साक्षाद्ब्रह्मप्राप्त्युपायत्वश्रवणादेतान् ब्रह्म गमयतीति। यज्ञादेस्तु विविदिषासंयोगेन श्रवणाद्विद्योत्पादाङ्गत्वम्। (४)तस्मादुपन्यस्तबहुश्रुत्यनुरोधादुपपत्तेश्च ब्रह्मशब्दो ऽसंभवन्मुख्यवृत्तिर्ब्रह्मसामीप्यादपरब्रह्मणि लक्षणया नेतव्यः। (५)तथा च लोकेष्विति बहुवचनोपपत्तेः कार्यब्रह्मलोकस्य, परस्य त्वनवयवतया तद्द्वारेणाप्यनुपपत्तेर्लेकत्वं चेलाम्रतादिवत् संनिवेशविशेषवति भोगभूमौ निरूढं न कथंचिद्योगेन प्रकाशे व्याख्यातं भवति। तस्मात्साधुदर्शी स भगवान् बादरिरसाधुदर्शी जैमिनिरिति सिद्धम्। अप्रामाणिकानां बहुप्रलापाः सर्वगतस्य द्रव्यस्य गुणाः सर्वगता एव चैतन्यानन्दादयश्च गुणिनः परमात्मनो भेदाभेदवन्तो गुणा इत्यादयो (६)दूषणायानुभाष्यमाणा अपि अप्रमाणिकत्वमावहन्त्यस्माकमित्युपेक्षिताः। ग्रन्थयोजना तु प्रतिप्रत्यग्गात्मत्वाच्च गन्तॄणाम्, प्रतिप्रति अञ्चति गच्छतीति प्रत्यक् प्रतिभाववृत्ति ब्रह्म तदात्मत्वाद्गन्तॄणां जीवात्मनामिति। "गौणी त्व-

(१) श्रुत्यनुग्राहकं न्यायमाहोपपन्नं चेति।

(२) विदुषोपि सांसारिकधर्मानुवृत्तिवत्प्रत्युपपत्तिरिति यदुक्तं तत्रोत्तरयति नचेति। यदाऽश्वमेधादीन्यदृष्टार्थानि कर्माणि न फलन्ति तदाऽदृष्टार्थानामर्चिरादिमार्गचिन्तनादीनां का कथेति भावः।

(३) ज्ञानोत्तरकालमर्चिरादिचिन्ताभावेऽपि अविदुषो ब्रह्मप्राप्त्यर्थं तद्विधीयतामित्याक्षिप्याह नचेति।

(४) यचोक्तं नपुंसकब्रह्मशब्दस्य परब्रह्मण्येव रूढिरिति तत्राह तस्मादिति।

(५) ननु ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिसामर्थ्यात् कथं 'स एतान् ब्रह्म गमयतीति' ब्रह्मश्रुतिर्लक्षणया नेयेत्याशंक्य लोकादिश्रुतिवशादित्याह तथाचेति।

(६) निर्गुणविद्यावत्सगुणविद्यास्वपि गतिरनुपपन्ना सगुणब्रह्मगुणानां ज्ञानादीनां व्यापित्वात् इहैव तद्भावप्रापन्नानां सगुणोपासकानां तत्प्राप्तौ गत्यनपेक्षत्वाच्च, श्रुतिवशाद्यत्र गतिः सा निर्गुणविद्यायामपि कुतो न स्याद्वस्तुतो निर्गुणवस्त्वभावान्निर्गुणविद्यैव नास्ति ज्ञानादिगुणैर्ब्रह्मापि भिन्नाभिन्नं सगुणमेवेत्यादयो भास्करस्य प्रलापाः, सगुणब्रह्मणस्सविशेषत्वाद्ब्रह्मलोके एवोपासकस्य गुणाभिव्यक्तिर्नेहेति सम्भवति, शब्दस्याकाशगुणस्य व्यापित्वेऽपि वंशाकाशादिदेशे एवाभिव्यक्तिर्न सर्वत्र परस्य ब्रह्मणस्तु गुणा एव न सन्ति येषां देशविशेषेऽभिव्यक्तिः स्यात्, न निर्गुणं वस्त्विति च दुर्लभमतो उपेक्ष्या एवेत्यर्थः॥

न्यत्रे''ति ( पृ० ९५५ पं० ४ ) । यौगिक्यपि हि योगगुणापेक्षया गौण्येव । "विशुद्धोपाधिसंबन्धमि''ति । मनोमयत्वादयः कल्पनाः कार्याः, कार्यत्वात् अविशुद्धा अपि श्रेयोहेतुत्वाद्विशुद्धाः । प्रतिसंचरो महाप्रलयः प्रतिप्रत्ययमिसंधिः प्रतिपत्तिर्गतिः । पदैर्गत्यर्थत्वादभिसन्धिस्तात्पर्यम् । यस्य ब्रह्मणो नामाभिधानं यश इति । "पूर्ववाक्यविच्छेदेने''ति ( पृ० ९५८ पं० १ ) श्रुतिवाक्ये बलीयसी प्रकरणात् । "सगुणे च ब्रह्मणी''ति । प्रशंसार्थमित्यर्थः । चोदयति—"ननु गतस्यापि पारमार्थिकी गन्तव्यता देशान्तरविशिष्टस्ये''ति । न्यग्रोधवानरदृष्टान्त उपपादितः । परिहरति—"न प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मण''इति । अयमभिसन्धिः । यथा तथा न्यग्रोधावयवी परिणामवानुपजनापायधर्मभिः कर्मजैः संयोगविभागैः संयुज्यतामयं पुनः परमात्मा निरस्तनिखिलभेदप्रपञ्चः कूटस्थनित्यो न न्यग्रोधवत्संयोगविभागभाग् भवितुमर्हति । काल्पनिकसंयोगविभागस्तु काल्पनिकस्यैव कार्यब्रह्मलोकस्योपपद्यते न परस्य । शङ्कते—"जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरि''ति ( पृ० ९५९ पं० ८ )। नह्युत्पत्त्यादिहेतुभावो ऽपरिणामिनः सम्भवति तस्मात्परिणामीति । तथा च भाविकमस्योपपद्यते गन्तव्यत्वमित्यर्थः । निराकरोति—"न विशेषनिराकरणश्रुतीनामि''ति । विशेषनिराकरणं समस्तशोकादिदुःखशमनतया पुरुषार्थफलवत् , अफलं तूत्पत्त्यादिविधानम् । तस्मात्फलवतः सन्निधावाम्नायमानं तदर्थमेवोच्यत इत्युपपत्तिः । तद्धि विजिज्ञासस्वेति च श्रुतिः । तस्माच्छ्रुत्युपपत्तिभ्यां निरस्तसमस्तविशेषब्रह्मप्रतिपादनपरोऽयमाम्नायो न तूत्पत्त्यादिप्रतिपादनपरः । तस्मान्न गतिस्तात्त्विकी । अपि चेयं गतिर्न विचारं सहत इत्याह—"गतिकल्पनायां चे''ति । (पृ० ९६० पं० १६) अन्यानन्यत्वाश्रयावयवविकारपक्षौ । (१)अन्यो वाऽत्यन्तम् । अथ कस्मादात्यन्तिकमनन्यत्वं न कल्पत इत्यत आह—"अन्यन्ततादात्म्य" इति । (२)मृदात्मतया हि स्वभावेन घटादयो भावास्तद्विकारा व्याप्ताः, तदभावे न भवन्ति शिंशपेव वृक्षत्वाभाव इति, विकारावयवपक्षयोश्च तद्वतः सह विकारावयवैः स्थिरत्वादचलत्वाद्ब्रह्मणः संसारलक्षणं गमनं विकारावयवयोरनुपपन्नम् , नहि स्थिरात्मकमस्थिरं भवति, (३)अन्यानन्यत्वेऽपि नैकस्य विरोधादसम्भवतीति भावः । "अथान्य एव जीवो ब्रह्मणः ( पृ० ९६१ पं० ३ ) । तथा च ब्रह्मण्यसंसरत्यपि जीवस्य संसारः कल्पत इति । एतद्विकल्प्य दूषयति—"लोकुरि''ति । "मध्यमपरिमाणत्व''इति । मध्यमपरिमाणानां घटादीनामनित्यत्वदर्शनात् । "न मुख्यैकत्व" इति । (४)भेदाभेद-

---

( १ ) 'अन्यो वा ततः स्यादि'ति भाष्येण चात्यन्तमन्यत्वं विकल्पितामित्याह अन्यो वेति ।

( २ ) 'विकारपक्षेप्येतत्तुल्यमि'ति भाष्यं व्याचष्टे मृदात्मतयेति ।

( ३ ) ननु विकारिणोऽवयविनश्च स्थिरत्वेऽपि ताभ्यां भिन्नाभिन्नौ विकारावयवौ, तत्र भिन्नत्वांशे नास्थिरत्वात्तयोर्गमनमित्याशङ्क्य ह अन्यानन्यत्वे अपीति ।

( ४ ) भेदाभेदेप्येकत्वं न मुख्यमेव किन्तु भेदसत्त्वमात्रमतो भाष्यानुपपत्तिरित्याशङ्क्याह भेदाभेदयोरिति । बुद्धिव्यपदेशभेदादिति भेदप्रमाणोपन्यासेन भेदे प्रमिते विरोधादभेदानुपपत्तौ विकारस्यावयवस्य वा जीवस्य तत्त्वमस्यादिब्रह्मसामानाधिकरण्यं गौणं स्यादित्याहायुतसिद्धतयेति ।

योर्विरोधिनोरेकत्रासम्भवाद्बुद्धिव्यपदेशभेदादर्थभेदोऽयुतसिद्धतयोपचारेणाभिन्नमुच्यत इत्यमुख्यमस्यैकत्वमित्यर्थः । अपि च जीवानां ब्रह्मावयवत्वपरिणामात्यन्तभेदपक्षेषु तात्त्विकी संसारितेति मुक्तौ स्वभावहानाज्जीवानां विनाशप्रसङ्गः । ब्रह्मविवर्तत्वे तु ब्रह्मैवैषां स्वभावः प्रतिबिम्बानामिव बिम्बं तच्चाविनाशीति न जीवविनाश इत्याह—"सर्वेष्वेतेष्वि"ति । मतान्तरमुपन्यस्यति दूषयितुम्—"यत्तु कैश्चिज्जल्प्यते विनैव ब्रह्मज्ञानं नित्यनैमित्तिकानी"ति । यथा हि कफनिमित्तो ज्वर उपात्तस्य कफस्य विशोषणादिभिः प्रक्षये कफान्तरोत्पत्तिनिमित्तदध्यादिवर्जने प्रशान्तोऽपि न पुनर्भवति, एवं कर्मनिमित्तो बन्ध उपात्तानां कर्मणामुपभोगात् प्रक्षये प्रशाम्यति, कर्मान्तराणां च बन्धहेतूनामननुष्ठानात्कारणाभावे कार्यानुपपत्तेर्बन्धाभावात्स्वभावसिद्धो मोक्ष आरोग्यमिवोपात्तदुरितनिर्वहणाय च नित्यनैमित्तिककर्मानुष्ठानाद्दुरितनिमित्तप्रत्यवायो न भवति, प्रत्यवायानुत्पत्तौ च स्वस्थस्वान्तो न निषिद्धान्याचरेदिति । तदेतद्दूषयति—"तदसत्प्रमाणाभावादि"ति । शास्त्रं खल्वस्मिन्प्रमाणं तच्च मोक्षमाणस्यात्मज्ञानमेवोपदिशति न तूक्तमाचारम् । न चात्रोपपत्तिः प्रभवति संसारस्यानादितया कर्माशयस्याप्यसंख्येयस्यानियतविपाककालस्य भोगेनोच्छेत्तुमशक्यत्वादित्याह—"न चैतत्तर्कयितुमपी"ति । चोदयति—"स्यादित्येतन्नित्ये"ति । परिहरति—"तन्न विरोधाभावादि"ति (पृ० ९६२ पं० ८) । यदि हि नित्यनैमित्तिकानि कर्माणि सुकृतमपि दुष्कृतमिव निर्वहेयुस्ततः काम्यकर्मोपदेशाद्दत्तजलाञ्जलयः प्रसज्येरन् । नह्यस्ति कश्चिच्चातुर्वर्ण्ये चातुराश्रम्ये वा यो न नित्यनैमित्तिकानित्यकर्माणि करोति । तस्मान्नैषां सुकृतविरोधितेति । (१)अभ्युच्चयमात्रमाह—"न च नित्यनैमित्तिकानुष्ठानादि"ति । "न चासति सम्यग्दर्शन"इति । सम्यग्दर्शी हि विरक्तः काम्यनिषिद्धे वर्जयन्नपि प्रमादादुपनिपतिते तेनैव सम्यग्दर्शनेन क्षपयति, ज्ञानपरिपाके च न करोत्येवाज्ञस्तु निपुणोऽपि प्रमादात्करोति, कृते च न क्षयितुं क्षमत इति विशेषः । "न चानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्व" इति (पृ० ९६३ पं० १) कर्तृभोक्तृत्वे समाक्षिप्तक्रियाभोगे ते चेदात्मनः स्वभावावधारिते न त्वारोपिते ततो न शक्यावपनेतुम्, न हि स्वभावाद्भावोऽवरोपयितुं शक्यो भावस्य विनाशप्रसङ्गात् । (२)न च भोगोऽपि सत्स्वभावः शक्योऽसत्कर्तुं, नो खलु नीलमनीलं शक्यं शक्रेणापि कर्तुं, तदिदमुक्तं "स्वभावस्यापरिहार्यत्वादि"ति । समारोपितस्य त्वनिर्वचनीयस्य तत्स्वभावस्य शक्यस्तत्त्वज्ञानेनावरोपः कर्तुं सर्पस्येव रज्जुतत्त्वज्ञानेनेति भावः । भावमिममविद्वान् परिचोदयति—"स्यादेतत् कर्तृत्वभोक्तृत्वकार्यमि"ति । अप्रकाशितभावो (३)यथोक्तमेव समाधत्ते—"तच्च ने"ति । कर्तृभोक्तृत्वयोर्निमित्तसम्बन्धस्य च शक्तिद्वारेण नित्यत्वाद्भविष्यति कदाचिदेषां समुदाचारो (४)यतः सुखदुःखे भोज्येते इति सम्भावनातः कुतः

(१) नित्यनैमित्तिकानां नित्येहिता दुरितनिवृत्तिः प्रत्यवायानुत्पत्तिर्वा फलं युज्यते, फलान्तरत्वस्वे काम्यत्वप्रसङ्गादित्याभिप्रायेणाहाभ्युच्चयमात्रमिति ।

(२) क्रियाभोगयोरात्मस्वरूपपक्षं दूषयित्वाऽन्यत्वपक्षे दूषणमाह नचेति । (३) विकल्पमकृत्वा ।

(४) आविर्भावः, नित्यत्वादात्मनः तद्गतशक्तेः कदाचिदुद्भवः सम्भवति, तैललिप्तस्य तु शालिबीजस्याल्पकालस्थायित्वाच्छक्तावनुद्भूतायामेव नाश इत्यङ्कुराद्यनुदय इत्यर्थः ।

कैवल्यनिश्चय इत्यर्थः । भूयो निरस्तमपि मतिद्रढिम्ने पुनरुपन्यस्य दूषयति—"परस्माद-न्यत्वेपी"ति । शेषमतिरोहितार्थम् ॥ ७–१४ ॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥ १५ ॥

## विशेषं च दर्शयति ॥ १६ ॥

अब्रह्मक्रतवो यान्ति यथा पञ्चाग्निविद्यया ।
ब्रह्मलोकं प्रयास्यन्ति प्रतीकोपासकास्तथा ॥

सन्ति हि 'मनो ब्रह्मे'त्युपासीतेत्याद्याः प्रतीकविषया विद्यास्तद्वन्तोऽप्यर्चिरादिमार्गेण कार्यब्रह्मोपासका इव गन्तुमर्हन्त्यनियमः सर्वासामित्यविशेषेण विद्यान्तरेष्वपि गतेरवधारणात् । न चैषां परब्रह्मविदामिव गत्यसम्भव इति । (१)न च ब्रह्मक्रतव एव ब्रह्मलोकभाजो नातत्क्रतव इत्यप्येकान्तः, अतत्क्रतूनामपि पञ्चाग्निविदां तत्प्राप्तेः । न(२) चैते न ब्रह्मक्रतवो 'मनो ब्रह्मत्युपासीते'त्यादौ सर्वत्र ब्रह्मानुगमेन तत्क्रतुत्वस्यापि सम्भवात् । फलविशेषस्य ब्रह्मलोकप्राप्तावपि उपपत्तेः, तस्य सावयवतयोत्कर्षनिकर्षसम्भवादिति प्राप्ते,

प्रत्युच्यते—

(३)उत्तरोत्तरभूयस्त्वादब्रह्मक्रतुभावतः ।
प्रतीकोपासकान् ब्रह्मलोकं नामानवो नयेत् ॥

भवतु पञ्चाग्निविद्यायामब्रह्मक्रतूनामपि ब्रह्मलोकनयनं वचनात्, किमिव हि वचनं न कुर्याद् नास्ति वचनस्यातिभार इह तु तदभावात्, 'तं यथायथोपासते तदेव भवती'ति श्रुतेः औत्सर्गिक्या नासति विशेषवचने ऽपवादो युज्यते । न च प्रतीकोपासको ब्रह्मोपास्ते सत्यपि ब्रह्मेत्यनुगमे किन्तु नामादिविशेषब्रह्मरूपतया तथा खल्वयं नामादितन्त्रो न ब्रह्मतन्त्र, आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः प्रतीक इति हि वृद्धाः । (४)ब्रह्माश्रयश्च प्रत्ययो नामादिषु प्रक्षिप्त इति नामतन्त्रः । तस्मान्न तदुपासको ब्रह्मक्रतुः किन्तु नामादिक्रतुः । न च ब्रह्मक्रतुत्वे नामाद्युपासकानामविशेषादुत्तरोत्तरोत्कर्षः सम्भवी । (५)न च ब्रह्मक्रतुस्तदवयवक्रतुः, येन तदवयवापेक्षयोत्कर्षो वर्ण्येत । तस्मात्प्रतीकालम्बनान्विदुषो वर्ज-

---

(१) ननु ब्रह्मक्रतूनां ब्रह्मोपासकानामेव ब्रह्मलोकगमनमुचितं तं 'यथायथोपासत' इति न्यायात्, तत्र कथं प्रतीकोपासकानां ब्रह्मलोकगमनमाशङ्क्यतेत्यत आह न च ब्रह्मक्रतव इति । प्रतीकोपासका अपि 'ये चामी अरण्ये' इत्यादिसामान्यवचनात् पञ्चाग्निविद्याऽब्रह्मक्रतव इव ब्रह्मलोकं प्रयास्यन्त्येवेति भावः ।

(२) अब्रह्मोपासकत्वं चासिद्धमित्याह न चैते इति ।

(३) प्रतीकोपासकानमानवो ब्रह्मलोकं न नयेत्कुत इत्यत आहोत्तरोत्तरभूयस्त्वादिति । प्रतीकोपासनाफलस्येति शेषः ।

(४) ननु भवत्वर्थान्तरविषयस्य विषयान्तरे प्रक्षेपः प्रतीकः, कथमेतावता नामादिषु ब्रह्मधीप्रक्षेपसिद्धिरत आह ब्रह्माश्रयश्चेति ।

(५) ब्रह्मलोकस्य सावयवत्वात्कुतो न फलविशेषसिद्धिरत आह नचेति । ब्रह्मलोकावयवविनस्तत्तद्गुणस्य सर्वैरुपास्यत्वान्न फलविशेषसिद्धिरित्यर्थः ।

यित्वा सर्वानन्यान्विकारालम्बनान्नयत्यमानवो ब्रह्मलोकं, (१)न ह्येवमुभयथा भाव उभयथार्थत्वे काश्चित्प्रतीकालम्बनान्न नयति विकारालम्बनान्विदुषस्तु नयतीत्यभ्युपगमे कश्चिद्दोषोऽस्ति अनियमः सर्वेषामित्यस्य न्यायस्येति सर्वमवदातम् ॥ १५ ॥ १६ ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादभाष्यविभागे भामत्यां
चतुर्थस्याध्यायस्य तृतीयः पादः ॥

---

## सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

(२) प्रागभूतस्य निष्पत्तौ कर्तृत्वं न सतो यतः ।
फलत्वेन प्रसिद्धेश्च मुक्ते रूपान्तरोद्भवः ॥

(३)अभूतस्य घटादेर्भवनं निष्पत्तिर्न पुनरत्यन्तसतो ऽसतो वा न जातु गगनतरुकुसुमे निष्पद्येते । स्वरूपावस्थानं चेदात्मनो मुक्तिर्न सा निष्पद्येत, तस्य गगनवदत्यन्तसतः प्रागसत्त्वाभावात् , न (४)चास्य बन्धाभावो निष्पद्यते तस्य तुच्छस्वभावस्य कार्यत्वेनातुच्छत्वप्रसङ्गात् । फलत्वप्रसिद्धेश्च मोक्षस्याकार्यस्य फलत्वानवकल्पनादागन्तुना रूपेण केनचिदुत्पत्तौ स्वेनेति प्राप्तमनूद्यत इति प्राप्ते, ऽभिधीयते—

(५)सम्भवत्यर्थवत्त्वे हि नानर्थक्यमुपेयते ।
बन्धस्य सदसत्त्वाभ्यां रूपमेकं विशिष्यते ॥

अनधिगतावबोधनं हि प्रमाणं शाब्दमगत्या कथंचिदनुवादतया वर्ण्यते । सकलसांसारिकधर्मापेतं तु प्रसन्नमात्मरूपमप्रसन्नात्तस्मादेव रूपाद्व्यावृत्तमनधिगतमवबोधयन्नानुवादो युज्यते । न चास्य निष्पत्त्यसम्भवः सत इव घटादेः सांव्यवहारिकेण प्रमाणेन बन्धविगमस्यापि निष्पत्तेर्लोकसिद्धत्वात् । विचारासहतया त्वसिद्धिरुभयत्रापि तुल्या, न ह्यसदुत्पत्तुमर्हतीति असकृदावेदितम् । अन्धो भवतीति स्वप्नावस्था दर्शिता । बाह्येन्द्रियव्यापाराभावादेदितीव जाग्रदवस्था दुःखशोकाद्यात्मकत्वाद्विनाशमेवापीत इति सुषुप्तिः । एवकारश्चेवार्थे नावधारणे ॥ १—२ ॥

## आत्मा प्रकरणात् ॥ ३ ॥

---

(१) उभयथाऽदोषादिति सूत्रावयवं योजयन्नाह न ह्येवमिति ।

(२) निर्गुणविद्याफलैकदेशान्तरं ब्रह्मभावाविर्भावः सगुणविद्याफलं च सर्वेश्वरतुल्यभोगभक्त्त्वावधारणार्थं चतुर्थपादारम्भः । प्रागिति । अभिनिष्पद्यते इति शब्दात् प्रागसतः पदार्थस्य निष्पत्तौ कर्तृत्वं प्रतीयते तत्सतो नोपपद्यते इति यतस्ततो हेतोर्मुक्तेः फलत्वेन प्रसिद्धेश्चात्मातिरिक्तरूपान्तरोद्भवो मोक्षे स्यादित्यर्थः ।

(३) प्रागभूतस्येति व्याचष्टे अभूतस्येति ।

(४) स्वरूपनिष्पत्त्यभावेऽपि बन्धाभावनिष्पत्तिः स्यात्तत्राह नचेति । बन्धाभावस्योत्पत्तौ कार्यत्वात्कुम्भवन्न तुच्छत्वं स्यादित्यर्थः ।

(५) स्वशब्दस्यानुवादकत्वं निषेधन्नात्मवचनत्वमाह सम्भवतीति । आत्मन्यभिनिष्पत्तिशब्दं घटयति बन्धस्येति । निवृत्तबन्धमात्मरूपमभिनिष्पत्तिवाच्यं बन्धनिवृत्तेर्जन्यत्वादित्यर्थः ।

(१)ननु 'ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति पौर्वापर्यश्रवणात् स्वरूपनिष्पत्तेरन्या ज्योतिरुपसम्पत्तिस्तथा च भौतिकत्वेऽपि न मोक्षव्याघातः । (२)भवेदेतदेवं यदि ज्योतिरुपसम्पद्य तत्परित्यजेदिति श्रूयेत । (३)तदध्याहारेऽपि तत्प्रतिपादनवैयर्थ्यं तदपरित्यागे च ज्योतिषैव स्वेन रूपेणेति गम्यते । तस्य च भूतत्वे विकारत्वान्मरणधर्मकत्वप्रसिद्धेरमुक्तित्वमिति प्राप्ते,

प्रत्युच्यते—

ज्योतिष्पदस्य मुख्यत्वं भौतिके यद्यपि स्थितम् ।
तथापि प्रक्रमाद्वाक्यादात्मन्येवात्र युज्यते ॥

परं ज्योतिरिति हि परपदसमभिव्याहारात् परत्वस्य चानपेक्षस्य ब्रह्मण्येव प्रवृत्तेर्ज्योतिषि चापरे किंचिदपेक्ष्य परत्वात्परं ज्योतिरिति वाक्यादात्मैवात्र गम्यते प्रकरणं चोक्तम् । (४)यत्सम्पद्य निष्पद्यत इति तन्मुखं व्यादाय स्वपितीतिवत् । तस्माज्ज्योतिरुपसम्पन्नो मुक्त इति सूक्तम् ॥ ३ ॥

## अविभागेन दृष्टत्वात् ॥ ४ ॥

यद्यपि जीवात्मा ब्रह्मणो न भिन्न इति तत्रतत्रोपपादितं तथापि स तत्र(५) पर्येतीत्याधाराधेयभावव्यपदेशस्य सम्पत्तृसम्पत्तव्यभावव्यपदेशस्य(६) च समाधानार्थमाह ॥ ४ ॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

उपन्यास उद्देशो ज्ञातस्य, यथा य आत्माऽपहतपाप्मेत्यादिः । तथाऽज्ञातज्ञापनं विधिः, यथा स तत्र पर्येति जक्षत् रममाण इति, तस्य सर्वेषु लोकेषु कामचारो भवतीत्येतदज्ञातज्ञापनं विधिः । सर्वज्ञः सर्वेश्वर इति व्यपदेशः । नायमुद्देशो विधेयान्तराभावात् । नापि विधिरप्रतिपाद्यत्वात्, सिद्धवद्व्यपदेशात् । (७)तन्निर्वचनसामर्थ्यादयमर्थः प्रतीयते त एते उपन्यासादयः । एतेभ्यो हेतुभ्यः ।

---

(१) आत्मेति सूत्रारम्भमाक्षिपति नन्विति । (२) आरम्भोपपादनाय पूर्वपक्षमाह भवेदिति ।

(३) ननूपसंपद्येति क्त्वाप्रत्ययबलात्परित्यज्येत्येतदध्याहरणीयं, तथाचात्मप्राप्तिसिद्धेर्व्यर्थः सूत्रारंभोऽत आह तदध्याहारेपीति । यदि परित्याज्यं ज्योतिस्तर्हि तत्प्राप्त्यभिधानवैयर्थ्यमर्चिरादिमार्गस्यात्मज्ञे निषिद्धत्वादिति भावः ।

(४) ननु यदि ज्योतिरेवं स्वेन रूपेणेति निर्दिश्यते कथं तर्ह्युपसम्पद्येति क्त्वाप्रयोग इत्याशङ्क्यते यदिति । परिहरति तदिति । एककालयोर्मुखविदारणस्वापयोरिवात्राप्यविवक्षितपूर्वकालभावो क्त्वाप्रत्यय इत्यर्थः । (५) ब्रह्मणि ।

(६) परं ज्योतिरूपसम्पद्येत्युक्तस्य, ब्रह्मप्राप्तावपि भेदेन स्वेन रूपेण मुक्तोऽवतिष्ठत इत्यर्थः । समाधानार्थमिति । अभिनिष्पन्नस्वरूपस्य परमात्मभावः फलं तत्त्वमस्यादिवाक्यानुगुणमवगम्यते, निर्गुणप्रकरणगतस्यापि स तत्र पर्येतीत्यादिफलस्य तु ब्रह्मलोकसम्बन्धादिलिङ्गात्सगुणविद्यास्तुत्कर्ष इति सिद्धान्तयति सूत्रकार इत्याह समाधानार्थमित्यर्थः ।

(७) कथं तर्हि एतादृशव्यपदेशात्सर्वेश्वरत्वादिरूपो जीवो मुक्तौ भवतीत्यवगम्येताऽत आह तन्निर्वचनसामर्थ्यादिति । अनन्तरवक्ष्यमाणश्लोकप्रतिपाद्योऽयमर्थः प्रतीयतेऽन्यथा] पराग्भूतेश्वरकथनस्य प्रयोजनाभावादित्यर्थः ।

(१)भावाभावात्मकै रूपैर्भाविकैः परमेश्वरः ।
मुक्तः सम्पद्यते स्वैरित्याह स्म किल जैमिनिः ॥

न च चित्स्वभावस्यात्मनोऽभावात्मानोऽपहतपाप्मत्वादयो भावात्मानश्च सर्वज्ञत्वादयो धर्मा अद्वैतं घ्नन्ति । नो खलु धर्मिणो धर्मा भिद्यन्ते । मा भूद्गवाश्ववद्धर्मिधर्मभावाभाव इति जैमिनिराचार्य उवाच ॥ ५ ॥

**चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

अनेकाकारतैकस्य नैकत्वाच्चैकता भवेत् ।
परस्परविरोधेन न भेदाभेदसम्भवः ॥

(२)न ह्येकस्यात्मनः पारमार्थिकानेकधर्मसम्भवः । ते चेदात्मनो भिद्यन्ते द्वैतापत्तेरद्वैतश्रुतयो व्यावर्तेरन् । अथ न भिद्यन्ते तत एकस्मादात्मनोऽभेदान्मिथोऽपि न भिद्येरन्, आत्मरूपवत् । (३)आत्मरूपं वा भिद्येत, भिन्नेभ्योऽनन्यत्वान्नीलपीतरूपवत् । न च धर्मिण आत्मनो न भिद्यन्ते मिथस्तु भिद्यन्त इति साम्प्रतम् । धर्म्यभेदेन तदनन्यत्वेन तेषामप्यभेदप्रसङ्गात्, भेदे वा धर्मिणोऽपि भेदप्रसङ्गादित्युक्तम् । (४)भेदाभेदौ च परस्परविरोधादेकत्राभावान्न सम्भवत इत्युपपादितं प्रथमे सूत्रे । (५)अभावरूपाणामद्वैताविहन्तृत्वेऽपि तस्य पाप्मादेः काल्पनिकतया तदधीननिरूपणतया तेषामपि काल्पनिकत्वमिति न तात्त्विकी तद्धर्मता श्लिष्यते । एतेन सत्यकामसर्वज्ञसर्वेश्वरत्वादयोऽप्यौपाधिका व्याख्याताः । तस्मान्निरस्ताशेषप्रपञ्चेनाव्यपदेशेन चैतन्यमात्रात्मनाभिनिष्पद्यमानस्य मुक्तात्मनोऽर्थशून्यैरेवापहतपाप्मसत्यकामादिशब्दैर्व्यपदेश इत्यौडुलोमिर्मेने । तदिदमुक्तं "शब्दविकल्पजा एवैते" ( पृ० ९७० पं० ११ ) ऽपहतपाप्मत्वादयो न तु सांव्यवहारिका अपीति ॥ ६ ॥

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

(६)तदेतदतिशौण्डीरमौडुलोमिनं मृष्यते ।
बादरायण आचार्यो मृष्यन्नपि हि तन्मतम् ॥

एवमपीत्यौडुलोमिमतमनुजानाति । शौण्डीरं तु न सहत इत्याह—"व्यवहारापेक्षये"ति( पृ० ९७१ पं० ७) । एतदुक्तं भवति । सत्यं तात्त्विकानन्दचैतन्यमात्र एवात्माऽपहतपाप्मसत्यकामत्वादयस्त्वौपाधिकतया ऽतात्त्विका अपि व्यावहारिकप्रमाणोपनीततया लोकसिद्धा नात्यन्तासन्तो येन तच्छब्दा राहोः शिर इतिवदवास्तवा इत्यर्थः ॥ ७ ॥

**सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥**

---

( १ ) एवं सोत्रमुपन्यासादिभ्य इति हेतुं व्याख्याय सौत्रीं प्रतिज्ञां व्याचष्टे भावेति ।

( २ ) अनेकेति श्लोकं स्वयं व्याचष्टे नहीति । ते—धर्माः ।

( ३ ) नैकताभवदित्यंशं व्याचष्टे आत्मरूपमिति । ( ४ ) श्लोकस्योत्तरार्धं व्याचष्टे भेदाभेदाविति ।

( ५ ) ननु विरोधाद्भेदाभेदासम्भवेऽपि भेद एवास्तु धर्माणाम्, न चाद्वैतव्याघातः अभावरूपधर्माणामवास्तवत्वेनाव्याघातत्वादत आहाभावरूपाणामिति ।

( ६ ) धर्माणां तुच्छत्वाभ्युपगमप्रयुक्तौडुलोमिमतासहनेऽपि तदवस्तुत्वप्रयुक्तमतसहनमस्त्येव बादरायणस्येत्यर्थः ।

## अत एव चानन्याधिपतिः ॥ ९ ॥

(१)यत्नानपेक्षः सङ्कल्पो लोके वस्तुप्रसाधनः ।
न दृष्टः सोऽत्र यत्नस्य लाघवादवधारितः ॥

लोके हि कंचिदर्थं चिकीर्षुः प्रयतते प्रयतमानः समीहते समीहानस्तमर्थमाप्नोतीति क्रमो दृष्टः, न त्विच्छानन्तरमेवास्येप्स्यमाणमुपतिष्ठते, तेन श्रुत्याऽपि लोकवृत्तमनुरुद्ध्यमानया विदुषस्तादृश एव क्रमोऽनुमन्तव्यः । अवधारणं तु सङ्कल्पादेवेति लौकिकं यत्नगौरवमपेक्ष्य विद्याप्रभवतो विदुषो यत्नलाघवात्, यद्वघु तदसत्कल्पमिति । (२)स्यादेतत्, यथा मनोरथमात्रोपस्थापिता स्त्री स्त्रैणानां चरमधातुविसर्गहेतुः, एवं पित्रादयोऽप्यस्य सङ्कल्पोपस्थापिताः कल्पिष्यन्ते स्वकार्यायेत्यत आह—"न च सङ्कल्पमात्रसमुत्थाना" इति ( पृ० ९७२ पं० ५ ) । सन्ति हि खलु कानि चिद्वस्तुरूपसाध्यानि कार्याणि यथा स्त्रीवस्तुसाध्यानि दन्तक्षतमणिमालादीनि, कानिचित्तु ज्ञानसाध्यानि यथोक्तचरमधातुविसर्गरोमहर्षादीनि । तत्र मनोरथमात्रोपनीते पित्रादौ भवन्तु तज्ज्ञानमात्रसाध्यानि कार्याणि न तु तत्साध्यानि भवितुमर्हन्ति, न हि स्त्रैणस्य रोमहर्षादिवद्भवन्ति स्त्रीवस्तुसाध्या मणिमालादयस्तदिदमुक्तं पुष्कलभोगमिति प्राप्ते,

अभिधीयते—

पित्रादीनां समुत्थानं सङ्कल्पादेव तच्छ्रुतेः ।
न चानुमानबाधोऽत्र श्रुत्या तस्यैव बाधनात् ॥

(३)प्रमाणान्तरानपेक्षा हि श्रुतिः स्वार्थं गोचरयन्ती न प्रमाणान्तरेण शक्या बाधितुम्, अनुमानमेव तु स्वोत्पादाय पक्षधर्मत्वादिवन्मानान्तराबाधितविषयत्वं स्वसामग्रीमध्यपातेनापेक्ष्यमाणं सामग्रीखण्डनेन तद्विरुद्धया श्रुत्या बाध्यते, अत एव नरशिरःकपालादिशौचानुमानमागमबाधितविषयतया नोपपद्यते । (४)तस्माद्विद्याप्रभावाद्विदुषां सङ्कल्पमात्रादेव पित्राद्युपस्थानमिति साम्प्रतम् । तथाहुरागमिनः—को हि योगप्रभावादृते ऽगस्त्य इव समुद्रं पिबति स इव दण्डकारण्यं सृजति । तस्मात्सर्वमवदातम् ॥ ८ ॥ ९ ॥

## अभावं बादरिराह ह्येवम् ॥ १० ॥

---

( १ ) पूर्वं सप्रपञ्चनिष्प्रपञ्चत्वयोर्व्यावहारिकवास्तविकत्वाभ्यां व्यवस्था कृताऽत्र तु सङ्कल्पातिरिक्तसाधनभावाभावयोरेकोपाधावापाततो विरोधाल्लोकसिद्धपदपदार्थापेक्षायाः श्रुतेर्लौकिकानुमानाद्बाध इति पूर्वपक्षमाह यत्नेति । अनेन विमताः प्रयत्नादिसापेक्षसङ्कल्पजाः भोगसाधनत्वात्सम्मतवदित्यनुमानप्रयोगोऽत्र सूचितः। ननु मुक्तसङ्कल्पस्य लौकिकसङ्कल्पवत्सापेक्षत्वानुमानं सङ्कल्पादेवेत्यवधारणबाधितमत आह सोऽत्रेति । अत्र सगुणविदि पित्रादिविषयप्रयत्नस्य लाघवाल्लघौ तस्मिन्नसत्त्वमिव कृत्वा सङ्कल्पोऽवधारितः न तु प्रयत्नाभाव इत्यर्थः ।

( २ ) उक्तानुमानस्य मनसि सङ्कल्पमात्राभिव्यक्तकामिन्या व्यभिचारमाशंक्याह स्यादेतदित्यादिना । सत्त्वाप्रयुक्तभोगसाधनत्वादिति हेतुर्विशेषणीय इत्यर्थः । मणिमाला–कण्ठमालारोगः ।

( ३ ) ननु श्रुत्यनुमानयोर्विरोधे किमिति श्रुत्यैवानुमानबाधो न विपरीतमत आह प्रमाणान्तरेति । पदपदार्थावगममात्रे श्रुतेरपेक्षा न वाक्यार्थबोधने इत्यर्थः ।

( ४ ) उक्तानुमाने विद्यासृष्टत्वमुपाधिमभ्याह तस्मादिति । अनेन सिद्धान्तिमते विमतः प्रयत्नाद्यनपेक्षसङ्कल्पजः योगसामर्थ्यसृष्टत्वादगस्त्यकृतसमुद्रपानवदित्यनुमानप्रयोगो द्रष्टव्यः ।

(१)अन्ययोगव्यवच्छित्त्या मनसेति विशेषणात् ।
देहेन्द्रियवियोगः स्याद्विदुषो बादरेर्मतम् ॥

(२)अनेकधाभावश्चाद्धिप्रभावभुवो मनोभेदाद्वा (३)स्तुतिमात्रं वा कथंचिद्भूमविद्यायां निर्गुणायां तदसम्भवात् असतापि हि गुणेन स्तुतिर्भवत्येवेति ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

(४)शरीरेन्द्रियभेदे हि नानाभावः समञ्जसः ।
न चार्थसम्भवे युक्तं स्तुतिमात्रमनर्थकम् ॥

न हि मनोमात्रभेदे स्फुटतरोऽनेकधाभावो यथा शरीरेन्द्रियभेदे, अत एव सौभरेरभिविनिर्मितविविधदेहस्यापर्यायेण मान्धातृकन्याभिः पञ्चाशता विहारः पौराणिकैः स्मर्यते । न चार्थसम्भवे स्तुतिमात्रमनर्थकमवकल्पते, सम्भवति चास्यार्थवत्त्वम् । यद्यपि निर्गुणायामिदं भौमविद्यायां पठ्यते तथापि तस्याः पुरस्तादनेन सगुणावस्थागतेनैश्वर्येण निर्गुणैव विद्या स्तूयते । न चान्ययोगव्यवच्छेदेनैव विशेषणम् , अयोगव्यवच्छेदेनापि विशेषणात् , यथा चैत्रो धनुर्धरः । तस्मान्मनःशरीरेन्द्रिययोग ऐश्वर्यशालिनां नियमेनेति मेने जैमिनिः ११

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

मनसेति केवलमनोविषयां च 'स एकधा भवति त्रिधा भवती'ति शरीरेन्द्रियभेदविषयां च श्रुतिमुपलभ्यानियमवादी खलु बादरायणो नियमवादौ पूर्वयोर्न सहते, द्विविधश्रुत्यनुरोधात् । (५) न चायोगव्यवच्छेदेनैवंविधेषु विशेषणमवकल्पते । कामेषु हि रमणं समनस्केन्द्रियेण शरीरेण पुरुषाणां सिद्धमेवेति नास्ति शङ्का मनोयोगस्येति तद्व्यवच्छेदो व्यर्थः, सिद्धस्य तु मनोयोगस्य तदन्यपरिसंख्यानेनार्थवत्त्वमवकल्पते । तस्माद्वामेनाक्ष्णा पश्यतीतिवदत्रान्ययोगव्यवच्छेद इति साम्प्रतम् । "द्वादशाहवदि"ति (पृ०६७३पं०१९) ।

(६)द्वादशाहस्य सत्रत्वमामनोपायिचोदने ।

---

( १ ) यथा साधनान्तरानपेक्षं चित्रादिसमुत्थानं तथा मनसेति विशेषणस्यान्ययोगव्यवच्छेदकत्वेनावधारणार्थत्वाद्विदुषो देहाद्यभाव इति पूर्वपक्षयति अन्ययोगेति ।

( २ ) ननु 'स एकधा भवति त्रिधा भवती'त्याद्यनेकधाभावान्नानाशरीरादिकं कुतो न स्यादत आहानेकधेति । योगप्रभावमनोभेदादनेकधाभावोपपत्तेर्नानेकशरीरप्राप्तिरित्यर्थः ।

( ३ ) मनोभेदाङ्गीकारे मनसेत्येकवचनबाधापत्तिवारणायाह स्तुतिमात्रमिति ।

( ४ ) मनोभेदमात्रादनेकधाभावं निषेधति शरीरेति । परैः संवादेन भोगार्थो ह्यनेकधाभावः न च मनः परैर्दृश्यत इति न पुष्कलभोग इत्यर्थः ।

( ५ ) चैत्रो धनुर्धर इत्युक्ते खड्गाद्यन्ययोगो न वार्यते एवमत्रापि, यस्य हि प्राप्तिः पाक्षिकी विशेष्ये तद्विशेषणासम्बन्धव्यवच्छेदकः स्वस्य विशेष्यान्वयमात्रं गमयेद्यथा धनुर्धरत्वं न हि चैत्रो धनुर्दधान एव वर्तते, प्रकृते तु 'मनसैतान् कामान्पश्यन् रमते' इत्यत्र कामभोगेषु नित्यप्राप्तत्वान्मनसस्तदनुवादेन परिसङ्ख्याविधिष्विवान्ययोगनिवृत्त्यर्थमाह न चायोगेति ।

( ६ ) आसनोपायिभ्यां चोदने सति द्वादशाहस्य सत्रत्वं गम्यते, आसनोपायिचोदनयोरन्यतरत्वं सत्रलक्षणम् , तस्यैव द्वादशाहस्य यजेतेति चोदने सति अहीनत्वं च गम्यते इत्यर्थः । इदं जैमिनीयदशमाध्यायषष्ठपादीय ५९–६० सूत्राभ्यां सत्राहीनलक्षणोक्तिपूर्वकं तदुभयलक्षणयोगात् द्विविधो द्वादशाह इत्युक्तं तत्रैव द्रष्टव्यम्।

अहीनत्वं च यजतिचोदने सति गम्यते ॥

"द्वादशाहमृद्धिकामा उपेयुरि"त्युपायिचोदनेन "य एवं विद्वांसः सत्रमुपयन्ती"ति च द्वादशाहस्य सत्रत्वं बहुकर्तृकत्वस्य गम्यते । एवं तस्यैव "द्वादशाहेन प्रजाकामं याजये-दिति" यजतिचोदनेन नियतकर्तृपरिमाणत्वेन "द्विरात्रेण यजेते"त्यादिवदहीनत्वमपि गम्यत इति । (१) सम्प्रति शरीरेन्द्रियाभावेन मनोमात्रेण विदुषः स्वप्नवत्सूक्ष्मो भोगो भवति, कुतः ? उपपत्तेः, 'मनसैतानि'ति श्रुतेः । यदि पुनः सुषुप्तवदभोगो भवेत्, नैषा श्रुति-रुपपद्येत । न च स शरीरवदुपभोगः शरीराद्युपादानवैयर्थ्यात् । सशरीरस्य तु पुष्कलो(२) भोग इहाप्युपपत्तेरित्यनुषञ्जनीयम् । तदिदमुक्तं सूत्राभ्याम्—

तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥

इति ॥ १२-१४ ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

(३)वस्तुतः परमात्मनोऽभिन्नोऽप्ययं विज्ञानात्माऽनाद्यविद्याकल्पितप्रादेशिकान्तःकर-णावच्छेदेनानादिजीवभावमापन्नः प्रादेशिकः सन्न देहान्तराणि स्वभावनिर्मितान्यपि नाना-प्रदेशवर्तीनि सान्तःकरणो युगपदावेष्टुमर्हति । न चात्मान्तरं स्रष्टुमपि, स्रज्यमानस्य स्रष्टृतिरेकेणानात्मत्वादात्मत्वे वा कर्तृकर्मभावाभावाद्भेदाश्रयत्वादस्य । नाप्यन्तःकरणान्तरं तत्र सृजति, सृज्यमानस्य तदुपाधित्वाभावात् । अनादिना खल्वन्तःकरणेनौत्पत्तिकेनायम-वच्छेदो नेदानीन्तनेनान्तःकरणेनोपाधितया सम्बन्द्धुमर्हति । (४)तस्माद्यथा दारुयन्त्रं त-त्प्रयोक्त्रा चेतनेनाधिष्ठितं सकृदिच्छामनुरुध्यते, एवं निर्माणशरीराण्यपि सेन्द्रियाणीति प्राप्ते, प्रत्यभिधीयते—

(५)शरीरत्वं न जातु स्याद्भोगाधिष्ठानतां विना ।
स त्रिधेति शरीरत्वमुक्तं युक्तं च तद्विभौ ॥

'स त्रिधा भवति पञ्चधा सप्तधा नवधे'त्यादिका श्रुतिर्विदुषो नानाभावमाचक्षमाणा भि-न्नशरीरेन्द्रियोपाधिसम्बन्धेऽवकल्पते, नादेहहेतुभेदे, न हि यन्त्राणि भिन्नानि निर्माय

---

(१) सशरीरत्वमशरीरत्वं चेत्युभयविधत्वं विरुद्धमित्याशङ्क्य कालभेदेन व्यवस्थापनार्थं भाव इत्या-दिसूत्रद्वयं व्याचष्टे सम्प्रतीति । (२) जाग्रद्वत्स्थूल इत्यर्थः ।

(३) ननु ब्रह्माभिन्नस्य जीवस्य सर्वशरीरेषु सन्निधानात् कथं साङ्कल्पिकशरीराणां निरात्मकत्वेन पूर्वपक्षसम्भवस्तत्राह वस्तुत इति । स्वभावनिर्मितान्यपीति । परिच्छिन्नान्तःकरणोपहितजीवादृष्टसामर्थ्या-द्देहानामुत्पत्तिर्भवति परिच्छिन्नस्य तु देशान्तरे व्यञ्जकान्तःकरणाभावादभिव्यक्त्यनुपपत्तेरधिष्ठातृत्वमयुक्त-मित्यर्थः ।

(४) ननु व्यवहितदेशान्यपि दारुयन्त्राणि यथा मायाव्यधितिष्ठति एवं जीवोपि देहान्तराणीत्याशङ्क्य, तथासति तेषु भोगासिद्धेर्भावे जाग्रद्वदित्युक्तिविरोध इत्यभिप्रायेणाह तस्मादिति ।

(५) दारुयन्त्रसमत्वं योगिसृष्टशरीरेषु व्यावर्तयति शरीरत्वमिति । यदवच्छिन्न आत्मनि भोगस्तदि-न्द्रियप्राश्रमन्यावयविभोगायतनमेवंविधस्य भोगाधिष्ठानतां विना शरीरत्वं न स्यात् तथाविध एव शरीरत्व-प्रसिद्धिः, स एकधेत्यादिकमात्मनो बहुभवनं देहभेदोपाधिकमन्यादृशस्यासम्भवात् , सगुणचिदात्मनः विद्या-सामर्थ्याद्व्याप्तिरपि सम्भवतीति श्लोकार्थः ।

वाह्यन्यन्त्रवाहो नानात्वेनापदिश्यते । (१)भोगाधिष्ठानत्वं च शरीरत्वं नाभोगाधिष्ठानषु यन्त्रेष्विव युज्यते । तस्माद्देहान्तराणि सृजति । न वानेनाधिष्ठितानि देहपक्षे वर्तन्ते । (२)न च सर्वगतस्य वस्तुतो विगलितप्रायाविद्यस्य विदुषः पृथग्जनस्यैवौत्पत्तिकान्तःकरणवश्यता येन तदौत्पत्तिकमन्तःकरणमागन्तुकान्तःकरणान्तरसम्बन्धस्य वारयेत् । तस्माद्विद्वान् सर्वस्य वशी सर्वेश्वरः सत्यसङ्कल्पः सेन्द्रियमनांसि शरीराणि निर्माय तानि चैकपदे प्रविश्य तत्तदिन्द्रियमन्तःकरणैस्तेषु लोकेषु मुक्तो विहरतीति साम्प्रतम् । (३)प्रदीपवदिति तु निदर्शनं प्रदीपैक्यं प्रदीपव्यक्तिषूपचर्यते भिन्नवर्तिवर्तिनीनां भिन्नव्यक्तीनां भेदात् । एवं विद्वान् जीवात्मा देहभेदेऽप्येक इति परमार्थः । एकमनोनुवर्तीनि(४) त्येकाभिप्रायवर्तीनीत्यर्थः ॥ १५ ॥

सम्पन्नः केवलो मुक्त इत्युच्यते । न चैतस्येत्थंभावसम्भवः श्रुतिविरोधादित्युक्तमर्थंजातमाक्षिपति "कथं पुनर्मुक्तस्ये"ति ( पृ० ९७५ पं० ११ ) । "सलिल" इति (पृ ९७६ पं० १) । (५)सलिलमिव सलिलः सलिलप्रातिपदिकात्सर्वप्रातिपदिकेभ्य इत्युपमानादाचारे क्विपि कृते पचाद्यचि च कृते रूपम् । एतदुक्तं भवति—यथा सलिलमम्भोनिधौ प्रक्षिप्तं तदेकीभावमुपयाति एवं ब्रह्मापि ब्रह्मणेति । अत्रोत्तरं सूत्रम्—

**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥**

आसु काश्चिच्छ्रुतयः सुषुप्तिमपेक्ष्य काश्चित्तु सपत्तिं तदधिकारात् । ऐश्वर्यश्रुतयस्तु सगुणविद्याविपाकावस्थापेक्षा मुक्त्यभिसन्धानं तु तदवस्थासत्तेर्यथाऽरुणदर्शने संध्यायां दिवसाभिधानम् ॥ १६ ॥

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥**

(६)स्वाराज्यकामचारादिश्रुतिभ्यः स्यान्निरङ्कुशः ।
स्वकार्य ईश्वराधीनसिद्धिरप्यत्र साधकः ॥

"आप्नोति स्वाराज्यं सर्वेऽस्मै देवा बलिमावहन्ति , सर्वेषु लोकेषु कामचारो भवती"त्यादिश्रुतिभ्यो विदुषः परब्रह्मण इवान्यानधीनत्वमैश्वर्यमवगम्यते । नन्वस्य ब्रह्मोपासनालब्धमैश्वर्यं कथं ब्रह्माधीनं, न तु स्वभावो, न हि कारणधीनजन्मानो भावाः स्वकार्ये

( १ ) शरीरत्वं न जातिरित्येतद्व्याचष्टे भोगाधिष्ठानत्वं चेति । शरीरत्वे प्रमितं भोगाधिष्ठानत्वमभोगाधिष्ठानत्वाभ्युपगमेऽसम्भवीत्यर्थः ।

( २ ) युक्तं च तद्विभौ इति श्लोकभागं व्याकरोति नचेति । स्वान्तःकरणाद्बहिरपि योगप्रभावेण व्याप्तिसम्भवादन्यान्तःकरणेषु सृष्टेष्वस्यात्मनोऽभिव्यक्तिसम्भवे तद्वशाच्च शरीरान्तरेष्वपि भोगसम्भव इत्यर्थः ।

( ३ ) एकप्रदीपादुत्पन्नानां प्रदीपानां प्रतिपत्तिभेदात् विदुषश्च सर्वशरीरेष्वैक्यान्निदर्शनानुपपत्तिमाशंक्याह प्रदीपवदिति त्विति ।

( ४ ) एकमनोऽनुवर्तित्वं शरीरान्तराणामयुक्तं स्वीयमनोऽनुवर्तित्वादतो व्याचष्टे एकाभिप्रायेति ।

( ५ ) सलिलशब्दस्य नपुंसकत्वात्पुंलिङ्गत्वानुपपत्तिमाशंक्य व्याचष्टे सलिलमिवेत्यादिना । सलिलमिवाचरति तत्तुल्यो वर्तते इत्यर्थः ।

( ६ ) पूर्वपक्षमाह स्वाराज्येति । उपासकस्य सिद्ध्युत्पत्तेरीश्वराधीनत्वेऽपि सिद्धिकार्ये जगज्जन्मादौ स निरङ्कुश इत्यर्थः ।

स्वकारणमपेक्षन्ते, किन्त्वत्र ते स्वतन्त्रा एव, यथाहुः—

मृत्पिण्डदण्डचक्रादि घटो जन्मन्यपेक्षते ।
उदकाहरणे त्वस्य तदपेक्षा न विद्यते ॥

(१)न च विदुषां परमेश्वराधीनैश्वर्यसिद्धित्वात्तद्गतमैश्वर्यं, येन लौकिका एव राजानो महाराजाधीनाः स्वव्यापारे विद्वांसः परमेश्वराधीना भवेयुर्न खलु यदधीनोत्पादं यस्य रूपं तत्तद्रूपादूनं भवतीति कश्चिन्नियमः । तत्समानां तदधिकानां च दर्शनात्तथा ह्यन्तेवासी गुर्वधीनविद्यः तत्समस्तदधिको वा दृश्यते । (२)दुष्टसामन्ताश्च पार्थिवाधीनैश्वर्याः पार्थिवाः स्पर्धमानास्तान्विजयमाना वा दृश्यन्ते । तदिह निरतिशयैश्वर्यत्वात् परमेश्वरस्य मा नाम भुवन् विद्वांसस्ततोऽधिकास्तत्समास्तु भविष्यन्ति, तथा च न तदधीनाः, न हि समप्रधानभावानामस्ति मिथोऽपेक्षा । तदेते स्वतन्त्राः सन्तस्तद्व्यापारे जगत्सर्जनेऽपि प्रवर्तेरन्निति प्राप्ते,

प्रत्याभिधीयते—

(३)नित्यत्वादनपेक्षत्वात् श्रुतेस्तत्प्रक्रमादपि ।
ऐकमत्याच्च विदुषां परमेश्वरतन्त्रता ॥

जगत्सर्गलक्षणं हि कार्यं कारणैकस्वभावस्यैव हि भवतु आहो कार्यकारणस्वभावस्य । तत्रोभयस्वभावस्य स्वोत्पत्तौ मूलकारणापेक्षस्य पूर्वसिद्धः परमेश्वर एव कारणमभ्युपेतव्य इति स एवैकोऽस्तु जगत्कारणम् तस्यैव नित्यत्वेन स्वकारणानपेक्षस्य क्लृप्तसामर्थ्यात् । कल्प्यसामर्थ्यास्तु जगत्सर्जनं प्रति विद्वांसः । न च जगत्स्रष्टृत्वमेषां श्रूयते, श्रूयते त्वत्रभवतः परमेश्वरस्यैव । तमेव प्रकृत्य सर्वासां तच्छ्रुतीनां प्रवृत्तेः । अपि च समप्रधानानां हि न नियमवदैकमत्यं दृष्टमिति यदैकः सिसृक्षति तदैवेतरः संजिहीर्षतीत्यपर्यायेण सृष्टिसंहारौ स्याताम् । न चोभयोरपीश्वरत्वं व्याघातादेकस्य(४) तु तदाधिपत्ये तदभिप्रायानुरोधिनां सर्वेषामैकमत्योपपत्तेरदोषः । तत्रागन्तुकानां कारणाधीनजन्मैश्वर्याणां पृच्छ्यमाणाविशेषतया समत्वान्नित्यैश्वर्यशालिनो गृह्यते तेभ्यो विशेष इति स एव तेषामधीश इति तत्तन्त्रा विद्वांस इति परमेश्वरव्यापारस्य सर्गसंहारस्य नेष्यते ॥ १७ ॥

पूर्वपक्षिणोऽनुशयबीजमाशङ्क्य निराकरोति—

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

यतः परमेश्वराधीनमैश्वर्यं तस्मात्ततो न्यूनमणिमादिमात्रं स्वाराज्यं न तु जगत्स्रष्टृत्वम् । उक्तान्न्यायात् (५)॥ १८ ॥

---

(१) ननूदकाहरणादि कारणानपेक्षं स्यात् ऐश्वर्यं तूपजीव्यादुपजीवकस्य न्यूनमिति विशेषव्याप्तिमाशंक्य व्यभिचारं तत्र प्रदर्शयति नचेति ।

(२) ननूपजीवकस्य विद्योपजीव्यसमा भवेन्नतु नियन्तृकर्तृत्वाद्यैश्वर्यमित्याशंक्याह दुष्टेति ।

(३) समप्राधान्यं हि विशेषानिर्णये भवति, अत्र त्वस्ति साधकेभ्यो ईश्वरस्य विशेषनिर्णयहेतुरित्यभिप्रेत्य सिद्धान्तमाह नित्यत्वादिति । ईश्वरजगत्कर्तृत्वाद्यैश्वर्यस्य नित्यत्वात् विदुषां स्वकार्ये ईश्वराधीनतेत्यर्थः । अत एवानपेक्षत्वात्तत्सापेक्षाणां तु जीवानां जगत्स्रष्टृत्वादेरीश्वरप्राप्त्यन्यथानुपपत्त्या कल्प्यत्वात्क्लृप्तस्य बलीयस्त्वादिति । एवं आत्मन आकाशः सम्भूत इति जगत्स्रष्टृत्वश्रुतेः सदेव सोम्येत्यादिना तस्यैव प्रक्रमादीश्वराधीनत्वाभ्युपगमे एवैकमत्यलाभाच्चेति श्लोकार्थः । क्रमशो श्लोकं व्याचष्टे जगदिति ।

(४) स्वपक्षे जगत्सर्गोपपत्तिमाहैकस्येति । (५) नित्यत्वादेः ।

## विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

(१)एतावानस्य महिमेति विकारवर्ति रूपमुक्तम्, ततो ज्यायांश्चेति निर्विकारं रूपम्, तथा पादोऽस्य विश्वा भूतानीति विकारवर्ति रूपं, त्रिपादस्यामृतं दिवीति निर्विकारमाह रूपम् ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

दर्शयतश्चापरे श्रुतिस्मृती निर्विकारमेव रूपं भगवतस्ते च पठिते । (२)एतदुक्तं भवति । यदि मूषे सगुणे ब्रह्मण्युपास्यमाने यथा तद्गुणस्य निरवग्रहत्वमपि वस्तुतोऽस्तीति निरवग्रहत्वं च विदुषा प्राप्तव्यमिति तदनेन व्यभिचार्यते, यथा सविकारे ब्रह्मण्युपास्यमाने वस्तुतः स्थितमपि निर्विकाररूपं न प्राप्यते, तत्कस्य हेतोः,? तत्क्रतुत्वादुपासकस्य । तथा तद्गुणोपासनया वस्तुतः स्थितमपि निरवग्रहत्वं नाप्यते, तत्त्वोपासनासु पुरुषक्रतुत्वात् । (३)उपासकस्य तत्क्रतुत्वं च निरवग्रहत्वस्योपासनविध्यगोचरत्वाद्विध्यधीनत्वाच्चोपासनासु पुरुषस्वातन्त्र्याभावात्, स्वातन्त्र्ये वा प्रातिभत्वप्रसङ्गादिति ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

न केवलं स्वाराज्यस्येश्वराधीनतया जगत्सर्जनम् साक्षाद्भोगमात्रेण तेन परमेश्वरेण साम्याभिधानादपि व्यपदेशलिङ्गादिति । भूतान्यवन्ति प्रीणयन्तीति भोजयन्तीति यावत् । सूत्रान्तरावतारणाय शङ्कते—"नन्वेवं सति सातिशयत्वादि"ति । (पृ० ९७९ पं० ४) सह परमेश्वरस्यातिशयेन वर्तत इति विदुष ऐश्वर्यं सातिशयम्, यच्च सातिशयं तच्च कार्यं यथा लौकिकमैश्वर्यम्, तदनेन कार्यत्वमुक्तम् । तथा च कार्यत्वादन्तवत्प्राप्तमिति तच्च न युक्तमानन्त्येन तद्विदुषां तत्र प्रवृत्तेरिति ॥ २१ ॥

अत उत्तरं पठति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

किमर्चिरादिमार्गेण ब्रह्मलोकप्राप्तानामैश्वर्यस्यान्तवत्त्वं त्वया साध्यते, आहो स्विच्चन्द्रलोकादिवद् ब्रह्मलोकादेतल्लोकप्राप्तिर्मुक्तेरन्तवत्त्वम् । तत्र पूर्वस्मिन् कल्पे सिद्धसाधनम्, उत्तरत्र तु श्रुतिस्मृतिविरोधः, तद्विधानां च क्रममुक्तिप्रतिपादनादिति । तत्त्वमसिवाक्यार्थैकोपासनापरान्प्रत्याह—"सम्यग्दर्शनविध्वस्ततमसामि"ति (पृ० ९८० पं० २) (४)द्विधाऽविद्यातमः, निरुपाधिब्रह्मसाक्षात्कारस्तत्त्वदर्शनम् । न चैतन्निर्वाणं स्वरूपावस्थानलक्षणं कार्यं येनानित्यं स्यादित्याह—"नित्यसिद्धे"ति ॥ २२ ॥

(५)मंक्त्वा वाचसुरेन्द्रवृन्दमखिलाविद्योपधानातिगं
येनाम्नायपयोनिधेर्नयमथा ब्रह्मामृतं प्राप्यते ।

---

(१) सहस्रशीर्षेत्यादेरस्य महिमा विभूतिर्न तु स्वरूपमित्यर्थः ।

(२) विकारावर्तीति दर्शयतश्चेति च सूत्रद्वयस्याभिप्रायमाह एतदुक्तमिति ।

(३) ननु सगुणोपासनासु तर्हि किमित्युपासकस्य गुणगतं निरङ्कुशत्वमुपास्यं न भवति, तत्राहोपासकस्येति । नहि निरवग्रहसत्यकामत्वादिगुणकमीश्वरमुपासीतेति श्रुतिरस्ति, सा हि सत्यकामत्वादिगुणमुपासीतेत्येवंरूपेत्यर्थः । (४) कार्यकारणरूपा ।

(५) श्रोतृणामुत्साहार्थं सकलशास्त्रार्थं संगृह्णाति मंक्त्वेति । येन ग्रन्थसन्दर्भेण वाचसुरेन्द्रसमुदायं

सोऽयं शाङ्करभाष्यजातविषयो वाचस्पतेः सादरं
सन्दर्भः परिभाव्यतां सुमतयः स्वार्थेषु को मत्सरः ॥ १ ॥
अज्ञानसागरं तीर्त्वा ब्रह्मतत्त्वमभीप्सताम् ।
नीतिनौकर्णधारेण मयाऽपूरि मनोरथः ॥ २ ॥
यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः ।
यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ॥ ३ ॥
समचैषं महत्पुण्यं तत्फलं पुष्कलं मया ।
समर्पितमथैतेन प्रीयतां परमेश्वरः ॥ ४ ॥

नृपान्तराणां मनसाप्यगम्यां
भ्रूक्षेपमात्रेण चकार कीर्तिम् ।
कार्तस्वरासारसुपूरितार्थ-
सार्थः(१) स्वयं शास्त्रविचक्षणश्च ॥ ५ ॥
नरेश्वरा यच्चरितानुकार-
मिच्छन्ति कर्तुं न च पारयन्ति ।
तस्मिन् महीपे महनीयकीर्तौ
श्रीमन्नृगेऽकारि मया निबन्धः ॥

ॐ तत्सद्ब्रह्मार्पणमस्तु ॥

इति श्रीवाचस्पतिमिश्रविरचिते शाङ्करभगवत्पादभाष्यविभागे भामत्यां चतुर्थस्या-
ध्यायस्य चतुर्थः पादः समाप्तः ॥

समाप्तश्चायं चतुर्थोऽध्यायः ॥



युक्तिखड्गधाराभिर्भक्त्वा न्यायरूपग्रन्थदण्डेन विलोडितादाम्नायदुग्धसमुद्रादुद्भूतमाखिलाविद्योपाधिशून्यं ब्रह्म मृतं श्रोतृभिः प्राप्यते सोऽयं शाङ्करभाष्यव्याख्यानविषयो वाचस्पतेर्ग्रन्थसन्दर्भो हे सुमतयः युष्माभिः सादरं चिन्तनीयः. नैवं मन्यध्वमस्मत्तुल्यकृतिनाऽनेन ग्रन्थेन किं करिष्याम इति यतः स्वार्थेषु को मत्सरः विशुद्धसम्प्रदायविमलधियौ न तादृश्यौ युष्माकं यादृश्यावावयोरित्यर्थः ।

(१) सुवर्णानवरतवर्षण( दान )पूरितार्थयाचकः ।

त्रयीरत्नाङ्कभूवर्षे ढुण्ढिराजेन शास्त्रिणा न्यायाचार्यकृपालब्धवैदुषीविभवान्वितु ॥
छात्राणामुपकारार्थं टिप्पण्या समलंकृता भामती भास्वती भूयाद्विश्वेशचरणार्पिता ॥ १ ॥



प्राप्तिस्थानम्—

# जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।



टी. जी. मल्लाराध्य एवं,
स्व, वेदा... द्वारा
"झा" का अर्पण,
१५-७-७४

१०६ न्यायमञ्जरी। जयन्तभट्टकृता। न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता। द्वितीयोभागः। [ न्या० वि० १९ ] रु० ३—०

१०७ शारदातिलकम्। श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम्। ( तन्त्रशा० वि० १ ) रु० ६-०

१०८ मन्त्रार्थदीपिका। म० म० श्रीशत्रुघ्नविरचिता। ( वेद० वि० ७ ) रु० २—०

१०९ शब्दशक्तिप्रकाशिका। श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता। श्रीकृष्णकान्तविद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया प्रबोधिकया च समलङ्कृता। न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रिकृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकाभिश्च सहिता। ( न्या० वि० १६ ) रु० ८

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पणीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया "तत्त्ववैशारदी"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुज्ज्वलितेन मधुपुरीपकामिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योतितम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, ( योग वि० ३ ) रु० ४—०

१११ सारस्वत व्याकरणम्। अनुभूतिस्वरूपाचार्य्यप्रणीतम्। श्रीचन्द्रकीर्त्तिसूरिप्रणीतचन्द्रकीर्तिनाम्न्या सुबोधिकया व्याख्यया, श्रीवासुदेवभट्टविरचितप्रसादाख्यटीकया च समन्वितम्। कवितार्किकोत्कल-यात्क श्रीमदनकिशोरशास्त्रिणा निर्मितया मनोरमाविवृत्या च समुद्भासितम्। पूर्वार्द्धम्। ( व्या. वि. १३ ) रु० १—८

११२ सामान्यनिरुक्ति-गादाधरी-गूढार्थतत्त्वालोकः। सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डन-पं० कुलपति झोपाख्य-श्रीधर्मदत्त [ श्रीबच्चा झा ] शर्मविरचितः। ( न्या. वि. १० ) रु० ...

११३ ... न्यायाचार्य पं० शिवदत्तमिश्र ...कृत गंगाख्यव्याख्या टिप्पणीसहिता। ( न्या. वि. ... ) रु० १—८

११४ मनुस्मृतिः। कुल्लूकभट्टकृतमन्वर्थमुक्तावलीव्याख्यया काशीस्थगवर्नमेन्ट संस्कृतकालेज व्याकरण-मीमांसा-धर्मशास्त्राध्यापकेन पं० नेने इत्युपाह्व गोपालशास्त्रिसंगृहीतपरिशिष्टटिप्पण्यादिभिरपि सहिता। अत्यन्तशुद्धसंस्करणम्। सम्पूर्णम्। ( धर्म्मशास्त्र. वि. ) रु० २—४

११५ ...विवादः। श्रीमद्गदाधरभट्टाचार्यचक्रवर्तिविरचितः। वैयाकरणशिरोमणि-... [ शास्त्रार्थ-परीक्षापयोगि ] शास्त्रार्थ... ( न्या. वि. ... ) रु० ...

११६ सामती। ...सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता। न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या ... द्वितीयाध्यायस्य द्वितीयपादान्तः प्रथमो भागः। ( ... वि. ... ) रु० १—८

११७ जन्मपत्रदीपकः। सोदाहरण-सटिप्पण-हिन्दीटीकासहितः। ... पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः। ( ज्यो. वि. ५ ) रु० ०—८

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।